THE ADYAR LIBRARY SERIES

VOLUME NINETY-THREE

# विष्णुस्मृतिः

## केशववैजयन्तीसहिता

# VIṢṆUSMṚTI

WITH THE
COMMENTARY KEŚAVAVAIJAYANTĪ
OF NANDAPAṆḌITA

[ II ]

EDITED BY

PANDIT V. KRISHNAMACHARYA



*DEDICATED TO THE LATE*

PROFESSOR K. V. RANGASWAMI AIYANGAR

THE ADYAR LIBRARY AND RESEARCH CENTRE

## त्रयस्त्रिंशोऽध्यायः

**अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति ॥ १ ॥ परिग्रहप्रसङ्गाद्विशेषेण गृहाश्रमिणः[1] ॥ २ ॥ [2]तेनायमाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषु प्रवर्तते[3] ॥ ३ ॥**

अतिक्रान्ते आचारकाण्डे ब्रह्मचारित्रतलोपप्रायश्चित्तमुक्तम्। तत्प्रसङ्गात् बुद्धिस्थं प्रायश्चित्तकाण्डं प्रारिप्सुः तदुपोद्घातं त्रयस्त्रिंशेनाह। अथेति प्रकरणान्तरप्रस्तावः। पुरुषस्य मनुष्यस्य कामादिसंज्ञकं सुघोरं दुर्जयं रिपुत्रयं भवतीति प्रायोवादः, दोषबहुलत्वान्मनुष्याणाम्। तत्र कामोऽभिलाषः। क्रोधो जिघांसाहेतुरमर्षः। लोभो लिप्सातिशयः ॥ १ ॥

परिग्रहो गृहदारादिस्वीकारः। तत्र प्रसङ्गोऽभिनिवेशः। तस्माद्धेतोः गृहाश्रमिणो विशेषेणान्यापेक्षयातिशयेन कामादयो भवन्तीति स्वभावानुवादः ॥ २ ॥

कामादिकार्यतां प्रदर्शयन्नेव पातकगणस्योद्देशमाह। तेन कामादिरिपुत्रयेणाक्रान्तोऽभिभूतोऽयं मनुष्योऽतिपातकादौ प्रवर्तते। अतिशयेन पातयति नरके इत्यतिपातकम्। अतिशयश्च कल्पोपभोग्यत्वम्। तेन कल्पोपभोग्यमतिपातकम्। मन्वन्तरोपभोग्यं महापातकम्; मन्वन्तरोपभोग्यमेवानुपातकम्। चतुर्युगोपभोग्यमुपपातकमिति वक्ष्यति। अत्र प्रथमोद्देशान्नरकातिशयात् प्रायश्चित्तातिरेकाच्च महापातकादतिपातकं गरीयः; महारुद्रादतिरुद्र इव। तथाच **हारीतः**—"पञ्चविधमशुभं भवति प्रासङ्गिकोपपातकपातकमहापातकात्यन्तपातकानि" इति। मूलवचने पूर्वपूर्वं गरीयः। अत्र तूत्तरोत्तरमिति। प्रासङ्गिकं जातिभ्रंशकरादिपञ्चकम्। पातकमनुपातकपर्यायः;

> "महापातकतुल्यानि पापान्युक्तानि यानि तु।
> तानि पातकसंज्ञानि तन्न्यूनमुपपातकम् ॥"

इति **स्मरणात्**।

यत्तु "स्त्रीगोवृषलवैश्यक्षत्रियघाती सोमविक्रयी शूद्रसहभोजी कन्यादूष्यगारदाही वृषलीपतिरग्न्युत्सादी चेति पातकानि" इति **पैठीनसिना** पृथक् पातकानि परिगणितानि, तत् पापपर्यायत्वेन; न संज्ञाकरणाय;

[1] गृहाश्रमिणाम्—क. ग. [2] तेनायमतिक्रान्तातिमहापातकोप—ठ. [3] वर्तते—ठ.

उपपातकादिषु पाठेन तत्संज्ञावरुद्धत्वात् । न च तुल्यकालनरकफलत्वादेकप्रायश्चित्तत्वाच्च महापातकानुपातकयो-रभेदापत्तिः, नरकानन्तरोत्पन्नयोनिविशेषप्राप्तेर्भेदकत्वात् ॥ ३ ॥

**जातिभ्रंशकरेषु संकरीकरणेष्वपात्रीकरणेषु ॥ ४ ॥ मलावहेषु[1] प्रकीर्णकेषु[2] च ॥ ५ ॥**

किंच एते त्रयः संज्ञाशब्दाः योगरूढाः । तत्र जातेरभिजनसमूहाद् भ्रंशम् अधः पातं कुर्वन्तीति जातिभ्रंशकराणि । असंकरं ब्राह्मणादिवर्णमपि संकरं संकरसमानधर्माणं कुर्वन्तीति संकरीकरणानि । अनपात्रं प्रतिग्रहाद्यर्हमप्यपात्रं प्रतिग्रहाद्यनर्हं कुर्वन्तीत्यपात्रीकरणानि ॥ ४ ॥ पूर्ववदेतावपि योगरूढौ शब्दौ; मलमा-वहन्तीति मलावहानि । अमलिनं मलिनं कुर्वन्तीति मलिनीकरणानीति वा संज्ञान्तरम् । प्रकर्षेण कीर्णं बहुलमनायासोपपन्नं प्रकीर्णकम्; तेषु च प्रवर्तते ॥ ५ ॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा[3] लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ ६ ॥**

**इति [4]श्रीविष्णुस्मृतौ त्रयस्त्रिंशोऽध्यायः**

उक्तार्थोपसंहारेण तत्त्यागमाह । कामादित्रिकमिदमुक्तपातकोपजननेन तत्फलीभूतवक्ष्यमाणनरकस्य द्वारं प्रवेशनोपाय इत्यनुवादः । तस्मादेतत् त्रयं त्यजेदिति विधिः ॥ ६ ॥

**इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[6]श्रीरामपण्डितात्मजश्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ [7]श्रीमत्यां वैजयन्त्यां त्रयस्त्रिंशोऽध्यायः**

1 च added in च, ठ. 2 अप्रकीर्णेषु वा—ज. 3 क्रोधश्च लोभश्च—ठ.
4 वैष्णवे धर्मशास्त्रे रिपुत्रयप्रकरणं त्रयस्त्रिंशम्—ज, ठ; वैष्णवे त्रयस्त्रिंशोध्यायः—झ.
5 From श्रीमन्महा up to पण्डितकृतौ omitted in घ, प.
6 श्री omitted in ग.
7 श्रीमत्यां omitted in घ.

# चतुस्त्रिंशोऽध्यायः

**मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ॥ १ ॥**

**अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।**
**न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन ॥ २ ॥**

इति [1]श्रीविष्णुस्मृतौ चतुस्त्रिंशोऽध्यायः

उद्दिष्टातिपातकस्य स्वरूपं प्रायश्चित्तं च चतुस्त्रिंशेनाह । माता जननी; मात्यस्यां गर्भ इति व्युत्पत्तेः । दुहिता सवर्णोढस्त्रीप्रसूता । स्नुषा सवर्णौरसपुत्रपत्नी सवर्णा । एतासां गमनं प्रत्येकमतिपातकम् । हारीतोऽप्याह—"मातृगमनं दुहितृगमनं स्नुषागमनं चेत्यतिपातकानि" इति । इतिकारात् भगिनीगमनं च ;

"जनन्यां च भगिन्यां च स्वसुतायां तथैव च ।
स्नुषायां गमनं चैव विज्ञेयमतिपातकम् ॥"

इति **कात्यायनस्मरणात्** ॥ १ ॥

तत्र प्रायश्चित्तमाह । उक्तपातकयोगिन एवातिपातकिनः, नातिशयितपातकान्तरयोगिन इत्यभिप्रेत्यैतच्छब्दः । तेन चैत एव चत्वारोऽप्यतिपातकिनोऽग्निप्रवेशं कुर्युः । यतः कथंचन ज्ञानतोऽज्ञानतः सकृदसकृच्च कृतेऽस्मिन् पापे तेषाम् अतिपातकिनाम् अन्या अग्निप्रवेशातिरिक्ता व्रतादिरूपा निष्कृतिः प्रायश्चित्तं नास्ति । अत एव **संवर्तः**—

"मातरं यदि गच्छेत्तु स्नुषां वा पुरुषाधमः ।
न तस्य निष्कृतिः शक्या स्वकां दुहितरं तथा ॥"

इति । तथाशब्दात् भगिनीमपि । न निष्कृतिः ; अनेन शरीरेणेत्यर्थः । ननु

"मातरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा ।
[2]एतास्तु मोहितो गत्वा त्रीणि कृच्छ्राणि संचरेत् ।
चान्द्रायणत्रयं कुर्याच्छिश्नच्छेदेन शुध्यति ॥"

[1] वैष्णवे धर्मशास्त्रे अतिपातकप्रकरणं चतुस्त्रिंशम्—ज, ठ; वैष्णवे चतुस्त्रिंशोऽध्यायः—झ
[2] एतासु—च.

इति **पराशरस्मरणेनाज्ञानतो** व्रतरूपप्रायश्चित्ताभिधानादसंगतमिदमिति चेत्; मैवम्; तस्य गमनप्राक्कालीन-स्मरणादिविषयत्वात्। यथोक्तम्—

"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥"

इति। तत्राद्यं व्रतमल्पत्वादप्रवर्तकस्मरणादिपञ्चविधापराधविषयम्। द्वितीयं पूर्वस्माद्गुरुत्वात् प्रवर्तकसंकल्पादि-विषयम्। तृतीयं महत्त्वात् क्रियानिर्वृत्तिविषयमिति न विरोधः।

ननु एवमपि शिश्नच्छेदे पाक्षिकजीवनसंभवात् 'नानेन शरीरेण' इति विरुद्धमेवेति चेत्; न; तस्य लिङ्गप्रवेशमात्रविषयत्वकल्पनात्। अतः सर्वस्मिन्नपि पक्षे अग्निप्रवेश एवातिपातकिनाम्। तथाच **भविष्यपुराणे**—"अतिपातकयुक्तानां प्राणान्तिकमुदाहृतम्" इति। **कात्यायनोऽपि**—"अतिपातकिन-स्त्वेते प्रविशेयुर्हुताशनम्" इति। **हारीतोऽपि**—"सद्योऽग्निप्रवेशादतिपातकिनः" इति; पूयन्त इत्यनुष-ज्यते। सद्योऽतिपातकित्वं सकृद्गमनेनापीति तत्राप्यग्निप्रवेश इति व्याख्येयम्। न सद्योऽग्निप्रवेशादिति व्याख्येयम्; तस्य, "न भुञ्जीतानुपस्थितः" इति सामान्येनैव प्राप्तत्वादतिपातकिपदवैयर्थ्यात्[1]। नापि सद्यः पूयन्त इति; मरणात् सद्यः शुद्धेरर्थसिद्धत्वात्। तस्मादुक्तमेव साधु। **षट्त्रिंशन्मतेऽपि**—

"पितृभार्यां तु विज्ञाय सवर्णां योऽभिगच्छति।
जननीं चाप्यविज्ञाय नामृतः शुद्धिमाप्नुयात् ॥"

इति। जननी दुहित्राद्युपलक्षणम्;

"मातरं सुतपत्नीं च स्वसारं स्वसुतां तथा।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥"

इति **चतुर्विंशतिमतात्**। कामतो **वासिष्ठम्**—"निष्कालको घृताभ्यक्तो गोमयाग्निना पादप्रभृत्यात्मानम-वदाहयेत्" इति। अत्र मात्रादिशब्दानां संबन्धिशब्दतया यत्प्रतियोगिकं मातृत्वादि, तद्गमने तासामपि तदेव पातकं तदेव च प्रायश्चित्तमिति ध्येयम्;

"एवं दोषश्च शुद्धिश्च पतितानामुदाहृता।
स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः ॥"

इति **कात्यायनस्मरणात्**। यत्तु

[1] पदं omitted in ग, च.

" पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥ "

इति ; यच्च

" सखिभार्याकुमारीषु सयोनिष्वन्त्यजासु च ।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥ "

इति ; यच्च

" पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ।
दुहिताचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ।
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते ॥ "

इति योगिनारदाभिहितमहापातकत्वमस्या सुतादिगमनस्य गुरुतल्पतुल्यत्वं प्रतीयते ; यच्च " छित्वा लिङ्गं वधस्तस्याः सकामायाः स्त्रिया अपि " " शिश्नस्योत्कर्तनात् तत्र नान्यो दण्डो विधीयते " इति योगिनारदाभ्यां[1] प्रायश्चित्तमुक्तम् ; तदसवर्णदुहितृसवर्णसापत्नभगिन्यनौरसपुत्रभार्याविषयं द्रष्टव्यम् । " मातुः सपत्नीं भगिनीम् " इति साहचर्यात् भगिनीमातृजायाः[2] " सगोत्रासु[3] सुतस्त्रीषु " इति साहचर्याच्च गोत्रमात्रसंबन्धानौरसपुत्रभार्यायाश्च सिद्धिः ।

यच्च

" चण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम् ।
शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत् ॥ "

इति बृहद्यमोक्तं चान्द्रायणम्[4], यश्च—

" भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् ।
एता गत्वा स्त्रियो मोहात् तप्तकृच्छ्रं समाचरेत् ॥ "

इति संवर्तोक्तस्तप्तकृच्छ्रः, तदुभयमप्यसवर्णादिष्वेवाकामतो रेतःसेकादर्वाङ् निवृत्तौ द्रष्टव्यम् । एवमन्यान्यपि व्यवस्थाप्यानि ॥ २ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीलक्ष्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[6]श्रीरामपण्डितात्मज[6]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां चतुस्त्रिंशोऽध्यायः

[1] च added in ग.
[2] जायाः—ग.
[3] स्वसुतस्त्रीषु—ग.
[4] चान्द्रायणं omitted in ख, ग.
[5] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[6] श्री omitted in ग.

## पञ्चत्रिंशोऽध्यायः

**ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनमिति महापातकानि ॥ १ ॥ [1]तत्संयोगश्च ॥ २ ॥**

महापातकस्वरूपं प्रायश्चित्तं च पञ्चत्रिंशेनाह । ब्राह्मणस्य हत्या हननं प्राणवियोगफलको व्यापारः साक्षात्परंपरासाधारणः प्रायश्चित्ततारतम्यात् तरतमभावापन्नः । यथा **आपस्तम्बः**—"प्रयोजयितानुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनः । यो भूय आरभते तस्मिन् फलविशेषः" इति । तत्र स्वतन्त्रः कर्ता । तत्प्रवर्तकः प्रयोजकः । प्रवृत्तप्रवर्तकोऽनुमन्ता । चकारात् अनुग्राहकनिमित्तिनोर्ग्रहणम् । वधे सहायोऽनुग्राहकः । मरणहेतुमन्यूत्पादको निमित्तीति । तत्र **मनुः**—

"बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् ।
यद्येको घातयेत् तत्र सर्वे ते घातकाः स्मृताः ॥"

इत्यनुग्राहकं लक्षयति । निमित्तिनं च **विष्णुराह**—

"आक्रुष्टस्ताडितो वापि धनैर्वा विप्रयोजितः ।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातिनम् ॥
ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव वा[2] ।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम् ॥"

इति । एवं पञ्चविधो वधी तदवान्तरभेदाश्चान्यतोऽवगन्तव्याः । तानाह **पैठीनसिः**—

"हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादकः ।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ।
उपेक्षकः शक्तिमांश्च दोषवक्तानुमोदकः ।
अकार्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेत् ॥"

[1] तत्सङ्गश्च—ज, ठ.  [2] च—ख, ग, घ.

इति। व्यापाराधिक्ये दोषाधिक्यं तन्न्यूनत्वे दोषन्यूनतेति प्रायश्चित्ते गुरुलघुभावः। विकर्मिणामिति सामान्योपादानात् पापमात्रेऽयं कर्तृभेदोऽध्यवसेयः। क्वचित् दोषाभावमाह विष्णुः—

"उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत् पुनः।
तस्मिन् मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते॥"

इति। भविष्येऽपि—

"पुत्रः शिष्यस्तथा भार्या शासनश्चेद्विनश्यति।
न शास्ता तत्र दोषेण लिप्यते सुरसत्तम॥"

इति। तथा,

"असंबन्धेन यः कश्चिद् द्विजः प्राणान् परित्यजेत।
तस्यैव तद्भवेत् पापं न तु यं परिकीर्तयेत्॥"

इति। तथा आततायिवधेऽपि न दोषः;

"गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥"

इति विष्णुपुराणात्[1]। अस्यापवादः—"नाततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः" इति सौमन्तवः। उपकारकृतौ मरणेऽपि न दोषः; "क्रियमाणोपकारे तु मृते विप्रे न पातकम्" इति योगिस्मरणात्। तथा "बन्धने गोचिकित्सार्थे" इत्यपि वक्ष्यते।

सुरा द्वाविंशाध्यायोक्ता त्रिविधा। तस्याश्चातुर्वर्णिकैः पानं कण्ठाधोनयनम्। तच्च साक्षात् द्रव्यान्तरसंसृष्टाया[2] अल्पाया अधिकाया वा। एतच्च चातुर्वर्णिकाभिप्रायेण। ब्राह्मणानां तु मद्यपानमात्रं महापातकम्; "ब्रह्महा मद्यपः स्तेनः" इत्युपक्रम्य "एते महापातकिनः" इति योगिना मद्यपानमात्रस्य महापातकत्वाभिधानात्। तच्च "नित्यं मद्यं ब्राह्मणो वर्जयेत्" इति निषेधात् "अकार्यमन्यत् कुर्याद्वा ब्राह्मणो मदमोहितः" इति तद्धेतोश्च ब्राह्मणमात्रविषयं पर्यवस्यति; इतरेषां तदभ्यनुज्ञानात्। एवं च

"अनुपेतस्तु यो विप्रो मद्यं मोहात् पिबेद्यदि।
तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता पिता तथा[3]॥"

इति प्रायश्चित्तमुपपद्यते; महापातकत्वात्; अन्यथा पातकान्तराणां कामचारत्वेनोक्तप्रायश्चित्तासंगतेः[4]। तथाच देवलः—"स्यात् कामचारवादोक्तिर्महतः पातकादृते" इति। न चानुपेतवाक्ये मद्यशब्दः सुरापरः; नित्यवाक्येऽपि तथा संभवात्; सुरापाने प्रायश्चित्ताम्नानात्; कृच्छ्रत्रयासंगतेश्च। न चास्योपपातकत्व-

[1] स्मरणात्—ख, ग.
[2] संस्पृष्टायाः—ख.
[3] पिताथवा—ग.
[4] असंगतिः—ख.

स्मरणविरोधः; क्षत्रियादीनामभ्यनुज्ञानेनैव विप्राणां महापातकत्वेन मूर्धावसिक्तादीन् प्रत्युपपातकत्वोपपत्तेः। तान् प्रति तन्निषेधाभ्यनुज्ञानयोरन्यतरस्याप्यभावादिति सिद्धं विप्राणां मद्यपानमात्रं महापातकमित्यास्तां विस्तरेण। तदेतत् स्पष्टीकृतं **भविष्ये**—

"प्रतिषेधः सुरापाने मद्यस्य च सुराधिप।
द्विजोत्तमानामेवोक्तः सततं गौतमादिभिः॥"

इति।

ब्राह्मणस्वामिकस्य सुवर्णस्य हरणमपहारः शास्त्रीयस्वत्वहेतुं विनोपादानम्। तच्च साक्षात् द्रव्यान्तर-संसृष्टस्य वा। ब्राह्मणग्रहणात् ब्राह्मणीसुवर्णस्तेयं न महापातकम्; ब्राह्मणीवधवत् इति **अपरार्कः**। तत्र ब्राह्मणीवधस्योपपातकत्वोक्त्या तन्निवृत्तिः। न प्रकृते; तदभावात्। सुवर्णशब्दश्चात्र जातिमात्रवचनः; "रुक्मस्तेयी सुरापश्च" "हेमहारी च कुनखी" "ब्राह्मणस्वर्णहारी तु" "रुक्मस्तेयोऽथ विप्रहा" "रुक्मस्तेयसमं स्मृतम्" इत्यादि**शङ्खयोगिमनुविश्वामित्रादिभिः** जातिमात्रोपादानात्। न परिमाण-विशिष्टद्रव्यवचनः; गौरवात्; "स्वर्णं सुवर्णं कनकम्" इत्यादिकोशविरोधाच्च। न च "ते सुवर्णस्तु षोडश" इति परिभाषया विशिष्टवचनत्वम्; हेमरुक्मादिशब्देषु तदप्रवृत्तेः; स्वसंज्ञया विधानाभावात्। उक्तं च "इको गुणवृद्धी" इत्यत्र "गुणवृद्धी स्वसंज्ञया विधीयमाने इक एव स्थाने स्तः" इति। एतेन संज्ञाकरणस्य विधिनिषेधमन्तरेणानुपपद्यमानत्वाद्विशिष्टार्थत्वमित्यप्यपास्तम्।

न च सुवर्णशब्दैकवाक्यतया हेमादिपदेष्वपि विशिष्टवचनत्वम्; हेमादिपदेष्वविशिष्टवचनत्वे हेमादिपदैकवाक्यतया सुवर्णपदस्यापि जातिवाचित्वसंभवेन विनिगमनाविरहात्। प्रत्युत जातिवैशिष्ट्ययोः संदिग्धस्य सुवर्णपदस्यासंदिग्धजातिमात्रवचनेन हेमादिपदेनैव पुरोडाशपदस्येवाग्नेयपदेन निर्णयोऽपि न्याय्यः। न च पुंलिङ्गं विनिगमकम्; 'ब्राह्मणसुवर्णहरणम्' "सुवर्णस्तेयकृद्विप्रः" इत्यादौ समासेन तदनिर्धारणात्। किंच विशिष्टवचनत्वे सुवर्णपर्यायो बिस्तशब्दोऽपि क्वचित् प्रयुज्येत; "सुवर्णबिस्तौ हेम्नोऽक्षे" इति **कोशात्**। न चासौ क्वचित् श्रूयते। श्रूयते तु हेमादिशब्द एव। ततोऽपि जातिवचनत्वम्। किंच "सुवर्णस्यापहरणे वत्सरं यावकी भवेत्" इत्यल्पप्रायश्चित्तासंगतिः। किंचिन्न्यून-सुवर्णविषयत्वे तु "ऊर्ध्वं प्राणान्तिकं ज्ञेयम्" इत्यस्यासंगतिः। किंचिन्न्यूनादूर्ध्वत्वविवक्षायामुभयत्र लक्षणापत्तिः। न चैवं माषाद्यपहारेऽपि महापातकत्वापत्तिः; इष्टापत्तेः।

"सुवर्णस्यापहरणे माषकेनापि पातकम्।
निष्कमात्रापहारे तु न विद्मः किं भविष्यति॥"

इति **षट्त्रिंशन्मते** निष्कापहारे महापातकाधिकपातकाभावेन विस्मयकरणात् माषापहार एव पातकशब्देन महापातकाभिधानात्। अन्यथा पापसामान्यादधिकस्य महापातकस्य निष्कापहारे संभवेन विस्मयकरणासंगतेः।

माषात् प्राक्तु न महापातकम्; वचनाभावात्। किंतूपपातकमेव; स्तेयसामान्यान्तर्भावात्। परिमाणविशेषेण प्रायश्चित्तविशेषो वाचनिक एव। किंच

"अपहृत्य सुवर्णं तु ब्राह्मणस्य सुराधिप।
पञ्चनिष्कप्रमाणं तु राजानं क्षत्रियो व्रजेत्॥"

इति **भविष्यपुराणीय**वचने सुवर्णशब्दादेव परिमाणलाभे पृथक्परिमाणवचनं विरुध्येत; प्रायश्चित्तविशेषादि-प्रयोजनान्तराभावात्। तस्मात् जातिवचन एवात्र सुवर्णशब्दः, न परिमाणविशिष्टहेमवचन इति। परिमाणं वचनान्तरादवगन्तव्यम्। तच्चाग्रे वक्ष्यत इति सर्वं सुस्थम्।

गुरुर्निषेक्ता; "स्यान्निषेकादिकृद्गुरुः" इति **त्रिकाण्डी**स्मरणात्। स च चातुर्वर्ण्यसाधारणः। तद्दारेषु सवर्णासवर्णसाधारणेषु गमनं योनौ रेतःसेकः। यत्तु "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति" इति **योगीश्वरीयं**, तन्न प्रकृतोपयोगि; मूर्खस्य पितुः क्षत्रियादेश्च वेदाध्यापकत्वाभावेनागुरु-त्वापातात्। यच्च

"निषेकादीनि कर्माणि यः करोति यथाविधि।
संभावयति चान्नेन स विप्रो गुरुरुच्यते॥"

इति **मानवम्**, तदपि न प्रकृतोपयोगि; अपोषके पितर्यव्याप्तत्वात्। एतेन

"आचार्यस्तु पिता ज्येष्ठो भ्राता चैव महीपतिः।
मातुलः श्वशुरस्त्राता मातामहपितामहौ।
वर्णश्रेष्ठः पितृव्यश्च पुंस्येते गुरवो मताः॥"

इति **देवलोक्तमपि** परास्तम्; निषेकरूपप्रवृत्तिनिमित्ताभावात्। न चानेकार्थत्वम्; "आचार्यपुत्रशिष्य-भार्यासु चैवम्" इत्यतिदेशासंभवात्। न चासवर्णस्त्रीविषयोऽतिदेश इति वाच्यम्; प्रमाणाभावादन्योन्याश्रयाच्च। आचार्यादीनां गुरुपदशक्यत्वेऽतिदेशस्यासवर्णस्त्रीविषयत्वम्; तद्विषयत्वे चातिदेशस्याचार्यादौ गुरुपद-शक्यत्वमिति। तस्मात् स्मृतीनां स्वशास्त्रे व्यवहारसिद्ध्यै परिभाषात्वम्। शक्तिग्रहस्तु कोशादेवेत्यलं बहुना। इतिकरणं पातकान्तरे महापातकत्वनिरासाय।

यत्तु **च्यवनेन** "ब्रह्महत्या सुरापानं गुरुतल्पगमनं सुवर्णहरणं द्विजातीनां महापातकानि। अदण्ड्यदण्डनं ब्रह्महत्या गुरुशय्यारोहणं युधि पलायनं क्षत्रियस्य। मानतुलानृतत्वं वैश्यस्य। मांसविक्रयो ब्रह्महत्या ब्राह्मणीगमनं कपिलाक्षीरपानं शूद्रस्य। तत्संपर्कात् पञ्चमहापातकम्" इत्यदण्ड्यदण्डनादीनां महापातकत्वमुक्तम्, तत् निन्दातिशयाय। अन्यथा क्षत्रियस्य सुरापानसुवर्णस्तेये, वैश्यस्य ब्रह्महत्यादिपञ्चकं, शूद्रस्य गुरुतल्पगमने सुवर्णस्तेये च महापातके न स्याताम्; वर्णव्यवस्थाभिधानात्। न च नेयं व्यवस्था,

किंतु पूर्वैः सहितानामुत्तरेषां [1]तत्तद्धर्मेषु महापातकत्वाभिधानमिति। तथात्वे ब्रह्महत्यादीनां पुनः परिगणनमनर्थकं स्यात्। तस्मात् पञ्चैव महापातकानि ॥ १ ॥ तत्र पञ्चममाह। यद्यपि महापातकानामेव प्रक्रमात् तच्छब्देन परामर्शो युज्यते, तथापि तत्संयोगस्य तत्त्वाविशेषात् तद्वत्संयोगो विवक्षितः। तद्वद्भिर्महापातकिभिः संयोगः संसर्गः, सोऽपि महापातकम् ॥ २ ॥

**संवत्सरेण [2]पतति पतितेन सहाचरन् ॥ ३ ॥ [3]एकयान-भोजनाशनशयनैः ॥ ४ ॥**

तत्र कालविधिमाह। तच्छब्देनैव पूर्वपरामर्शसिद्धौ पतितशब्दोपादानमुक्तातिरिक्तानामप्युपादानाय। ते च "ब्रह्महसुरापगुरुतल्पगमातृपितृयोनिसंबन्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च" इति **गौतमोक्ताः**। तेषामन्यतमेन सहैकीभावेनाचरन् व्यवहरन् संवत्सरेण पतति, द्विजातिकर्मानर्हो भवति; "द्विजातिकर्मभ्यो हानिः पतनम्" इति **गौतमस्मरणात्**। संवत्सरश्चात्र सावनोऽन्तरितदिवसगणनया षष्ट्यधिकशतत्रयाहोरात्रात्मको ज्ञेयः। संवत्सरेणेति वचनात् अर्वाक् न पातित्यम्; पञ्चाहादिसंसर्गेषु त्रिरात्रादिप्रायश्चित्तस्य वक्ष्यमाणत्वात्। पातित्यमुपपातकादेरप्युपलक्षणम्। तेनोपपातक्यादि-संसर्गे उपपातकित्वादि संवत्सरेण भवति; 'यश्च पापात्मा येन' इति वक्ष्यमाणत्वात्। तदपि कामतः संसर्गे;

"पतितेन सहोषित्वा जानन् संवत्सरं नरः।
मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत् ॥"

इति **देवलस्मरणात्**। अकामतस्तु न संवत्सरेण; किंतु संवत्सराधिकसंसर्गेण; "संसर्गमाचरन् विप्रः पतितादिष्वकामतः" इत्युपक्रम्य, "अब्दार्धमब्दमेकं वा भवेदूर्ध्वं तु तत्समः" इति **पराशरस्मरणात्**। ऊर्ध्वमल्पकालेनापि। वर्षद्वयेनेत्यन्ये। द्वित्रैः पतितैः पुनर्युगपत्संसर्गे षण्मासैरेव पतति;

"एभिः संसर्गमायाति यः कश्चित् काममोहितः।
षण्मासानब्दमेकं वा ब्रह्महत्याव्रतं चरेत् ॥"

इति **संवर्तस्मरणात्**। कामतः षण्मासादकामतोऽब्देनेति ज्ञेयम् ॥ ३ ॥

तमाचारमाह। यानादिभिः प्रत्येकमेकशब्दः संबध्यते। ततश्च पतितेन सहैकस्मिन् रथादावुपविश्य यानम्। एकस्यां पङ्क्तौ भोजनमेकभोजनम्; नैकपात्रभोजनम्; तत्र सद्यः पातित्यात्;

"यजनं योनिसंबन्धं स्वाध्यायं सहभोजनम्।
कृत्वा सद्यः पतन्त्येते पतितेन न संशयः ॥"

[1] तत्तद्वर्गेषु—ग.
[2] सह चरन् पतति—ज; पतितेन सह चरन् पतति—ठ.
[3] सह यानासनाभ्याम्—ज, झ, ठ,

इति देवलस्मरणात्। सहभोजनं सहैकपात्रभोजनम्। पर्यायेणैकपात्रभोजने तु संवत्सरेणैव। एकस्मिन्नासने पीठादावुपवेशनमेकासनम्। एकस्मिन् शयने खट्वादौ शयनमेकशयनम्। एतैः प्रत्येकं संवत्सराभ्यस्तैः पतति। यद्यप्यत्र द्वन्द्वनिर्देशात् साहित्यमवगम्यते, तथापि

" कृते संभाषणादेव त्रेतायां स्पर्शनेन च।
द्वापरे त्वन्नमादाय कलौ पतति कर्मणा॥ "

इति **पराशरोक्त्या** प्रत्येकमेव पातित्यहेतुत्वमितरनिरपेक्षाणाम्। अतश्च प्रत्येकविनियोगे प्रमाणाभाव एव साहित्यविवक्षा। यथा " दर्शपूर्णमासाभ्याम् " इत्यत्र। [1]तत्सद्भावे तु न साहित्यम्। यथा ' उदङ्मुखो मूत्रपुरीषे कुर्यात् ' इत्यादौ; " उदङ्मुखो मूत्रं कुर्यात् " इति **आपस्तम्बीयात्**। तच्चानन्तरे यौनादिवाक्ये स्पष्टम्। तस्मात् द्वन्द्वान्तस्थबहुवचनस्य प्रत्येकमन्वयादभ्यस्तानां पातकत्वमिति युक्तम्। अत एव **व्यासः**—" यो येन संपिबेद्वर्षं सोऽपि तत्समतामियात् " इति सहपानमात्रस्य संवत्सराभ्यासेन पातित्यमाह। युक्तं चैतदेव; निन्दितकर्माभ्यासस्यैव **गौतमेन** पातित्यहेतुत्वाभिधानात्।

" आसनाच्छयनाद्यानात् संभाषात् सह भोजनात्।
संक्रामन्तीह पापानि तैलबिन्दुरिवाम्भसि॥ "

इत्यादिना यादृशस्यैव पापहेतुत्वं, तादृशस्यैव पातित्यहेतुत्वमिति। अन्यथा " यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत् " इति क्वचित् त्रयाणां, मूलवाक्ये चतुर्णां, " संलापस्पर्शनिश्वाससहयानाशनासनात्[2] " इति, क्वचित् षण्णां द्वन्द्वश्रवणात् साहित्येऽननुगमापत्तेः। न च परिगणितसंसर्गाणामन्योपलक्षणतया सर्वसंसर्गाणां साहित्यं विवक्षितमिति वाच्यम्; अन्यतरसंसर्गाभावे पातित्यानुत्पादापत्तेः। तस्मात् यथोक्तमेव साधीयः। यानाद्युपलक्षणम्;

" एकशय्यासनं पङ्क्तिर्भाण्डं पक्वान्नमिश्रणम्।
याजनाध्यापने योनिस्तथा च सह भोजनम्।
नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सह॥ "

इति **बृहस्पतिस्मरणात्**। एकशय्यादयः पञ्च लघुसंसर्गाः संवत्सरेण, याजनादयश्चत्वारो गुरुसंसर्गाः सद्यः पातयन्ति। ' सह यानासनाभ्याम् ' इति क्वचिन्मूले पाठः। तत्राप्यन्येषामुपलक्षणम्॥ ४॥

## [3]यौनस्रौवमुख्यैः संबन्धैस्तु सद्य एव॥ ५॥

[1] तद्भावे तु—ग.
[2] पान for यान—ग.
[3] यौनात् स्रौवात् संबन्धात् सद्य एव—ज, ठ; यौनमौखस्रौवसंबन्धात् सद्य एव—ञ.

संवत्सरस्यापवादमाह । योनेर्भवो यौनः । स च पतितस्य पतिताया वा गमनम् । पतितात् पतिताय व कन्यादानदानमिति वा । स्रुवे भवः स्रौवः । स च पतितस्य पतितेन सह वा याजनम् । मुखे भवो मुख्यः । स च पतितस्य पतितेन सह वाध्यापनम् ; पतितेन सह वाध्ययनम् । द्वन्द्वनिर्देशात् सहैकपात्रभोजनं च । एतैः संबन्धैस्तु कामतः कृतैः सद्य एव पतति । नात्र संवत्सरापेक्षा । अकामतस्तु संवत्सरेण । यथोक्तं कौर्मे—

" याजनं योनिसंबन्धं तथैवाध्यापनं द्विजः ।
कृत्वा सद्यः पतेज्ज्ञानन् सह भोजनमेव च ॥
अज्ञानादथवा मोहात् कुर्यादध्यापनं द्विजः ।
संवत्सरेण पतति सहाध्ययनमेव च ॥ "

इति । अज्ञानं पतितत्वेन । मोहः शास्त्रार्थापरिज्ञानम् । अध्यापनं पूर्वोक्तानां त्रयाणामुपलक्षणम् । एतेन—

" संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनादेकशय्यैकभोजनात् ॥ "

इति हारीतवाक्यमपि व्याख्यातम् । अन्ये तु गुरुलघुयाजनादिभिः सद्यःसंवत्सरयोर्व्यवस्थामाहुः । एतेन 'ज्ञानतः सकृत्कृतेन येन पतनं तेनाज्ञानतो वारद्वयाभ्यस्तेन । अज्ञानतो वत्सरेण येन पतनं तेन ज्ञानतः षण्मासैः' इति प्राच्यव्यवस्था निरस्ता ; कौर्मवचनविरोधात् ;

" षाण्मासिके तु संसर्गे याजनाध्यापनादिना ।
एकत्रासनशय्याभिः प्रायश्चित्तार्धमाचरेत् ॥ "

इति बार्हस्पत्यवचनविरोधाच्च । यत्तु

" रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा ।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विशोधनम् ॥ "

इति संवर्तीयं, तदकामतः सकृद्गमने द्रष्टव्यम् ; संवत्सराभ्यासे पातित्यस्मरणात् । सत्यपि द्वन्द्वनिर्देशे यौनादिषु साहित्यमविवक्षितम्, कौर्मे प्रत्येकनिर्देशात् ; " यः पतितेन सह यौनस्रौवमुख्यानामन्यतमं संबन्धं कुर्यात् तस्याप्येतदेव प्रायश्चित्तम् " इति सुमन्तुस्मरणाच्च । ' यौनात् स्रौवान्मौखात् संबन्धात् सद्य एव ' इति पाठे स्पष्टमेव निरपेक्षाणां पातकत्वम् । यदा त्वज्ञानतो याजनादीनां द्वित्राणि सह करोति, तदा षण्मासैरेव पतति ;

" एभिः संसर्गमायाति यः कश्चित् काममोहितः ।
[1]षण्मासानब्दमेकं वा ब्रह्महत्याव्रतं चरेत् ॥

इति संवर्तस्मरणात् ॥ ५ ॥

[1] षण्मासमब्दमेकं—च.

**अश्वमेधेन शुध्येयुर्महापातकिनस्त्विमे ।**
**पृथिव्यां सर्वतीर्थानां तथानुसरणेन [1]च ॥ ६ ॥**

**इति [2]विष्णुस्मृतौ पञ्चत्रिंशोऽध्यायः**

उद्दिष्टानि पातकानि द्विधा—कामकृतान्यकामकृतानि चेति । तत्र कामकृतेषु महापातकेषु साधारणप्रायश्चित्तमाह । इमे पूर्वोक्ताः पञ्चापि महापातकिनः अश्वमेधेन यज्ञविशेषेण शुध्येयुः । तथा पृथिव्यां मानुषसंचारयोग्यायां हिमवत्सेत्ववधिकायां वर्तमानानां सर्वेषां गमनार्हाणां तीर्थानामनुसरणेन अभिगमनेन शुध्येयुः । महापातकिशब्देनैव[3] सिद्धाविदंशब्दोपादानम् "उपपातकमभ्यस्तं महापातकतां व्रजेत्" इत्यादिवचनसिद्धमहापातकव्युदासाय; सर्वनाम्नां बुद्धिस्थोपस्थापकत्वात् । तेन न तत्राश्वमेधादि; किंतु द्वादशाब्दिकमेव । पृथिवीग्रहणमन्तरिक्षनिरासाय । तेन पुष्करनिवृत्तिः; "पृथिव्यां नैमिषं तीर्थमन्तरिक्षे च पुष्करम्" इति **प्रभासखण्ड**स्मरणात् । अत्राश्वमेधसर्वतीर्थानुसरणे द्वे प्रायश्चित्ते परस्परनिरपेक्षे विहिते; अग्रे विकल्पदर्शनात्; तथाशब्देन प्रकारान्तरवचनेन शुद्धिसाधनान्तराभिधानाच्च । चकारः साधनतासमुच्चयार्थः । तत्राश्वमेधः सार्वभौमक्षत्रियस्य द्रष्टव्यः; "यजेत वाश्वमेधेन राजा तु पृथिवीपतिः" इति **पराशर**स्मरणात्; "नासार्वभौमोऽश्वमेधेन यजेत" इति श्रुतेश्च । स च कामतो महापातके;

"महापातकिनस्त्वेते चत्वारो मतिपूर्वकम् ।
अग्निं प्रविश्य शुध्येयुः स्थित्वा वा महति क्रतौ ॥"

इति **यम**स्मरणात् । चत्वारः पञ्चमस्याप्युपलक्षणम्; कामतः संसर्गे संसर्गिणोऽपि प्राणान्तिकत्वाम्नानात् । तथाच **कौर्मे**—

"ब्रह्महत्यां सुरापानं स्तेयं गुर्वङ्गनागमम् ।
कृत्वा [4]तस्यापि संसर्गं ब्राह्मणः कामकारतः ॥
कुर्यादनशनं विप्रः पुण्यतीर्थे समाहितः ।
ज्वलन्तं वा विशेदग्निं ध्यात्वा देवं कपर्दिनम् ॥"

इति; प्राणान्तिकाश्वमेधयोश्च तुल्यत्वात् । यत्तु "स तस्यैव व्रतं कुर्यात्" इति व्रतशब्दोपादानात् मरणस्य च व्रतशब्दावाच्यत्वात् संसर्गिणो न मरणान्तिकमिति, तत् कूर्मवाक्येनैव परिहृतम् । तुशब्दात् अग्निप्रवेशलक्ष्यभावयोर्ग्रहणम् । यथा **भविष्यपुराणे**—

[1] वा—ज, ट [2] वैष्णवे धर्मशास्त्रे महापातकप्रकरणं पञ्चत्रिंशम्—ञ. ठ; वैष्णवे पञ्चत्रिंशोऽध्यायः—झ.
[3] एव omitted in ख, घ; पदेनैव—ग. [4] तैश्चापि—ख, ग.

"हत्वा तु क्षत्रियो विप्रं गुणाढ्यमिह कामतः ।
प्रायश्चित्तं चरेद्वीर विधिवत् कायशुद्धये ॥
लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥
यजेत वाश्वमेधेन क्षत्रियो विप्रघातकः ।
प्रायश्चित्तत्रयं ह्येवं क्षत्रियस्य प्रकीर्तितम् ॥"

इति । विप्रघातः महापातकोपलक्षणम्; पञ्चस्वप्यश्वमेधविधानात् । तेन चाग्निप्रवेशलक्ष्यभावयोरपि अश्वमेधसाहचर्यात् महापातकमात्रविषयत्वं सिध्यति । तथाच देवलः—"तीर्थे पुण्यतमे यथावद्देहन्यासाद् ब्राह्मणो महापातकान्मुच्यते; धर्मयुद्धे गोग्राहे ग्रामघातादिषु प्राणत्यागात् पूयते क्षत्रियः शस्त्रोपजीविनश्च" इति । विदुषाम्; 'प्रायश्चित्तनिमित्तमयं लक्ष्यभावमापद्यते' इति जानताम् । आत्मेच्छया; न राजप्रेरितः । अङ्गिरा अपि—

"यः कामतो महापापं नरः कुर्यात् कथंचन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥"

इति । [1]अत्रैव मरणवैकल्पिकं चतुर्विंशतिवार्षिकं वा कार्यम् । यथाह व्यासः—

"गत्वैतदेव कुर्वीत गुरुतल्पमकामतः ।
कामतो द्विगुणं प्रोक्तं पूर्वेषु च यदुच्यते ॥"

इति । एतदेव; द्वादशवार्षिकमेव । द्विगुणम्; चतुर्विंशतिवार्षिकम् । न केवलं गुरुतल्प एव द्विगुणम्; किंतु पूर्वेषु ब्रह्महत्यादिष्वपि त्रिषु । तीर्थानुसरणमर्थात् क्षत्रियातिरिक्तविषयम् । ततश्च क्षत्रियातिरिक्तैः महापातकिभिः ब्राह्मणवैश्यशूद्रैः पूर्वोक्ततीर्थयात्रा कार्या । तत्प्रकारमाह कश्यपः—

"पवित्रपाणिर्दण्डी च पङ्कदिग्धो रजस्वलः ।
तीर्थवासी कुशाच्छादी जटिलो ब्रह्महा भवेत् ॥"

इति । च्यवनोऽपि—"आ सेतुदर्शनात् पूतो भवति; अश्वमेधावभृथात् पूतो भवति; उभयशिरसं वा प्रदाय ब्राह्मणेभ्यः पूतो भवति" इति । आ सेतुदर्शनादित्यनेन विन्ध्योत्तरभागवर्तिनां सेतुपर्यन्ततीर्थदर्शनात् शुद्धिरित्युक्तं भवति;

[1] तत्रैव—ग.

"विन्ध्यादुत्तरतो यस्य निवासः परिकीर्तितः ।
पराशरमतं तस्य सेतुबन्धस्य दर्शनम् ॥"

इति **भविष्यपुराणात्** । उभयशिरसम् उभयतोमुखीं ब्राह्मणेभ्यस्त्रिभ्यः त्रितयीं प्रदायेत्यर्थः ॥ ६ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डिता**त्मज[2]**श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** पञ्चत्रिंशोऽध्यायः

[1] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.

[2] श्री omitted in ग.

# षट्त्रिंशोऽध्यायः

**यागस्थस्य क्षत्रियस्य वैश्यस्य[1] च रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य[2] गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानीति[3] ॥ १ ॥**

अनुपातकविभागं तत्प्रायश्चित्तं च षट्त्रिंशेनाध्यायेन वक्तुमादौ ब्रह्महत्यासमान्याह । यागः सोमयागः । [4]तत्स्थत्वं चोभयोर्विशेषणम् । चकारात् मूर्धावसिक्ताम्बष्ठयोर्ग्रहणम् ; तद्योनित्वात् ; " ब्राह्मणात् क्षत्रियायामुत्पन्नः क्षत्रिय एव भवति । वैश्यायामुत्पन्नो वैश्य एव " इति शङ्खीयतत्त्वोपदेशस्य तद्धर्मातिदेशार्थत्वाच्च । अनेन च क्षत्रियवैश्यमूर्धावसिक्ताम्बष्ठजातीयस्त्रीणामपि[5] यागस्थानां ग्रहणं सिद्धम् । रजस्वला ; स्नानावधि । चकारात् ऋतुस्नाता च । अत्र च[6] रजस्वलेति सामान्योपादानेऽपि गर्भधारणयोग्यरजोवत्येव विवक्षिता, " रजस्वलामृतुस्नातामात्रेयीमाहुः । अत्रेर्ह्येतदपत्यं भवति " इति वासिष्ठहेतुदर्शनात् । ततश्च रागजरोगजद्रव्यजरजोवतीवधे न वक्ष्यमाणं प्रायश्चित्तमिति सिध्यति । यथाह बृहस्पतिः—

" रागजं रोगजं चैव द्रव्यजं कालजं तथा ।
अर्वाक् प्रसूतेरुत्पन्नं मेदोवृद्ध्याङ्गनासु यत् ॥
तद्रागजमिति प्रोक्तं प्रजोद्भेदसमुद्भवम् ।
पित्तादिदोषवैषम्यादसकृत्संप्रवर्तते ॥
रोगजं तत् समुद्दिष्टमथ द्रव्यजमुच्यते ।
[7]भक्ष्यद्रव्यस्य वैषम्याद्धातुवैषम्यसंभवम् ॥
द्रव्यजं रज इत्युक्तं तत् कादाचित्कसंभवम् ।
आरभ्य चार्तवदिनादेकविंशतिवासरान् ॥
मासार्धोर्ध्वे रजो यत् स्यात् तत्कालजमुदाहृतम् ।

[1] वध: added in ठ.
[2] अविज्ञातगर्भस्य—घ.
[3] इति omitted in ख.
[4] तत्स्थत्वेन—घ.
[5] अपि omitted in घ, च.
[6] च omitted in घ.
[7] भक्षणस्य च—घ, च.

यद्वागरोगद्रव्योत्थं तद्रक्तं प्राह भार्गवः ॥
कालजं तु रजःसंज्ञं तस्मात् तत्रैव साशुचिः ।"

इति । अन्तर्वत्नी; स्वपतिनिहितगर्भवती । विशेष्यानुपादानात् गौः ब्राह्मणी च । चकारात् आहिताग्निपत्नी च । अत्रिगोत्रा; अत्रिगोत्रोढा अत्रिगोत्रोत्पन्ना च; अत्रेर्गोत्रं यस्या इति गोत्रसंबन्धस्य जनकपरिणेत्रोरविशेषात्। अत एव

"अत्रिगोत्रोद्भवां नारीं विनिपात्य द्विजोत्तमः ।
द्वादशाब्दं व्रतं कुर्यादत्रिगोत्रे च संस्कृताम् ॥"

इति **सुमन्तुना** आत्रेय्या उभय्या[1] अप्युपादानम् । चकारात् मन्त्रवत् सर्वसंस्कारैः संस्कृता च । यद्यप्येतासां तिसृणामपि "रजस्वलामृतुस्नातामात्रेयीमाहुः" "गर्भिणी त्वथवा या स्यात् तामात्रेयीं विनिर्दिशेत्" "तथात्रेयीनिषूदकः" इत्यादिस्मृतिषु आत्रेयीत्वेन व्यवहारात् 'आत्रेय्याश्च' इत्येकेनैव सूत्रेण त्रितयग्रहणसिद्धौ सूत्रत्रितयं व्यर्थमिव[2] प्रतिभाति, तथापि अत्रिगोत्रत्वरजस्वलात्वयोः समवाये आत्रेयीत्वरूपनिमित्तैक्यादेकमेव प्रायश्चित्तं स्यात् । तन्मा भूदित्येवमर्थं पृथक्सूत्रकरणम् । ततश्च निमित्तद्वयसमावेशे प्रायश्चित्तद्वयमेव कार्यम्, यथा ब्राह्मणत्वसवनस्थत्वयोरिति । अविज्ञातः स्त्रीपुंनपुंसकत्वेनानिर्णीतो यो गर्भः, तस्य । अविज्ञातस्येति पृथगुपादानमन्यस्यापि अविज्ञातजातिविशेषस्य पुरुषस्य हननं ब्रह्महत्यासममित्यभिधातुम्; पाक्षिकस्यापि ब्रह्मवधदोषस्यापरिहार्यत्वात् । शरणं त्राणम्; तदर्थमागतस्याब्राह्मणस्यापि । चकारात् बालस्याब्राह्मणस्यापि । एतेषां घातनं ब्रह्महत्यासमम् । बहुवचनं तु

"अनृतं च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥"
"गुरूणामप्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥"

इति **मनुयोगीश्वरा**द्युक्त्यभिप्रायेण ।

यत्तु उपपातकत्वेनाग्रे वचनमेषाम्, तत् पुंविषयत्वेन; गुरुविषयत्वेन त्वत्रेत्यविरोधः । इतिकरणमेवंविधानामन्येषामप्युपसंग्रहाय । यथाह **मनुः**—

"उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा ।
अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥"

इति । ब्रह्महत्याव्रतं चरेदिति शेषः ॥ १ ॥

[1] उभय्याः omitted in ख, घ.

[2] व्यर्थमिति—ख, घ, च.

**कौटसाक्ष्यं सुहृद्वध [1]इत्येतौ सुरापानसमौ ॥ २ ॥**

सुरापानसमान्याह । कूटसाक्षिणो भावः कौटसाक्ष्यम् ; मिथ्या साक्ष्यमिति यावत् । वर्णिवधविषयमेतत् । सुहृत् मित्रमब्राह्मणोऽपि ; तद्वधः । संनिधावप्येतच्छब्दोऽन्योपसंग्रहार्थः । यथाह **मनुः**—

" ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः ।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥ "

इति । **योगीश्वरोऽपि**—

" निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु ॥ "

इति । यत्तु एतयोः **मनुयोगीश्वराभ्यां** ब्रह्महत्यासाम्यमुक्तं, तत् वक्ष्यमाणप्रायश्चित्तेन स्वोक्तप्रायश्चित्तस्य विकल्पार्थम् । एवमन्यत्रापि ॥ २ ॥

**[2]ब्राह्मणस्य भूम्यपहरणं निक्षेपापहरणं सुवर्णस्तेयसमम् ॥ ३ ॥**

सुवर्णस्तेयसमान्याह । ब्राह्मणस्येति षष्ठ्यन्तस्य पृथक्करणं त्रितयेनापि संबन्धार्थम् । तेन ब्राह्मणस्वामिकाया भूमेः ब्राह्मणस्वामिकस्य सुवर्णातिरिक्तनिक्षेपस्य च हरणं ब्राह्मणस्वामिकसुवर्णस्तेयसमम् । भूमिः नराद्युपलक्षणम् । यथा **मनुः**—

" निक्षेपस्यापहरणं नराश्वरजतस्य च ।
भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥ "

इति । **योगीश्वरोऽपि**—

" अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।
निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम् ॥ "

इति ॥ ३ ॥

**[3]पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम् ॥ ४ ॥ [4]पितृष्वसृमातृष्वसृस्वसृगमनं च ॥ ५ ॥ श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च[5] ॥ ६ ॥ स्वसुः सख्याः**

[1] इति omitted in घ, च.
[2] ब्राह्मणभूमिहरणं निक्षेपहरणम्—ज, झ, ठ.
[3] मातामह omitted in ज.
[4] Sūtra-s 5 and 6 omitted in ज.
[5] वा—ख, ग.

**सगोत्राया उत्तमवर्णायाः कुमार्या अन्त्यजाया रजस्वलायाः शरणागतायाः प्रव्रजितायाः निक्षिप्तायाश्च ॥ ७ ॥**

गुरुतल्पसमान्याह । पितृव्यादयश्चत्वारः प्रसिद्धाः । नृपोऽभिषिक्तः । तेषां पत्नी, यज्ञसाधनीभूता सवर्णा स्त्री । तद्गमनं गुरुदारगमनसमानम् । अत्र केचित् पितृपदमधिकं पठन्ति । तेन पितृपत्न्यभिगमनं गुरुतल्पगमनसमम् । सा च न जननी; तद्गमनस्यातिपातकत्वात् । नापि सवर्णोत्तमवर्णसपत्नमाता; तद्गमनस्य महापातकत्वात् । किंतु हीनवर्णसपत्नमाता । तद्गमनमनुपातकम्; "मातुः सपत्नीं भगिनीमाचार्यतनयां तथा" इत्यतिदेशश्रवणात्; तस्य च हीनवर्णविषयत्वं विनानुपपत्तेः । तस्मात् तद्गमनमनुपातकमेवेति । पितृव्यो भ्रातुरुपलक्षणम्;

"पितृव्यदारगमने भ्रातृभार्यागमे तथा ।
गुरुतल्पव्रतं कुर्यान्नान्या निष्कृतिरुच्यते ॥"

इति **संवर्त**स्मरणात् । मातामहः पितामहोपलक्षणम्; "मातृमातुश्च गमने पितृमातृगमे तथा" इति **बृहन्मानवात्** ॥ ४ ॥

पितृमातृष्वसारौ साक्षात् सवर्णे च । स्वसा सपत्नमातृजा सवर्णा; साक्षात्स्वसृगमनस्यातिपातकत्वात् । चकाराद् भागिनेयीगमनम्; "भगिनीभागिनेयीगोचण्डालीगमनेषु" इति [1]**सुमन्तु**स्मरणात् ॥ ५ ॥

श्रोत्रियः एकशाखाध्यायी । ऋत्विक् उक्तलक्षणः । उपाध्यायोऽत्र आचार्यः; "आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः" इति **स्मरणात्** । मित्रं सुहृत् अब्राह्मणोऽपि । तेषां पत्नी पूर्वोक्ता । तद्गमनम् । चकारात् शिष्यस्त्रीगमनम्; "पितृव्यसखिशिष्यस्त्री" इति **नारद**स्मरणात् ॥ ६ ॥

स्वसुः साक्षाद्भगिन्याः सखी प्रतिपन्ना भगिनी । सख्याः पृथक् निर्देशः स्वसख्या अपि प्राप्त्यर्थः; "सखी मातृष्वसा सुता" इति **याम्यात्** । सगोत्रा सापिण्डा असपिण्डा च; "सपिण्डापत्यदारेषु प्राणत्यागो विधीयते" इति **बृहद्याम्यात्** । उत्तमवर्णा ब्राह्मण्यादिः क्षत्रियादेः । कुमारी अनूढा अनुपभुक्ता च ब्राह्मणकन्या । अन्त्यजा रजक्यादिः;

"रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः ॥"

इति **आङ्गिरसात्** । अन्त्यजा अन्त्यावसायिनीनामप्युपलक्षणम्;

"चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥"

[1] मनु—क, ख.

इति आङ्गिरसस्मरणात् । चण्डालपदात् सप्तानामपि ग्रहणम् ।

" चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥ "

इति । रजस्वला स्नानावधि स्वीया परकीया वा । शरणागता त्राणार्थिनी । प्रव्रजिता संन्यस्ता । निक्षिप्ता रक्षार्थं समर्पिता । एतासां गमनं गुरुदारगमनसमम् । चकारात् धात्र्यादिग्रहणम्; " राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या " इति नारदस्मरणात् ॥ ७ ॥

**अनुपातकिनस्त्वेते महापातकिनो यथा ।**
**अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा[1] ॥ ८ ॥**

## इति [2]श्रीविष्णुस्मृतौ षट्त्रिंशोऽध्यायः

एवमनुपातकानि विभज्य तेषां प्रायश्चित्तमाह । एतेऽनुपातकिन इति पूर्वोक्तसंज्ञया विषयप्रदर्शनम् । महापातकिनो यथेति महापातकिसादृश्यं संज्ञायां निमित्तम्; ब्रह्महत्यादिसाम्यव्यपदेशात् । साम्यं च तत्प्रायश्चित्तनरकपातित्यत्यागादिकार्ययोगात् । न चैतावता महापातकत्वापत्तिः; साम्येनैव भेदसिद्धेः; तस्य भेदव्याप्यत्वात् । तेषां चाश्वमेधस्तीर्थानुसरणं वा पूर्ववद्व्यवस्थया शोधकम् । इदं चेत्थमेवार्थवत्; अन्यथा 'एतेऽश्वमेधादिना शुध्यन्ति' इत्येतावतैव सिद्धौ शेषवैयर्थ्यापत्तेः ।

अत्रेदं तत्त्वम् । त्रिविधं प्रायश्चित्तमनुपातकेषु—एकं साक्षात् विहितम्; यथा 'अश्वमेधेन' इति । द्वितीयं "ब्रह्महत्याव्रतं कुर्यात्" इत्यादि साक्षादतिदिष्टम् । तृतीयं "ब्रह्महत्यासमं ज्ञेयम्" इति साम्येनातिदिष्टम् । तत्र साक्षात् विहितं संपूर्णमेव । साक्षादतिदिष्टं पादोनम्; उपदेशादतिदेशस्य न्यूनत्वात् । समशब्देनाभिहितमर्धम्; साम्येन व्रतातिदेशस्यैककक्ष्यान्तरितत्वादिति निबन्धकृतः । न्यायविदस्तु—प्रत्यक्षवचनात् [3]नामधेयात् चोदनालिङ्गानुमितवचनाच्चातिदेशं वदन्तः त्रिविधेनापि प्रमाणेनाखण्डातिदेशात् न काप्यतिदिश्यमानस्य न्यूनतेत्याहुः ॥ ८ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[5]श्रीरामपण्डितात्मज[5]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां षट्त्रिंशोऽध्यायः

[1] च—क.
[2] वैष्णवे—झ; वैष्णवे धर्मशास्त्रे अनुपातकप्रकरणं षड्विंशम्—ज, ठ
[3] नामधेयच्चोदना—ख.
[4] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[5] श्री omitted in ग.

# सप्तत्रिंशोऽध्यायः

**अनृतवचनमुत्कर्षे ॥ १ ॥ [1]राजगामि पैशुन्यम् ॥ २ ॥ गुरोश्चालीकनिर्बन्धः ॥ ३ ॥ वेदनिन्दा ॥ ४ ॥ अधीतस्य च त्यागः ॥ ५ ॥ अग्निपितृमातृसुतदाराणां च ॥ ६ ॥**

उपपातकविभागं तत्प्रायश्चित्तं च [2]सप्तत्रिंशेनाह । स्वोत्कर्षनिमित्तं मिथ्यावचनम् 'मयेदं विहितं, मयेदं दापितम्' इत्यादि । यत्तु महादानादिप्राप्त्यर्थमचतुर्वेदस्य 'चतुर्वेदोऽहम्' इत्यादि, यच्च [3]परस्य जातिविद्यासमुत्कर्षे सति 'नायं ब्राह्मणः' 'न किंचिज्जानाति' इति वचनं महादानादिप्राप्तिविघातकं तद्ब्रह्महत्यासमम् ॥ १ ॥ राजन्यविदिनाल्पपरदोषख्यापनम् । यत्तु राजनि अविद्यमानपरकीयमहादोषवचनं तद्ब्रह्महत्यासमम् ॥ २ ॥ गुरोः जनकस्य, अलीको मिथ्या, निर्बन्धो दोषारोपणम् 'त्वयेदं गृहकार्यं नाशितम्' इति । अन्यस्तु ब्रह्महत्यासमः; यथा 'अस्माकं भ्रातॄणां विभागे त्वया वैषम्यं कृतम्' इति; महापातकाद्यभिशंसनं वा ॥ ३ ॥ परिहासेन वेदग्रन्थार्थयोः कुत्सनम् । अन्यस्तु सुरापानसमः; यथा नास्तिक्येन वेदस्य ग्रन्थतोऽर्थतश्च कुत्सनम् ॥ ४ ॥ अधीतस्य वेदस्य च कुटुम्बभरणादिव्यासङ्गेन सच्छास्त्राभ्यासप्रसङ्गेन वा त्यागो विस्मरणम् । यस्तु असच्छास्त्राभिनिवेशेन दुर्व्यसनेन वा त्यागः, स ब्रह्महत्यासमः ॥ ५ ॥ त्यागोऽत्रानुषज्यते । अग्नेः श्रौतस्य स्मार्तस्य वा त्यागोऽपरिचरणा । पितृमात्रोस्त्यागः जीवतोरपतितयोः योगक्षेमाद्यकरणम्; मृतयोः श्राद्धाद्यकरणम् । चकारात् पितृव्यमातुलादिबान्धवानामपि त्यागः; "बान्धवत्याग एव च" इति योगिस्मरणात् ॥ ६ ॥

**अभोज्यान्नाभक्ष्यभक्षणम् ॥ ७ ॥ [4]परस्वापहरणम् ॥ ८ ॥ परदाराभिगमनम् ॥ ९ ॥ अयाज्ययाजनम् ॥ १० ॥ [5]विकर्मजीवनम् ॥ ११ ॥ असत्प्रतिग्रहश्च[6] ॥ १२ ॥ क्षत्रविट्शूद्रगोवधः ॥ १३ ॥ अविक्रेयविक्रयः ॥ १४ ॥**

[1] Sūtra 2 and Commentary thereon omitted in ख, ग; राजगामि पैशुनम्—ङ.

[2] सप्तत्रिंशाध्यायेनाह—ग.

[3] परस्पर—ग.

[4] This Sūtra omitted in ङ.

[5] विकर्मणा—ङ.

[6] च omitted in ङ.

अभोज्याः गणगणिकादयः, तेषामन्नम् ; अभक्ष्यं चानर्चिनादि ; तयोः भक्षणम् । कामतो लशुनादिभक्षणस्य सुरापानसमत्वम् ॥ ७ ॥ सुवर्णतत्समव्यतिरिक्तस्य परस्वस्य धान्यकुप्यादेः अपहरणम् । तच्च दशधेत्याह **हारीतः**—" अदत्तादानात्, अनतिसृष्टहरणात्, अनिर्देशोपभोगात्, भृत्येभ्यो भृत्यदानात्, [1]याचितानिर्यातनात्, न्यासापनयनात्, छन्नव्यपनयात्, अनुपायग्रहणात्, प्रतिश्रुत्यादानात्, देवताभिसंबन्धाच्चेति दशविधं स्तेयम् " इति ॥ ८ ॥ मातृतत्समव्यतिरिक्तानां परदाराणामभिगमनम् ॥ ९ ॥ अयाज्याः जातिकर्मदुष्टाः शूद्रव्रात्यादयः ; तेषां याजनम् ; पतितयाजनस्य महापानकत्वात् ॥ १० ॥ विपरिवृत्तं कर्म विकर्म ; यथा ब्राह्मणस्य क्षत्रियवैश्यवृत्ती । तदुपजीवनम् ॥ ११ ॥ असतः पतितादेः सकाशात्, असतो द्रव्यस्य मेपीकृष्णाजिनादेः, असति देशे कुरुक्षेत्रादौ, असति काले सूर्यग्रहादौ वा प्रतिग्रहः । चकारादसदध्यापनम् ; " शूद्राध्यापकयाजकौ " इति **याम्यात्** ॥ १२ ॥ क्षत्रविट्शूद्राणां गोश्च वधः । समासान् स्त्रियाश्च ; " स्त्रीशूद्रविट्क्षत्रवधः " इति **योगिस्मरणात्** । स्त्री जातिमात्रम् ॥ १३ ॥ अविक्रेयं लाक्षालवणादि ; तस्य विक्रयः ॥ १४ ॥

## परिवित्तितानुजेन[2] ज्येष्ठस्य[3] ॥ १५ ॥

अकृतदाराग्निहोत्रस्य ज्येष्ठस्य कृतदाराग्निहोत्रेणानुजेन परिवित्तिता भवति ;

" दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ "

इति **मानवात्** । ज्येष्ठस्य सोदरस्येति विवक्षितम् ;

" सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद् दारसंग्रहम् ।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत् ॥ "

इति **गार्ग्यस्मरणात्** । सोदर्यत्वं त्वत्र त्रिविधम्—पित्रैक्यात, मात्रैक्यात्, उभयैक्याच्च । तत्र पित्रैक्येन सोदरत्वं **गर्भोपनिषत्सु** प्रसिद्धम् । **महाभारते** च—

" पितुः स जठरे स्थित्वा शुक्रद्वारेण मातरम् ।
प्रविश्य शोणितासक्तः पञ्चधा तनुमाददे ॥ "

इति । देवयानीं प्रति कचोक्तिश्च—

" यस्मिन्नेवोदरे तातस्यावसस्त्वं शुभानने ।
तस्मिन्नेवाहमवसं तेन त्वं भगिनी मम ॥ "

[1] याचितानिपतितात्—ग.  [2] अनुजे निर्विष्टे—ज, ठ.  [3] परिवेदनम् added in ठ.

इत्यादिहेतुभिरविवाह्यत्वप्रतिपादिका । मात्रैक्यादिना सोदरत्वं स्पष्टमेव । तत्रैकैकं निमित्तमादाय निषेधप्रवृत्तावपवादमाह **शातातपः**—

" पितृव्यपुत्रसापत्नपरनारीसुतेषु च ।
ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातॄणां तु कनीयसाम् ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ "

इति । पितृव्येण देवरादिना देवदत्तमातर्युत्पादितः पुत्रः पितृव्यपुत्र इत्युच्यते । स मात्रैक्येन देवदत्तस्य सोदरः । तथा देवदत्तस्य सपत्नमातरि देवदत्तपित्रोत्पादितो देवदत्तस्य सोदरः । तथा देवदत्तपित्रा परस्य भ्रात्रादेः नार्यां भार्यायां नियोगेनोत्पादितः देवदत्तस्य सोदरः ; " संविदा तूभयोः " इति **गौतमस्मरणेन** तस्य द्व्यामुष्यायणत्वात् । एतेषु त्रिष्वपि सोदर्यत्वेन निषेधप्राप्तावयमपवादः । अत एवापवादादपरिणीतेऽपि युधिष्ठिरे भीमसेनस्य हिडिम्बापरिणयो न दोषाय । **यमोऽपि**—

" पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च ।
दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ॥ "

इति । अत्राद्यौ [1]द्वौ व्याख्यातौ । परपुत्रः परस्यैव पुत्रः ; परस्यैव पुत्रार्थमुत्पादितः, न स्वार्थमपि । सोऽपि पित्रैक्यात् देवदत्तस्य सोदरः । **गौतमोऽपि**—

" भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ "

इति । दत्तः पित्रा अन्यस्मै पुत्रत्वेन । तस्य [illegible]रज्येष्ठापेक्षया परिवेदनप्राप्तौ, तदपेक्षया च तत्सोदरकनिष्ठस्य चेत्युभयापवादः । " तृतीयः पुत्रिका इति **वसिष्ठोक्ते** पुत्रिकापुत्रे सति कनिष्ठे औरसे परिवेदनप्राप्तौ अग्रजपदेनापवादः ।

तदेवमपवादतया वाक्यत्रयोपपत्तौ " दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते " इत्यग्रजस्य व्यतिरेकमुखेन [2]सोदर्यत्वविवक्षार्थं वाक्यत्रयारम्भ इति निरस्तम् ; " सोदर्ये तिष्ठति ज्येष्ठे " इत्यनेनैकवाक्यतयैव तत्सिद्धेः । न हि अग्रजस्य सोदर्यत्वसिद्ध्यर्थं वाक्यत्रयारम्भो युज्यते ; ' न हि घट इति वक्तव्ये अनघट इति वदन्ति विद्वांसः ' इति न्यायात् । किंच [3]सोदर्यत्वमात्रविवक्षार्थत्वे पितृव्यपुत्रादिपदानामविवक्षितार्थकतया मातृष्वसृपितृष्वसृमातुलपुत्रादिपरि[illegible]नमापद्येत ; तेषामप्यग्रजत्वेन दोषापादकत्वसंभवात् । संभवति चापवादत्वेन विवक्षितार्थत्वे अविवक्षाया अन्याय्यत्वाच्च । यच्च

" देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः ॥

[1] द्वावपि—ग.   [2] सोदर्यत्वाविवक्षार्थम्—ख, घ.   [3] सोदर्यत्वमात्राविवक्षार्थत्वे—ख, घ.

जडमूकान्धबधिरकुब्जवामनखोडकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान् नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुटिलोन्मत्तचौरांश्च परिविन्दन् न दुष्यति ॥ "

इति **कात्यायनेन** ज्येष्ठपुत्र एव विषयविशेषेऽपवादोऽभिहितः, सोऽपि सोदर्यविषय एव ; अन्यथा अतिप्रसङ्गात् ; प्राप्त्यभावेनापवादत्वासंभवाच्चेत्यलं बहुना ।

ज्येष्ठानुजयोश्च पुंस्त्वं विवक्षितम् ; अप्राप्तोद्देश्यविशेषणत्वात् " अष्टवर्षं ब्राह्मणम् " इत्यत्राष्टवर्षत्वादिवत् । तेनापरिणीतायामपि ज्येष्ठभगिन्यां कनिष्ठस्य भ्रातुः परिवेदनं न भवति । तथा अपरिणीते ज्येष्ठभ्रातरि कनिष्ठाया भगिन्याः परिवेदनं न भवति । अत एव भगिन्योरपि परिवेदनाभावप्राप्तौ वचनारम्भः । तदाह **गार्ग्यः**—

" एकमातृप्रसूतानां पुत्रीणां परिवेदने ।
दोषः स्यात् सर्ववर्णेषु न दोषो भिन्नमातृषु ॥ "

इति । मातृपदं पितुरप्युपलक्षणम् । तेन भिन्नपितृकास्वपि न दोषः । ततश्च पितृव्यपुत्रादिवाक्योपात्ता विशेषा अत्राप्यनुसंधेयाः । सोदर्यास्वपि क्वचिदपवादमाह **वृद्धमनुः**—

" विवाहेऽनधिकारी स्याज्ज्येष्ठकन्या स्थिता यदा ।
तदनुज्ञां विना वापि कनिष्ठामुद्वहेत् तदा ॥ "

इति । अनधिकारीति छान्दसो लिङ्गव्यत्ययः । वाशब्दोऽनुज्ञापक्षं गमयति । ततश्च अनधिकारिण्यां ज्येष्ठायां तदनुज्ञां विनापि कनिष्ठामुद्वहेत् ; अधिकारिण्यां तदनुज्ञयापि वेति वाशब्दार्थः । अनधिकारश्च कुष्ठापस्मारवैरूप्यादिभिः ; " अरोगिणीं भ्रातृमतीम् " इति **स्मरणात्** ;

" नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
दारैस्तु परिवेद्यः स्यात् पृथग्धर्मा हि ब्राह्मणाः ॥
नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य न च कन्या विरूपिता ॥ "

इति **कात्यायनस्मरणाच्च** । जातारणिपरिग्रहेण जातमात्राहिताग्नेरग्निहोत्रवेदाध्ययनवेदव्रतैः परिवेदनदोषो नास्ति । जातारण्यभावे तु उपनीतस्याध्ययनाधिकारात् उपनयने परिवेदनदोषोऽस्त्येवेति गमयितुं वेदग्रहणम् ।

" न जन्ममासे दिवसे च ऋक्षे ज्येष्ठेऽनुपेते परशाखया च ।
न चान्यगोत्रान्न वटुं च कुर्यान्न बह्वृचाः पञ्चमषष्ठयोश्च ॥ "

इति ज्योतिर्निषेधात्। एतेन वेदपदमुपनयनपरमिति निरस्तम्। किंतु दारेण परिवेद्यः। यतो ब्राह्मणाः पृथग्धर्माणः; केषांचित् जातमात्राणां, केषांचित् कृतदाराणामाधानविधानात्। अग्नयः श्येनचित्यादयः। यद्वा ज्योतिष्टोमविकारावग्निष्टोमातिरात्रौ; तयोः प्रथमप्रयोगे परिवेदनापादकत्वात्। यथाह **त्रिकाण्डमण्डनः**—

"दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम्।
अग्निहोत्रं विवाहं च प्रयोगं प्रथमे स्थितम्।
न कुर्याज्जनके ज्येष्ठे सोदरे चाप्यकुर्वति॥"

इति। प्रयोगे प्रथमे स्थितमिति दर्शेष्ट्यादीनां यथालिङ्गं विशेषणम्। तेन प्रथमप्रयोग एवैषां परिवेदनापादकत्वम्; न द्वितीयादिप्रयोगेष्विति। तपांसि; चान्द्रायणादीनि। श्राद्धम्; दर्शादौ पार्वणादीनि। एते कनिष्ठं भ्रातरं न परिविन्दन्ति। विरूपिता अङ्गेन्द्रियादिविकला ज्येष्ठा कनिष्ठां भगिनीं च न परिविन्दतीति वाक्यद्वयस्यार्थः॥ १५॥

**परिवेदनम्॥ १६॥ तस्य च कन्यादानम्॥ १७॥ याजनं च॥ १८॥**

अकृतदाराग्निहोत्रे ज्येष्ठे कनिष्ठस्य तदुभयसंयोगः॥ १६॥ तस्य परिवेत्तुः। चकारात् परिवित्तेश्चाकृतप्रायश्चित्तस्य। चतुर्थ्यर्थे षष्ठी उत्तरसंबन्धाय। कन्यादानं दातुरुपपातकम्॥ १७॥ तस्य परिवेत्तुः परिवित्तेश्च याजनं विवाहकरणं कारयितुः;

"परिवित्तिः परिवेत्ता यया च परिविद्यते;
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥"

इति **स्मरणात्**। तदेतत्[1] स्पष्टमाह **हारीतः**—"ज्येष्ठेऽनिविष्टे कनीयान् निविशमानः परिवेत्ता भवति। परिवित्तिर्ज्येष्ठः। परिवेदनीया कन्या। परिदायी दाता। परियष्टा याजकः। ते सर्वे पतिताः" इति॥१८॥

**व्रात्यता॥ १९॥ भृतकाध्यापनम्॥ २०॥ भृतकाध्ययनादानम्॥ २१॥**

व्रात्यता यथाकालमनुपनयनम्। यत्तु "असोमयाजित्वं च" इति, तन्न; "यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्यः" इति पुत्रपौत्रयोरेव व्रात्यताश्रवणात्। तस्मात् असोमपीथिपितृकत्वमिति वाच्यम्॥१९॥ भृत एव भृतकः अध्येतुर्वेतनग्राही। तेनाध्यापनं तस्योपपातकम्। यद्यप्युपाध्यायलक्षणेऽस्याभ्यनुज्ञा गम्यते, तथाप्यापद्विषयासौ मन्तव्या; "राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा" इति **योगिस्मरणात्**।

[1] तदेव—ग.

न चापणपूर्वमेवायं धनागमोऽभ्यनुज्ञायते; "अध्याप्या धर्मतः साधु शक्ताप्तज्ञानवित्तदाः" इत्यपणपूर्वस्य तस्य प्रागेवाभ्यनुज्ञानात्। तस्मादापदि तस्याप्यभ्यनुज्ञेति मन्तव्यम्। अनापदि भृतकाध्यापनमुपपातकमिति न विरोधः। यद्यप्यन्तेवासी शिल्पार्थी उच्यते, तथाप्युक्तन्यायाविशेषात् वेदविद्यार्थिष्वप्यविरोधः ॥ २० ॥ भृतकात् वेतनग्राहिणः यदध्ययनं शिष्यस्य तत्। चकारात् अध्येतुरनुयोगदानम्। तद्योत्कर्षार्थमधीयानस्य 'अबद्धं पठसि' इत्यादिपर्यनुयोगः; "दत्तानुयोगानध्येतुः पतितान् मनुरब्रवीत्" इति स्मरणात्;

"भृतकाध्ययनं कृत्वा भृतकाध्यापनं तथा।
अनुयोगप्रदानेन त्रीन् पक्षांस्तु पिबेद्यवान् ॥"

इति हारीतस्मरणात् ॥ २१ ॥

## [1]सर्वाकरेष्वधीकारः ॥ २२ ॥ महायन्त्रप्रवर्तनम् ॥ २३ ॥

सर्वे च आकराः सुवर्णरजताद्युत्पत्तिस्थानानि; तेषु राजादेशेनाधिकारः। सर्वशब्दात् कृत्रिमाणां वस्त्राद्युत्पत्तिस्थानानामपि ग्रहणम्; संकोचे मानाभावात्; "सर्वाकरेष्वधीकारः" इत्यविशेषेण[2] मानवाच्च ॥ २२ ॥ एकप्रयोगेणानेकहिंसाकरं नाल्यादि महायन्त्रम्। तस्य प्रवर्तनं निर्माणम्। तस्यैवाग्निसंयोगकरणेन गोलकमोचनम्; "हिंस्रयन्त्रविधानं च" इति योगिस्मरणात्। युक्तं चैतदेव। हिंसासबन्धेन [3]पातकौचित्यात् "धनुःशराणां कर्ता च" इतिवत्। न तु तिलेक्षुयन्त्रप्रवर्तनम्; हिंसासंबन्धाभावेन पातकत्वानौचित्यात्। न च तिलादिपीडनमेव हिंसेति युक्तम्; चर्वणस्यापि तत्त्वापत्तेरित्यलम् ॥ २३ ॥

## द्रुमगुल्मवल्लीलतौषधीनां हिंसा ॥ २४ ॥ स्त्र्याजीवनम् ॥ २५ ॥ अभिचारबलकर्मसु च प्रवृत्तिः ॥ २६ ॥

द्रुमाः पनसाम्रादयः। गुल्माः अनतिदीर्घनिविडलता माल्यादयः। वल्ल्यः वेष्टनयायिन्यो गुडूच्यादयः। लताः दीर्घयायिन्यो द्राक्षादयः। [4]ओषध्यः फलपाकान्ताः शाल्यादयः। समासात् गुच्छक्षुपप्रतानादीनां ग्रहणम्। गुच्छाः कुरण्टकादयः। क्षुपाः करवीरादयः। प्रतानाः सारिवादयः। तेषामार्द्राणां हिंसा छेदः इन्धनाद्युद्देशेन; "इन्धनार्थमशुष्काणां द्रुमाणामवपातनम्" इति मनुस्मरणात्। हलाद्यर्थव्यतिरेकेण; "फलपुष्पोपगान् पादपान् न हिंस्यात्; कर्षणकरणार्थं चोपहन्यात्; गार्हस्थ्याङ्गे च" इति वसिष्ठस्मरणात्। कर्षणकरणं हलः। गार्हस्थ्यस्याङ्गम् अग्निपालनम्; तदुपयोग्यरणिपात्रादिकरणं च। तदर्थे छेदने न दोषः ॥ २४ ॥ स्त्रिया आभिमुख्येनान्यं प्रति संमुखीकरणेन; तेन संयोज्येति यावत; तदुत्पन्नेन

[1] Sūtra-s 22 and 23 omitted in ज.
[2] अविशेषेण omitted in ख, ग.
[3] पातकत्वौचित्यात्—च.
[4] This passage corrupt in च.

धनेन जीवनम् ॥ २५ ॥ परमारणाय जपहोमादिरभिचारः । अनिषिद्धस्यापि परानभिमतस्य बलावष्टम्भेन करणं बलकर्म । "मूलकर्म च" इति मनुः । मूलैरोषधीनां वशीकरणादिकरणं मूलकर्मेत्यस्यार्थः । तेषु प्रवृत्तिः उद्योगः । प्रवृत्तिग्रहणमनिष्पन्नेऽपि प्रयोजने प्रवृत्तिमात्रेण पापसंबन्धप्रदर्शनाय ; "सृष्टश्चेत् ब्राह्मणवधेऽहत्वापि" इति **गौतमीयलिङ्गात्** । चकारात् अहीनयाजनादि ;

> "व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ।
> अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुध्यति ॥"

इति **मानवात्** ॥ २६ ॥

## आत्मार्थे क्रियारम्भः ॥ २७ ॥ अनाहिताग्निता ॥ २८ ॥ देवर्षिपितृऋणानामनपक्रिया ॥ २९ ॥

अत्र क्रियासामान्येऽपि पचनक्रिया गृह्यते ; "अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्" इति **स्मरणात्** । तस्या आत्ममात्रोद्देशेनारम्भः ॥ २७, २८ ॥ देवर्षिपितॄणामृणानि, "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इत्यादिश्रुत्युक्तानि ; तेषामनपक्रिया अपरिहारः ; यज्ञाकरणस्वाध्यायानध्ययनप्रजानुत्पादनादीनीति यावत् । यत्तु "गृहीतस्य सुवर्णादेरप्रदानम्" इति "ऋणानां चानपक्रिया" इत्यस्य व्याख्यानं, तन्न सुन्दरम् ; तस्य पूर्वोदाहृत**हारीत**वाक्याभिहितस्तेयावान्तरभेदत्वेन पौनरुक्त्यात्, मूलवाक्यविरोधाच्चेत्यलम् । बहुवचनात् मनुष्यऋणस्यानपाकरणम् । यथाह **नारदः**—

> "इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः ।
> उत्तमर्णाधमर्णेभ्यो मामयं मोचयिष्यति ॥"

इति । "उत्तमर्णानि देवर्षिपितृऋणानि ; अधमर्णानि मनुष्यर्णानि सुवर्णधान्यादीनि" इति **कल्पतरुः** ॥ २९ ॥

## असच्छास्त्राभिगमनम् ॥ ३० ॥ नास्तिकता ॥ ३१ ॥ कुशीलवता ॥ ३२ ॥ मद्यपस्त्रीनिषेवणम् ॥ ३३ ॥ इत्युपपातकानि ॥ ३४ ॥

असतां वेदबाह्यादीनां शास्त्रेषु अभिगमनम् आयासः ; "असच्छास्त्राधिगमनम्" इति **योगिस्मरणात्** ॥ ३० ॥ नास्ति परलोक इत्यभिनिवेशः ॥ ३१ ॥ कुशीलवो नटः ; तद्वृत्तिता ॥ ३२ ॥ मद्यपा चासौ स्त्री च ; तस्याः निषेवणम् अभिगमनम् । मद्यशब्दोऽत्र सुरासाधारणः । तेन यासां मद्यमात्रं निषिद्धं, यासां च सुरामात्रं तदुभयग्रहणाय मद्यपशब्दप्रयोगः । नात्र मद्यपस्य स्त्रीत्यर्थः ; अतिप्रसङ्गात् ; षष्ठ्यर्थलक्षणापाताच्च । नापि मद्यपस्त्री शूद्रेति साधु ; हीनयोनिनिषेवणेन पौनरुक्त्यात् । स्त्रीग्रहणं

स्वपरस्त्रीसाधारण्याय। तच्च कृतप्रायश्चित्ताया एव; अकृतप्रायश्चित्ताभिगमनस्य महापातकत्वात्। अत एव "सुराप्यधिवेत्तव्या" इति सुराप्या अधिवेदनं कृतप्रायश्चित्ताया अप्यगम्यत्व एव घटते; अन्यथा अधिवेदनस्यादृष्टार्थतापत्तेः;

"पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥"

इति मानववचनारम्भसामर्थ्यात् कृतप्रायश्चित्ताया अप्यव्यवहार्यत्वसिद्धेश्चेत्यलम् ॥ ३३ ॥ इतिशब्दः प्रकारवचनः। तेन एवंप्रकाराणामन्येषामपि ग्रहणम्। यथा **योगीश्वरः**—"वार्धुष्यं लवणक्रिया" "निन्दितार्घोपजीवनम्" "व्रतलोपश्च सुतानां चैव विक्रयः" "तडागारामविक्रयः" "कन्यासंदूषणं चैव" "कौटिल्यम्" "हिंसौषधजीवनम्" "व्यसनान्यात्मविक्रयः"

"शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्।
तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥"
"भार्याया विक्रयश्चैषामेकैकमुपपातकम्।"

इति। वार्धुष्यं निषिद्धवृद्ध्युपजीवनम्। लवणस्य क्रिया उत्पादनम्। निन्दितस्य अराजकृतस्य अर्घस्य मूल्यस्योपजीवनम्। व्रतलोपः ब्रह्मचारिणः स्त्रीप्रसङ्गः; अन्यस्यापि व्रतस्य नियमस्य लोपः। सुताश्च सुताश्च सुताः, कन्यापुत्राः; तेषां विक्रयः। तडागः जलाशयः; आराम उद्यानम्; तयोः स्वकृतयोः पितृकृतयोर्वा अनुत्सृष्टयोर्विक्रयः; उत्सृष्टयोः स्वत्वाभावात्। कन्यायाः संदूषणमङ्गुल्यादिना योनिविदारणम्; अकन्येत्युक्तिः, अपस्माराद्यारोपणं वा। न संभोगः; तस्य गुरुतल्पसमत्वात्। कौटिल्यमगुरोः; गुरुकौटिल्यस्य सुरापानसमत्वात्। हिंसया प्राणिवधेन जीवनम्। औषधेन रसक्वाथादिना जीवनम्; वैद्यवृत्तिरिति यावत्। व्यसनानि मृगयादीन्यष्टादश। आत्ममूल्यकरणेन परदास्यकरणम्। शूद्रस्य प्रेष्यं सेवकीभावः त्रैवर्णिकस्य। हीनैः चोरादिभिर्मैत्रीकरणम्। अनूढसवर्णदारस्य केवलासवर्णदारोद्वहनम्। अनाश्रमे विधुरत्वादौ वासो रतिः। नित्यं परान्नसेवनम्। भार्याया ऊढायाः शूद्राया अपि विक्रयः। चकारार्थमाह **प्रचेताः**—"अनृतवाक् तस्करो राजभृत्यो वृक्षारोपणवृत्तिर्गरदोऽग्निदश्च रथगजारोहणवृत्तिः रङ्गोपजीवी श्वगणिकः शूद्रोपाध्यायः वृषलीपतिः भण्डिको नक्षत्रोपजीवी च श्ववृत्तिर्ब्रह्मजीवी चिकित्सको देवलकः पुरोहितः किनवो मद्यपः कूटकारकोऽपत्यविक्रयी मनुष्यपशुविक्रयी[1] च" इति। **हारीतोऽपि**—"कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्यागी सुरामद्यपः शूद्रयाजको गुरोः प्रतिहन्ता [2]नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नः मिथ्याभिशंसी [3]पतितसंव्यवहारी मित्रध्रुक्

1. विक्रेता—ग.  2 अनभिकः—ख.  3 पतितव्यवहारी—ख.

शरणागतघाती प्रतिरूपकवृत्तिः" इति । एतान्युपपातकसंज्ञानि । उप समीपे पातकिनां नरकेषु पातयन्तीति उपपातकानि ॥ ३४ ॥

**उपपातकिनस्त्वेते कुर्युश्चान्द्रायणं नराः ।**
**[1]पराकं च तथा कुर्युर्यजेयुर्गोसवेन वा[2] ॥ ३५ ॥**

**इति [3]श्रीविष्णुस्मृतौ सप्तत्रिंशोऽध्यायः**

एवमुपपातकानि विभज्य तेषु प्रायश्चित्तमाह । एते पूर्वोक्ताः उपपातकिनो नराः चान्द्रायणं वक्ष्यमाणलक्षणं कुर्युः । चशब्दो विकल्पार्थः । तथा तेष्वेवोपपातकेषु पराकं वक्ष्यमाणमेव वा कुर्युः । अथवा गोसवेन यज्ञेन वा यजेयुः । तथाशब्दात् मासं पञ्चगव्याशनं मासं प्रयोव्रतं च गृह्यते ;

" उपपातकशुद्धिः स्यादेवं चान्द्रायणेन च ।
पयसा वापि मासेन पराकेणाथवा पुनः ॥ "

इति **योगिस्मरणात्** । अत्रायमभिसंबन्धः—येषूपपातकेषु वक्ष्यमाणं प्रतिपदोक्तं प्रायश्चित्तं नास्ति, तेष्वेतेषां त्रयाणामन्यतमं देशकालाद्यपेक्षया योज्यम् । येषु पुनः प्रतिपदोक्तं स्वीयमन्यदीयं वा प्रायश्चित्तमस्ति, तेषु तदेवेति । तत्र पराकचान्द्रायणादीन्यकामकारे । कामकारे तु गोसवस्त्रैमासिकं वा । यथाह **मनुः** त्रैमासिकप्रक्रमे—" एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः " इति । एवमन्यदप्यूह्यम् ॥ ३५ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेयश्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[5]श्री**रामपण्डि**तात्मज[5]श्री**नन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** सप्तत्रिंशोऽध्यायः

[1] पराकमथवा कुर्युः—ज, ठ. [2] च—घ.
[3] वैष्णवे धर्मशास्त्रे उपपातकप्रकरणं सप्तत्रिंशम्—च ; वैष्णवे—झ.
[4] From श्रीमन्महा up to वाराणसीवासि omitted in घ, च. [5] श्री omitted in ग.

## अष्टात्रिंशोऽध्यायः

**ब्राह्मणस्य रुजः करणम् ॥ १ ॥ अघ्रेयमद्ययोर्घ्रातिः ॥ २ ॥ जैह्म्यम् ॥ ३ ॥ पशुषु मैथुनाचरणम् ॥ ४ ॥ [1]पुंसि च ॥ ५ ॥ इति जातिभ्रंशकराणि ॥ ६ ॥**

जातिभ्रंशकरविभागं तत्प्रायश्चित्तं चाष्टत्रिंशेनाह[2]। विप्रस्य अङ्गपीडाकरणम् ॥ १ ॥ अघ्रेयं विण्मूत्रादि ; मद्यम् उक्तलक्षणम् ; तयोः घ्रातिः गन्धोपलब्धिः ॥ २ ॥ जैह्म्यं वञ्चकत्वम् ॥ ३ ॥ पशुषु गवादिषु मैथुनस्य ग्राम्यधर्मस्य आचरणम् ॥ ४ ॥ पुरुषे मैथुनाचरणम् । चकारात् स्त्रियामपि अयोनौ गमनम् ; " अयोनौ गच्छतो योषां पुरुषं चाभिमेहतः । चतुर्विंशतिको दण्डः " इति योगिस्मरणात् ॥ ५ ॥ एवंप्रकाराणि जातिभ्रंशकरशब्दाभिधेयानीति । प्रवृत्तिनिमित्तं प्रागुक्तम् ॥ ६ ॥

**जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ।**
**चरेत् सांतपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ ७ ॥**

इति [3]श्रीविष्णुस्मृतावष्टात्रिंशोऽध्यायः

तत्र प्रायश्चित्तमाह । इच्छया कामतः पूर्वोक्तमन्यतमं जातिभ्रंशकरं कर्म कृत्वा सांतपनं कृच्छ्रं सप्ताहसाध्यं चरेत् । अनिच्छया अकामतः पुनः प्राजापत्यं वक्ष्यमाणं चरेदिति । यत्तु

" ब्राह्मणस्य रुजः कृत्वा रासभादिप्रमापणम् ।
निन्दितेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेत् ॥ "

इति **बृहस्पतिनोक्तम्**, तत् अल्परुजः करणजातमात्ररासभप्रमापणाद्यल्पविषये द्रष्टव्यम् ॥ ७ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसी**वासिधर्माधिकारि[5]**श्रीरामपण्डितात्मज**[5]**श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्या**मष्टात्रिंशोऽध्यायः

[1] पुंसि चेति जातिभ्रंशकराणि read as single Sūtra in ठ.   [2] अष्टत्रिंशाध्यायेनाह—ख, ग.

[3] वैष्णवे धर्मशास्त्रे जातिभ्रंशप्रकरणमष्टत्रिंशम्—ज ; वैष्णवे अष्टत्रिंशोऽध्यायः—झ.

[4] श्रीविष्णुस्मृतिविवृतावष्टत्रिंशोऽध्यायः—घ, च ; ख omits from श्रीतम्मण up to प्रोत्साहित.

[5] श्री omitted in ग.

# एकोनचत्वारिंशोऽध्यायः

**ग्राम्यारण्यानां पशूनां हिंसा[1] संकरीकरणम् ॥ १ ॥**

संकरीकरणविभागं तत्प्रायश्चित्तं चैकोनचत्वारिंशेनाह[2] । ग्राम्याः अव्यादयः । आरण्याः महिषादयः । तेषां पशूनां हिंसा संकरीकरणम् । यथाह पैठीनसिः—"ग्राम्यारण्याश्चतुर्दश गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः । महिषवानरऋक्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः" इति । तत्र गोमनुष्यवधस्योपपातकादिपाठात्[3] तदितरहिंसा संकरीकरणम् । अत एव मनुः—

> "खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
> संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च[4] ॥"

इति गोमनुष्येतरानेव संजग्राह । चकारात् श्वादीनां ग्रहणम् । पशुग्रहणं पक्षिनिरासाय ; तद्धिंसाया मलिनीकरणत्वात् ॥ १ ॥

**संकरीकरणं कृत्वा मासमश्नीत यावकम् ।**
**कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं तु कारयेत् ॥ २ ॥**

इति [5]श्रीविष्णुस्मृतावेकोनचत्वारिंशोऽध्यायः

तत्र प्रायश्चित्तमाह । इच्छानिच्छे अनुवर्तेते । तत्रेच्छया संकरीकरणं कृत्वा मासमविच्छेदेन यावकं यवोदनमश्नीयात । अथवा अनिच्छया तत्करणे कृच्छ्रातिकृच्छ्रं कुर्यात् । स्वस्यासामर्थ्ये ब्राह्मणद्वारापि कारयितुं णिच्प्रयोगः । प्रायश्चित्तपदोपादानं तु न केवलमत्रैवेदम्, किं त्वन्यत्रापि प्रायश्चित्ते इति ज्ञापयितुम् ;

[1] हिंसेति—ज, ठ.
[2] शाध्यायेनाह—ठ.
[3] परिहारात्—घ.
[4] वा—ग.
[5] वैष्णवे धर्मशास्त्रे संकरीकरणप्रकरणमेकोनचत्वारिंशम्—ज ; वैष्णवे एकोनचत्वारिंशत्तमोऽध्यायः—झ ; संकरीकरणप्रकरणमेकोनचत्वारिंशम्—ठ.

" व्याधिव्यसनिनि श्रान्ते दुर्भिक्षे डामरेऽपि च ।
उपवासो व्रतं होमः स्नानं तीर्थं जपस्तपः ।
विप्रैः संपादितं यस्य संपूर्णं तस्य तत्फलम् ॥ "

इति पराशरस्मरणात् । डामरः महामारी ॥ २ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज[2]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामेकोनचत्वारिंशोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतावेकोनचत्वारिंशोऽध्यायः—घ, च.
[2] श्री. omitted in ग.

## चत्वारिंशोऽध्यायः

**निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमसत्यभाषणं शूद्रसेवनमित्यपात्रीकरणम् ॥ १ ॥**

अपात्रीकरणविभागं तत्प्रायश्चित्तं च चत्वारिंशाध्यायेनाह। निन्दितेभ्यो म्लेच्छादिभ्यो विनापि प्रतिग्रहं वृद्ध्यादिरूपेण धनादानम्। वाणिज्यम् अनिषिद्धस्यापि वस्तुनः क्रयविक्रयौ। कुसीदम् अनिषिद्धयापि वृद्ध्या जीवनम्। असत्यभाषणं साक्ष्यमन्तरेणापि। शूद्रस्य सेवनं प्रेष्यत्वं[1] विनाप्याज्ञाकरणं त्रैवर्णिकानाम्; इत्येवंप्रकारकमपात्रीकरणम्; असत्प्रतिग्रहनिषिद्धविक्रयनिषिद्धवृद्धिसाक्ष्यानृतशूद्रप्रेष्यत्वानामुपपातकत्वात् ॥ १ ॥

**अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति।**
**शीतकृच्छ्रेण वा [2]भूयो महासांतपनेन वा ॥ २ ॥**

इति [3]श्रीविष्णुस्मृतौ चत्वारिंशोऽध्यायः

तत्र प्रायश्चित्तमाह। इच्छया अपात्रीकरणं कृत्वा वक्ष्यमाणेन तप्तकृच्छ्रेण शुध्यति। अनिच्छया तत्करणे तु शीतकृच्छ्रेण। भूयः अभ्यासेन तत्करणे महासांतपनेन शुध्यति। तत्र अकामतोऽभ्यासे पञ्चदशाहिकं ज्ञेयम्। तत्रैव कामतोऽत्यन्ताभ्यासे "अपात्रीकरणं कृत्वा मासं शोधनमैन्दवम्" इति मानवं द्रष्टव्यम् ॥ २ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[5]श्रीरामपण्डितात्मज[5]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां चत्वारिंशोऽध्यायः

[1] प्रेष्यतां—ख, ग.
[2] भूयः शुद्धिः—ज, झ, ठ.
[3] वैष्णवे धर्मशास्त्रे अपात्रीकरणप्रकरणं चत्वारिंशम्—ज; वैष्णवे चत्वारिंशोऽध्यायः—झ.
[4] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[5] श्री omitted in ग.

# एकचत्वारिंशोऽध्यायः

**पक्षिणां जलचराणां जलजानां च घातनम् ॥ १ ॥ क्रिमि-कीटानां[1] च ॥२॥ मद्यानुगतभोजनम् ॥३॥ इति मलावहानि ॥४॥**

मलावहविभागं तत्प्रायश्चित्तं चैकचत्वारिंशाध्यायेनाह। पक्षिणो जलचराः स्थलचराश्च। जलचराः; ये जलं प्रविश्य मत्स्यादीन्[2] गृह्णन्ति, ते उद्रादयो [3]जीवविशेषाः। जलजाः मत्स्यादयः। तेषां घातनम् ॥ १ ॥ क्रिमयः गोमयादिसंभूताः। कीटाः पिपीलिकादयः। तेषां घातनम् ॥ २ ॥ मद्येन पूर्वोक्तेन द्वादशविधेन अनुगतं सदृशं मदजनकतया जातीफलादि, तस्य भक्षणम्। यद्वा मद्यस्य सुराया अनु पश्चात् गतम् उत्पन्नं भङ्गादि, तद्भक्षणम्। यथोक्तं **केदारखण्डे**—

> " लशुनं गृञ्जनं चैव पलाण्डुं मद्यमेव च।
> *सुरया सह जातानि तेषां भङ्गा च पञ्चमी ॥* "

इति ॥ ३ ॥ इतिशब्दः प्रकारं वक्ति। तेन फलादिस्तेयस्यापि ग्रहणम्। यथाह **मनुः**—

> " क्रिमिकीटवयोहत्या मद्यानुगतभोजनम्।
> फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥ "

इति। कुसुमादिस्तेयमात्मार्थम्; देवतार्थं सर्वतो ग्राह्यत्वात्; " द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत् " इति **योगि**स्मरणात्। अधैर्यम्; लोलुपता ॥ ४ ॥

**मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम्।**
**कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम् ॥ ५ ॥**

**इति [4]श्रीविष्णुस्मृतावेकचत्वारिंशोऽध्यायः**

[1] कीटादीनां च—ठ. [2] मत्स्यादीनेव—ख, ग. [3] जातिविशेषाः—घ, च.
[4] वैष्णवे धर्मशास्त्रे मलिनीकरणप्रकरणमेकचत्वारिंशम्—ज, ठ; वैष्णवे एकचत्वारिंशत्तमोऽध्यायः—ग.

तत्र प्रायश्चित्तमाह । कामकृतेषु मलिनीकरणीयेषु तप्तकृच्छ्रेण द्वादशाहिकेन शुद्धिः । अकामतः पुनः तत्करणे कृच्छ्रातिकृच्छ्रेण तादृशेनैव विशुद्धिः । यद्यप्युभयोः कामाकामविषयतोपपद्यते, तथापि तप्तकृच्छ्रे त्र्यहोपवासेन कष्टाधिक्यात् अकामविषयत्वे [1]अयुक्तमिति ध्येयम् । अथवा [2]अकामकृते प्रायश्चित्तान्तरमेव विशोधनं ज्ञेयम् । यथाह **मनुः**—“मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहम्” इति । अनयोश्च सकृदभ्यासाद्यपेक्षया व्यवस्था ॥ ५ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसीवासि**धर्माधिकारि[4]**श्रीरामपण्डित**ात्मज[4]**श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्या**मेकचत्वारिंशोऽध्यायः

[1] त्वसंयुक्तमिति- ख.
[2] अकामकेन—ग
[3] श्रीविष्णुस्मृतिविवृतौ एकचत्वारिंशोऽध्यायः—घ, च.
[4] श्री omitted in ग.

# द्विचत्वारिंशोऽध्यायः

[1]यदनुक्तं तत्प्रकीर्णकम् ॥ १ ॥

प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम् ।
प्रायश्चित्तं बुधः कुर्याद् ब्राह्मणानुमतो यथा ॥ २ ॥

इति [2]श्रीविष्णुस्मृतौ द्विचत्वारिंशोऽध्यायः

प्रकीर्णके प्रायश्चित्ताभिधित्सया द्विचत्वारिंशेन तल्लक्षयति । अतिपातकत्वादिना अष्टविधेनोपाधिना यदसंगृहीतं, तत् प्रकीर्णकमिति ज्ञेयम् । तच्च खरयानोष्ट्रयानादि ॥ १ ॥

तत्र प्रायश्चित्तमाह । प्रकीर्णकम् उक्तलक्षणं यत् पातकं, तस्मिन् अर्थतारतम्येन गौरवलाघवे ज्ञात्वा बुधो गुरुणि गुरूणि, लघुनि लघूनीति प्रायश्चित्तव्यवस्थामनुगतः सन् यथाविधि ब्राह्मणानुमतः प्रायश्चित्तं कुर्यात् । तच्च यत्र प्रतिपदोक्तमस्ति, तत्र तदेव कार्यम् । यथा—

"प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ॥"

इति । यत्र निषेधमात्रं श्रूयते न प्रायश्चित्तम्, तत्र सामान्यप्रायश्चित्तं देशकालादिव्यवस्थया कल्प्यम् । यथा—

"नोदन्वतोऽम्भसि स्नायान्न च श्मश्र्वादि कर्तयेत् ।
अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम् ॥"

इत्यादौ । तत्र प्रायश्चित्तमाह योगीश्वरः—

"प्राणायामशतं कार्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥"

[1] The whole of chapter 42 omitted in ञ.

[2] वैष्णवे द्विचत्वारिंशोऽध्यायः—ख ; वैष्णवे धर्मशास्त्रे प्रकीर्णप्रकरणं द्वाचत्वारिंशम्— ठ.

इति । उशना—

"यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनम् ।
प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः ॥"

इति । कामाकामाभ्यामनयोर्व्यवस्था ज्ञेयेति ॥ २ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज[2]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां द्विचत्वारिंशोऽध्यायः

[1] विष्णुस्मृतिविवृतौ द्विचत्वारिंशोऽध्यायः—घ, च. [2] श्री omitted in ग,

# त्रिचत्वारिंशोऽध्यायः

**अथ नरकाः ॥ १ ॥ तामिस्रम् ॥ २ ॥ अन्धतामिस्रम् ॥ ३ ॥ रौरवम् ॥ ४ ॥ महारौरवम् ॥ ५ ॥ कालसूत्रम्[1] ॥ ६ ॥ महानरकम् ॥ ७ ॥ संजीवनम् ॥ ८ ॥ अवीचि ॥ ९ ॥ तपनम्[2] ॥ १० ॥**

प्रायश्चित्तविधिषु क्षिप्रप्रवृत्त्यर्थमकृतप्रायश्चित्तानां नरकान् त्रिचत्वारिंशेनाभिधातुं प्रतिजानीते । अथेत्यधिकारः । नरकाः [3]दुःखैकभोगस्थानान्युच्यन्ते ॥ १ ॥ तमिस्रम्; अन्धकारः । तत्प्रचुरं तामिस्रम् ॥ २ ॥ निबिडितरान्धकारप्रचुरम् ॥ ३ ॥ रुरुरिति सर्पावान्तरजातिः । तत्प्रचुरं स्थानम् ॥ ४ ॥ महत्त्वयोगि तदेव ॥ ५ ॥ अयुतयोजनं ताम्रमयं तप्तं खलमण्डलम् ॥ ६ ॥ महादुःखानुभवस्थानम् ॥ ७ ॥ यातनाभिः मृतानां पुनः संजीव्य यातनानुभावनम् ॥ ८ ॥ वीचिराहित्येन उपर्यगमनात् अन्तरेवावस्थानम् ॥ ९ ॥ अग्निसंनिकर्षेण तापानुभवः[4] ॥ १० ॥

**संप्रतापनम् ॥ ११ ॥ [5]संघातकम् ॥ १२ ॥ [6]काकोलम् ॥ १३ ॥ [7]कुड्मलम् ॥ १४ ॥ पूतिमृत्तिकम् ॥ १५ ॥ लोहशङ्कुः ॥ १६ ॥ ऋबीसम् ॥ १७ ॥ विषमपन्थाः[8] ॥ १८ ॥ [9]कण्टकशाल्मलिः ॥ १९ ॥ [10]दीपनदी ॥ २० ॥ असिपत्रवनम् ॥ २१ ॥ [11]लोहचारकमिति ॥ २२ ॥ एतेष्वकृतप्रायश्चित्ता अतिपातकिनः [12]पर्यायेण [13]कल्पं पच्यन्ते ॥ २३ ॥**

अग्निना भर्जनम् ॥ ११ ॥ अत्यन्तसंवृतदेशे बहूनामवस्थापनम् ॥ १२ ॥ द्रोणकाकैर्भक्ष्यत्वम् ॥ १३ ॥ गोण्यादिषु प्रक्षिप्य तन्मुखबन्धनम् ॥ १४ ॥ दुर्गन्धिमृत्तिकास्थलम् ॥ १५ ॥ सूचीभेदनम् ॥ १६ ॥ पुटपाकः

1 कालस्रजम्—ग.
2 तापनम्—ठ.
3 दुःखभोग—ख.
4 यातनानुभवः—ग.
5 Sūtra 12 omitted in ज, ठ.
6 काकोलः—घ, च.
7 कुद्दालम्—ठ.
8 पन्थानम्—घ, च.
9 कूटशाल्मली—ज, ठ.
10 यूपनदी—ज. झ ; पूयनदी—ठ.
11 लोहकण्टकमिति—ज, ठ.
12 एते—ठ.
13 कल्पयन्ते—ग.

॥ १७ ॥ उच्चावचो मार्गः ॥ १८ ॥ कण्टकयुक्तशाल्मलिवृक्षप्रचुरो देशः ॥ १९ ॥ उष्णतोया नदी वैतरण्याख्या ;

"नदी वैतरणी नाम दुर्गन्धा रुधिरावहा ।
उष्णतोया महावेगा अस्थिकेशतरङ्गिणी ॥"

इति ॥ २० ॥ खड्गपत्रवनम् ॥ २१ ॥ निगडबन्धः ; लोहभक्ष्यो वा । इतिकरणात् सविषमहापथकुम्भीपाकतप्तवालुकादीनां ग्रहणम् ॥ २२ ॥ प्रमादालस्यौद्धत्यादिना अकृतयथोक्तप्रायश्चित्ता अतिपातकिनः मात्रादिगन्तारः पूर्वोक्तेषु तामिस्रादिनरकेषु कल्पं पूर्वोक्तलक्षणं कालं पर्यायेण क्रमेण पच्यन्ते यातनामनुभवन्ति ॥ २३ ॥

**महापातकिनो मन्वन्तरम् ॥ २४ ॥ अनुपातकिनश्च ॥ २५ ॥ उपपातकिनश्चतुर्युगम् ॥ २६ ॥**

महापातकिनः ब्रह्महादयः मन्वन्तरम् उक्तेषु नरकेषु पर्यायेण पच्यन्ते । उत्तरेष्वपि सप्तसु वाक्येष्वेव तत्र [1]वाक्यशेषोऽनुषज्यते ॥ २४ ॥ अनुपातकिनः महापातकतुल्यपातकिनः मन्वन्तरमेव ॥ २५ ॥ उपपातकिनः गोहन्त्रादयः चतुर्युगपर्यन्तं कालम् ॥ २६ ॥

**कृतसंकरीकरणाश्च संवत्सरसहस्रम्[2] ॥ २७ ॥ कृतजातिभ्रंशकरणाश्च ॥ २८ ॥ कृतापात्रीकरणाश्च ॥ २९ ॥ [3]कृतमलिनीकरणाश्च ॥ ३० ॥ प्रकीर्णपातकिनश्च बहून् वर्षपूगान्[4] ॥ ३१ ॥**

संकरीकरणकारिणः युगादिसाहचर्यात् दिव्यं वर्षसहस्रम् ॥ २७ ॥ जातिभ्रंशकरकर्मकारिणोऽपि[5] उक्तमेव कालम् ॥ २८ ॥ अपात्रीकरणकारिणोऽपि [6]अमुमेव कालम् ॥ २९ ॥ मलिनीकरणकारिणोऽपि वर्षसहस्रम् ॥ ३० ॥ प्रकीर्णपापकारिणः बहून् त्रीन् वर्षपूगान् वर्षशतानि प्रक्रमवशात् उक्तनरकेषु क्रमेण पच्यन्ते । यत्तु

"पातकेषु सहस्रं स्यान्महत्सु द्विगुणं स्मृतम् ।
उपपाते तुरीयं स्यान्नरकं वर्षसंख्यया ॥"

इति **कात्यायनवचनम्**, तत्र पातकादिशब्दा न पारिभाषिकाः, अनुपातकवचनमूलविरोधात् ; किंतु यातनादिगुणयोगेन यौगिकाः । ततश्च संकरीकरणादिचतुर्षु पातकेषु सहस्रम् । महत्सु तदपेक्षया अधिकेषु उपपातकेषु द्विगुणम् । गुणाः त्रयः । गुणाश्च गुणाश्च गुणाः ; षट् । द्विर्गुणाः यस्मिन् सहस्रे तद् द्विगुणं

[1] वाक्यविशेषः— घ, च.
[2] च added in ख, घ.
[3] Sūtra 30 omitted in ज.
[4] युगान्—ख, ग, झ, ठ,
[5] कर्मिणोऽपि—ग,
[6] उक्तमेव—ख.

सहस्रम् ; द्वादशसाहस्री ; चातुर्युगमिति यावत् । यद्वा गुणाः संध्यादयः षट् । द्विर्गुणा यस्मिन्निति द्विगुणमिति । उप समीपे संकरीकरणादीनां चतुर्णां पापम् ; प्रकीर्णकमिति यावत् ; उपपातकानां महच्छब्देनाभिधानात् । तत्र तुरीयं द्वादशानां चतुर्थोऽशः त्रीणि शतानि सहस्रार्वाचीनतया अवगम्यन्त इत्यर्थकल्पनया विरोधः परिहार्यः ॥ ३१ ॥

**कृतपातकिनः [1]पापाः प्राणत्यागादनन्तरम् ।**
**याम्यं पन्थानमासाद्य दुःखमश्नन्ति दारुणम् ॥ ३२ ॥**

एवं नरकस्वरूपं तद्भोगकालं चोक्त्वा इदानीं नरकगमनकालीनं दुःखमाह । कृतानि नवविधानि पातकानि यैस्ते ; अकृतप्रायश्चित्ताः । अत एव पापाः पापाक्रान्ताः । प्राणानां त्यागात् निर्गमादनन्तरं याम्यं यमपुरीसंबन्धिनं पन्थानं प्राप्य वक्ष्यमाणं दारुणं दुःखमनुभवन्ति ॥ ३२ ॥

**यमस्य पुरुषैर्घोरैः कृष्यमाणा [2]यतस्ततः ।**
**सकृच्छ्रेणानुकारेण[3] नीयमानाश्च ते यथा[4] ॥ ३३ ॥**

तदेवाह । भयानकैः यमदूतैः समविषमेषु देशेषु कृष्यमाणाः [5]कष्टानुकारिणाकारविशेषेण नरकं नीयमानाः ते [6]यथा दुःखमनुभवन्ति, एवं नरकोपभोगानन्तरमपि ' तिर्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च ' इत्यध्यायान्तेनान्वयः ॥ ३३ ॥

**श्वभिः शृगालैः क्रव्यादैः काककङ्कबकादिभिः ।**
**अग्नितुण्डैर्भक्ष्यमाणा [7]भुजङ्गैर्वृश्चिकैस्तथा ॥ ३४ ॥**
**अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः ।**
**क्रकचैः पाट्यमानाश्च [8]पीड्यमानाश्च तृष्णया ॥ ३५ ॥**
**[9]क्षुधया व्यथमानाश्च[10] घोरैर्व्याघ्रगणैस्तथा[11] ।**
**पूयशोणितगन्धेन मूर्छमानाः पदे पदे ॥ ३६ ॥**

[1] सर्वे—झ. [2] स्ततस्ततः—झ. [3] अन्धकारेण—ज, झ.
[4] पथा—ठ. [5] कृष्टानुकारिणा कर—घ. [6] तथा—ग.
[7] भुजगैः—ठ. [8] पीड्यमानाश्च—ग, ज. [9] क्षुधा प्रताड्यमानाश्च—ज, ठ.
[10] झ breaks off here and reads colophon. [11] व्याधिगणैस्तथा—ज, ठ.

किंच क्रव्यादैरिति काकादीनां विशेषणम्। अग्निः तुण्डे येषां ते भल्लूकादयः। शेषं प्रसिद्धम् ॥ ३४ ॥ क्रकचाः करपत्राणि ॥ ३५ ॥ किंच क्षुधेत्याबन्तः, निशा दिशेतिवत्। व्यथन्ते इति व्यथमानाः। मूर्छमाना इति छान्दसः पदव्यत्ययः ॥ ३६ ॥

**परान्नपानं लिप्सन्तस्ताड्यमानाश्च किंकरैः।**
**काककङ्कबकादीनां[1] भीमानां सदृशाननैः ॥ ३७ ॥**
**क्वचित् तैलेन[2] क्वाथ्यन्ते ताड्यन्ते मुसलैः क्वचित्।**
**आयसीषु [3]च वट्यन्ते शिलासु च तथा क्वचित् ॥ ३८ ॥**
**क्वचिद्वान्तमथाश्नन्ति क्वचित् पूयमसृक् क्वचित्।**
**क्वचिद्विष्ठां क्वचिन्मांसं [4]पूयगन्धि सुदारुणम् ॥ ३९ ॥**

किंच परेषाम् अन्नपानं लिप्सन्त इत्यत्रापि पदव्यत्ययः। काकाद्याननत्वं किंकरविशेषणम् ॥ ३७ ॥ वट्यन्त इति। "वट वेष्टने" इति भ्वादेः कर्मणि रूपम्। वट्यन्ते पिष्यन्ते आयसीषु लोहस्थलीषु शिलासु चेति पेषणावृत्तिः व्यथाधिक्यार्थो ॥ ३८ ॥ वान्तम् उद्गीर्णम्। पूयं रक्तपाकः। असृक् रक्तम्। पूयगन्धीति मांसविशेषणं सुदारुणत्वे हेतुः ॥ ३९ ॥

**अन्धकारेषु तिष्ठन्ति दारुणेषु तथा क्वचित्।**
**क्रिमिभिर्भक्ष्यमाणाश्च [5]वह्नितुण्डैः सुदारुणैः ॥ ४० ॥**
**[6]क्वचिच्छीतेन बाध्यन्ते क्वचिच्चामेध्यमध्यगाः।**
**परस्परमथाश्नन्ति क्वचित् प्रेताः सुदारुणाः ॥ ४१ ॥**
**क्वचिद्भूतेन[7] ताड्यन्ते लम्बमानास्तथा क्वचित्।**
**क्वचित् क्षिप्यन्ति बाणौघैरुत्कृत्यन्ते तथा क्वचित् ॥ ४२ ॥**

दारुणेषु निबिडेषु अन्धकारेषु। क्रिमिभिः विष्ठादिसंभूतैः प्राणिभिः। वह्नितुण्डैः शिवादिभिः ॥ ४० ॥ अमेध्यं विष्ठादि। परस्परं प्रेताः प्रेतान् अश्नन्ति। [8]सुदारुणाः बुभुक्षातिशयेन ॥ ४१ ॥ भूतेन; पूर्ववृत्तेन। लम्बमानाः वृक्षादौ बन्धनेन क्षिप्यन्तीति पदव्यत्ययः ॥ ४२ ॥

1 वटादीनां—ठ. 2 क्वाथ्यन्ते तैलेन—ख. 3 विपच्यन्ते—ठ.
4 पूयगन्धिषु—ग 5 वह्नितुण्डैश्च—घ, च. 6 Stanza 41 omitted in ज.
7 धूमेन घात्यन्ते—ठ. 8 सुदारुणाः omitted in ख.

[1]कण्टेषु दत्तपादाश्च [2]भुजङ्गाभोगवेष्टिताः ।
पीड्यमानास्तथा यन्त्रैः कृष्यमाणाश्च जानुभिः ॥ ४३ ॥
भग्नपृष्ठशिरोग्रीवाः सूचीकण्ठाः सुदारुणाः ।
कूटागारप्रमाणैश्च शरीरैर्यातनाक्षमैः ॥ ४४ ॥

कण्टाः कण्टकाः, तेषु । भुजङ्गाभोगाः सर्पशरीराणि । यन्त्रैः तिलेक्षुनिष्पीडनयन्त्रैः पीड्यमानाः । कण्टकाक्रान्तपादत्वेन गमनाशक्त्या जानुभिः कृष्यमाणाः ॥ ४३ ॥ भग्नं पृष्ठं पृष्ठभागः, शिरो मस्तकं, ग्रीवा शिरोधिः येषाम् । प्राण्यङ्गत्वादेकवद्भावः । सूचीस्थौल्यप्रमाणः कण्ठनालो येषाम् । कूटाख्यम् अगारं गृहविशेषः ; तत्प्रमाणैः । तत्प्रयोजन यातनाक्षमैरिति ; यातनासु दुःखानुभवेषु अतिस्थूलान्येव शरीराणि क्षमन्ते, न सूक्ष्माणि ; स्वल्पदुःखेनैव तेषां [3]क्षिप्रं नाशात् ॥ ४४ ॥

एवं पातकिनः पापमनुभूय सुदुःखिताः ।
तिर्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च ॥ ४५ ॥

इति [4]श्रीविष्णुस्मृतौ त्रिचत्वारिंशोऽध्यायः

पातकिनः नरकं नीयमानाः यथा दुःखान्यनुभवन्ति, एवमेव नरकेषु पापफलमनुभूय पापशेषेण तिर्यग्योनिं प्राप्य, अनन्तरमपि विविधानि दुःखानि प्रपद्यन्ते ॥ ४५ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[6]श्रीरामपण्डितात्मजश्रीनन्द-
पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां त्रिचत्वारिंशोऽध्यायः

[1] कोष्ठेषु—ठ. [2] भुजगा—ठ. [3] क्षिप्रनाशात्—च.
[4] वैष्णवे धर्मशास्त्रे नरकप्रकरणं त्रिचत्वारिंशम्—ज.
[5] श्रीविष्णुस्मृतिविवृतौ त्रिचत्वारिंशोऽध्यायः—घ, च. [6] श्री omitted in ग.

## चतुश्चत्वारिंशोऽध्यायः

**अथ पापात्मनां नरकेष्वनुभूतदुःखानां तिर्यग्योनयो भवन्ति ॥ १ ॥ [1]अतिपातकिनां [2]पर्यायेण सर्वाः स्थावरयोनयः ॥ २ ॥ [3]महापातकिनां च क्रिमियोनयः ॥ ३ ॥ अनुपातकिनां[4] पक्षियोनयः ॥ ४ ॥ उपपातकिनां [5]जलजयोनयः ॥ ५ ॥**

पूर्वाध्यायान्ते प्रतिज्ञातां तिर्यग्योनिप्राप्तिं चतुश्चत्वारिंशेन प्रपञ्चयति । अथेत्यधिकारानन्तरम् । अतिपातक्यादीनां पापात्मनां तामिस्रादिनरकेष्वनुभूतयातनादुःखानां तिरश्चां योनयो भवन्ति ॥ १ ॥ मातृगन्त्रादीनां वृक्षगुल्मलतादिकाः स्थावराणां योनयः क्रमेण भवन्ति । बहुत्वं च शतपर्यवमायि; "दोषैः प्रयाति जीवोऽयं भवं योनिशतेषु च" इति योगिस्मरणात् । तत्रापि पातकतारतम्येन योनिसंख्यातारतम्यमूह्यम् ;

> "परिगृह्य ततो भूयो जन्मनामेकविंशतिम् ।
> क्रिमिकीटपतङ्गेषु स्थितस्तोयचरेषु च ॥"

इति **शिवधर्मात्** । एवमुत्तरत्रापि बहुत्वं व्याख्येयम् ॥ २ ॥ ब्रह्महन्त्रादीनां क्रिमीणामुक्तरूपाणां योनयः ॥ ३ ॥ पितृव्यादिपत्नीगामिनां काकभासादियोनयः ॥ ४ ॥ गोघ्नादीनां मत्स्यादिजलजयोनयः ॥ ५ ॥

**[6]कृतजातिभ्रंशकराणां[7] जलचरयोनयः ॥ ६ ॥ कृतसंकरीकरणकर्मणा मृगयोनयः ॥ ७ ॥ कृतापात्रीकरणकर्मणां पशुयोनयः ॥ ८ ॥ कृतमलिनीकरणकर्मणां [8]मनुष्येष्वस्पृश्ययोनयः ॥ ९ ॥**

[1] Sūtra 2 omitted in ज.
[2] सर्वाः पर्यायेण—ठ.
[3] Sūtra 3 omitted in ज.
[4] च added in ठ.
[5] जलयोनयः—ञ.
[6] Sūtra 6 and commentary thereon omitted in ग.
[7] करकर्मणा—ठ.
[8] पुरुषेषु—ठ.

ब्राह्मणस्त्र्यादिकारिणां बकबलाकादिजलचरयोनयः ॥ ६ ॥ खरादिघातिनां हरिणादिमृगयोनयः ॥ ७ ॥ निन्दितधनग्राह्यादीनां गवादिपशुयोनयः ॥ ८ ॥ क्रिमिकीटादिघातिनां मनुष्येषु अस्पृश्याः चण्डालाद्याः, तद्योनयः ॥ ९ ॥

**[1]प्रकीर्णकेषु प्रकीर्णा हिंस्राः क्रव्यादा भवन्ति ॥ १० ॥ अभोज्यान्नाभक्ष्याशी क्रिमिः ॥ ११ ॥**

खरयानोष्ट्रयानगमनादिषु[2] नानाविधा हिंसाशीला आममांसादा व्याघ्रादयो भवन्ति ॥ १० ॥ अभोज्या गणगणिकादयः; तेषामन्नमभक्ष्यं चानर्चितादि, तदुभयं योऽश्नाति स क्रिमिः उक्तलक्षणो भवति । एकत्वनिर्देशात् एकस्मिन्नेव जन्मनि सकृत्कृते पापे; "महापातकिनां क्रिमियोनयः" इति बहुत्वश्रवणात् ॥ ११ ॥

**स्तेनः श्येनः ॥ १२ ॥ प्रकृष्टवर्त्मापहारी बिलेशयः ॥ १३ ॥ आखुर्धान्यहारी[3] ॥ १४ ॥ हंसः कांस्यापहारी ॥ १५ ॥ [4]जलहृज्जलाभिप्लवः ॥ १६ ॥ मधु दंशः ॥ १७ ॥ पयः काकः ॥ १८ ॥**

सुवर्णातिरिक्तद्रव्यहारी श्येनो भवति ॥ १२ ॥ प्रकृष्टस्य महतो वर्त्मनोऽपहारी भूमिग्रहणेन संकोचको बिलेशयः सर्पादिः ॥ १३ ॥ यवव्रीह्यादिधान्यहारी मूषकः ॥ १४ ॥ [5]वङ्गताम्राभ्यामुत्पन्नो धातुः कांस्यम्; तदपहारी हंसः चक्राङ्गः ॥ १५ ॥ पानीयापहर्ता जलाभिप्लवः जलकुक्कुटः ॥ १६ ॥ माक्षिकापहारी दंशः वनमक्षिका ॥ १७ ॥ दुग्धापहारी काकः करटः ॥ १८ ॥

**रसं श्वा ॥ १९ ॥ घृतं नकुलः ॥ २० ॥ मांसं गृध्रः ॥ २१ ॥ वसां मद्गुः ॥ २२ ॥ तैलं तैलपायिकः ॥ २३ ॥ लवणं [6]चीविवाक् ॥ २४ ॥ दधि बलाका ॥ २५ ॥**

रसमिक्ष्वादेरपहृत्य श्वा कुक्कुरः ॥ १९ ॥ सर्पिर्हारी नकुलः बभ्रुः ॥ २० ॥ पललं हृत्वा गृध्रः दाक्षाय्यः ॥ २१ ॥ वसां मांसपाकजलं हृत्वा मद्गुः पक्षिविशेषः ॥ २२ ॥ तैलं हृत्वा तैलपायिकः परोष्णीनामको मक्षिकाविशेषः ॥ २३ ॥ लवणं सैन्धवादि हृत्वा [7]चीव्यनुकारिणी वाक् यस्य स [8]चीव्याख्यो मक्षिकाविशेषः ॥ २४ ॥ दधि हृत्वा बलाका बिसकण्ठिका ॥ २५ ॥

[1] प्रकीर्णेषु—घ, च.
[2] उष्ट्रगमनादिषु—घ, च.
[3] धान्यापहारी—ठ.
[4] जलं हृत्वा भवति प्लवः—ज, ढ.
[5] रङ्ग—ग, च.
[6] विचि—ग; चीरि—ठ.
[7] विच्य—ग.
[8] चीर्याख्यः—ग.

**कौशेयं [1]हृत्वा भवति तित्तिरिः ॥ २६ ॥ क्षौमं दर्दुरः ॥ २७ ॥ कार्पासतान्तवं क्रौञ्चः ॥ २८ ॥ गोधा गाम् ॥ २९ ॥ वाल्गुदो गुडम् ॥ ३० ॥ छुछुन्दरिर्गन्धान् ॥ ३१ ॥**

कौशेयं त्रसरीपट्टादिं हृत्वा तित्तिरिर्भवति । अत्र हृत्वाभवत्योरुपादानं पूर्वपरवाक्येष्वनुषङ्गार्थः ॥ २६ ॥ क्षौमम् अतसीतन्तुप्रभवं हृत्वा दर्दुरो भेकः ॥ २७ ॥ कार्पासतन्तुप्रभवं हृत्वा क्रौञ्चः कुङ् भवति ॥ २८ ॥ गोजातीयं हृत्वा गोधा कृकलासानुकारिणी ॥ २९ ॥ गुडं हृत्वा वाल्गुदः वल्गुल्यवान्तरजातिः पक्षिविशेषः । वागुद इति वा पाठः ॥ ३० ॥ गन्धान् चन्दनादीन् हृत्वा छुछुन्दरिर्गन्धमुखी मूषिकाविशेषः ॥ ३१ ॥

**पत्रशाकं बर्ही ॥ ३२ ॥ कृतान्नं सेधा ॥ ३३ ॥ अकृतान्नं शल्यकः ॥ ३४ ॥ अग्निं बकः ॥ ३५ ॥ गृहकार्युपस्करम् ॥ ३६ ॥**

पत्रात्मकं शाकं हृत्वा बर्ही मयूरः ॥ ३२ ॥ कृतान्नम् ओदनादि हृत्वा सेधा श्वावित् ॥ ३३ ॥ अकृतान्नं तण्डुलादि हृत्वा शल्यकः शलली ॥ ३४ ॥ अग्निं हृत्वा बकः प्रसिद्धः ॥ ३५ ॥ गृहोपस्करम् उलूखलमुसलादि [2]काष्ठपाषाणादि वा हृत्वा गृहकारी चरटाख्यः कीटविशेषः ॥ ३६ ॥

**[3]रक्तवासांसि जीवजीवकः ॥ ३७ ॥ गजं कूर्मः ॥ ३८ ॥ अश्वं व्याघ्रः ॥ ३९ ॥ फलं पुष्पं वा मर्कटः ॥ ४० ॥ ऋक्षः स्त्रियम् ॥ ४१ ॥ यानमुष्ट्रः ॥ ४२ ॥ पशून् [4]गृध्रः ॥ ४३ ॥**

मञ्जिष्ठादिरक्तं वासो हृत्वा जीवजीवकः चकोरः ॥ ३७ ॥ हस्तिनं हृत्वा कच्छपः ॥ ३८ ॥ हयं हृत्वा व्याघ्रः द्वीपी ॥ ३९ ॥ फलम् आम्रादि, पुष्पं मल्लिकादि हृत्वा मर्कटः वानरः ॥ ४० ॥ स्त्रियम् अविवाहितां कन्यामपहरन् ऋक्षो भल्लूकः । विवाहितापहरणे ब्रह्मराक्षसः ;

> " परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
> अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥ "

इति **योगिस्मरणात्** ॥ ४१ ॥ यानं शिबिकादि हृत्वा उष्ट्रः क्रमेलकः ॥ ४२ ॥ पशून् महिष्यादीन् हृत्वा गृध्रो दाक्षाय्यः ॥ ४३ ॥

[1] हृत्वा भवति omitted in ज, ठ.
[2] इष्टका—घ.
[3] रक्तानि—ठ.
[4] अजः—ठ.

**यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ।**
**अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥ ४४ ॥**

द्रव्याणामानन्त्यात् प्रत्येकं वक्तुमशक्यत्वात्[1] संक्षेपेणाह । यद्वा तद्वेति अनिरूपितजातिविशेषं यत्किंचित् द्रव्यम् अपहृत्य प्रच्छन्नं चोरयित्वा बलात् विच्छिद्य अवश्यं तिर्यक्त्वं पशुपक्षिक्रिमिकीटान्यतमत्वं प्राप्नोति । न केवलं द्रव्यापहारेणैव; किंतु वैश्वदेवे अहुतम् असंस्कृतमपि द्रव्यं भुक्त्वा तिर्यक्त्वं प्राप्नोति । तस्मादेतन्न कार्यमित्युक्तनिषेधानामेतेऽर्थवादाः ॥ ४४ ॥

**स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः ।**
**एतेषामेव जन्तूनां [2]भार्यात्वमुपयान्ति ताः ॥ ४५ ॥**

**इति [3]श्रीविष्णुस्मृतौ चतुश्चत्वारिंशोऽध्यायः**

कर्तृफलयोः पुंस्त्वश्रवणात् स्त्रीणामतथात्वशङ्कायामाह । स्त्रियोऽप्येतेन कल्पेन प्रच्छन्नं प्रकाशं वा उक्तद्रव्याण्यपहृत्य तमेव दोषं प्राप्नुयुः । अतः तेषामेव जन्तूनां स्त्रीत्वं प्राप्नुवन्ति; दोषफलयोरेकरूपत्वात् ॥ ४५ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[5]**श्रीरामपण्डिता**त्मज[5]**श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां वैजयन्त्यां चतुश्चत्वारिंशोऽध्यायः

1 अशक्तेः—ख.
2 जायात्वम्—ज, ट.
3 वैष्णवे धर्मशास्त्रे जातिप्रकरणं चतुश्चत्वारिंशम्—ज, ठ.
4 इति श्रीविष्णुस्मृतिविवृतौ चतुश्चत्वारिंशोऽध्यायः—घ, च.
5 श्री omitted in ग.

## पञ्चचत्वारिंशोऽध्यायः

**[1]नरकाभिभूतदुःखानां [2]तिर्यक्त्वमुत्तीर्णानां मानुष्येषु[3] लक्षणानि भवन्ति ॥ १ ॥**

त्रिविधं पापफलं नरकस्तिर्यक्त्वं रोगश्चेति। तत्रोभे प्रपञ्चिते। इदानीं पापविशेषेण रोगविशेषं पञ्चचत्वारिंशेनाह। नरकेषु तामिस्रादिषु अभितः सर्वेषु भूतानि उत्पन्नानि दुःखानि येषाम्, अनन्तरं कर्मशेषेण तिर्यक्त्वमनुभूय उत्तीर्णानां मनुष्यजन्मसु वक्ष्यमाणानि क्षयादीनि लक्षणानि तत्तत्पापसूचकानि भवन्ति। मानुष्येष्विति बहुवचनं तत्तत्संख्याभिप्रायेण। यथाह **शातातपः**—

"महापातकजं चिह्नं सप्त जन्मानि जायते।
उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥"

इति। महापातकापेक्षया उपपातकादिषु द्विद्विजन्महानिदर्शनात् अतिपातके नव जन्मानीति सिध्यति। महापातकमनुपातकस्याप्युपलक्षणम्; तुल्यनरकप्रायश्चित्तत्वात् ॥ १ ॥

**कुष्ठ्यतिपातकी ॥ २ ॥ ब्रह्महा यक्ष्मी ॥ ३ ॥ सुरापः [4]श्यावदन्तकः ॥ ४ ॥ [5]सुवर्णहारी कुनखी ॥ ५ ॥ गुरुतल्पगो दुश्चर्मा ॥ ६ ॥**

मातृगन्त्रादिः तत्तत्कुष्ठवान् भवति। तत्र मातृदुहितृस्नुषाभगिनीगामिनः क्रमात् गलत्कुष्ठिरक्तकृष्णपीत-कुष्ठिनो भवन्ति। तथाच **शातातपः**—

"मातृगामी भवेद्यस्तु तस्य लिङ्गं विनश्यति।
स्वसुतागमने चैव रक्तकुष्ठं प्रजायते ॥
स्ववधूगमने चैव कृष्णकुष्ठं प्रजायते।
भगिनीगमने चैव पीतकुष्ठं प्रजायते ॥"

[1] अथ नरकानुभूत—ज.
[2] From here to तिर्यक्त्वमनुभूय in the commentary missing in ख.
[3] मनुष्येषु—घ, च ; मानुष्ये—ठ.
[4] श्यामदन्तः—ठ.
[5] सुवर्णापहारी—ङ.

इति ॥ २ ॥ यक्ष्मा क्षयरोगः ; तद्वान् ब्रह्महा भवति । पापतारतम्येन रोगेऽपि तारतम्यं द्रष्टव्यम् ॥ ३ ॥ सुरापः त्रिविधाया अपि पाना श्यावाः स्वभावकृष्णा दशनाः यस्य तादृग्भवेत् ॥ ४ ॥ ब्राह्मणस्वामिकसुवर्णापहारी कुनखी ; कुत्सितानि क्षतानि नखानि यस्य सः ॥ ५ ॥ गुरुतल्पगामी दुश्चर्मा त्वग्दोषी भवति । ब्रह्महादिसंसर्गिणः तत्तद्रोगिण एव भवन्तीति न पृथगभिहितम्[1] । यथाह **योगीश्वरः**—"यो येन संवसत्येषां स [2]तल्लिङ्गोऽभिजायते" इति ॥ ६ ॥

**[3]पूतिनासः पिशुनः ॥ ७ ॥ पूतिवक्त्रः सूचकः ॥ ८ ॥ धान्यचोरोऽङ्गहीनः ॥ ९ ॥ मिश्रचोरोऽतिरिक्ताङ्गः ॥ १० ॥**

एवमतिपातकमहापातकेषूक्त्वा इदानीं पातकान्तरेऽप्याह । अविद्यमानपरदोषवक्ता पिशुनः । स पूतिनासः दुर्गन्धिनासिकः ॥ ७ ॥ विद्यमानमेव परदोषमन्याज्ञातं यः प्रकाशयति स सूचकः, दुर्गन्धिवदनः ॥ ८ ॥ धान्यस्य व्रीहियवादेः चोरः अङ्गहीनः अङ्गेन हस्तपादादिना हीनः ॥ ९ ॥ धान्येष्वेव उत्कृष्टमपहृत्य तत्परिमाणपूरणाय अपकृष्टं तन्मध्ये यः प्रक्षिपति स मिश्रचोरः, अतिरिक्ताङ्गः षडङ्गुल्यादिः ; "धान्यमिश्रोऽतिरिक्ताङ्गः" इति **योगिस्मरणात्** ॥ १० ॥

**[4]अन्नापहारकस्त्वामयावी ॥ ११ ॥ वागपहारको मूकः ॥ १२ ॥ वस्त्रापहारकः श्वित्री ॥ १३ ॥ अश्वापहारकः पङ्गुः ॥ १४ ॥ देवब्राह्मणाक्रोशको मूकः[5] ॥ १५ ॥**

अन्नस्य अदनीयमात्रस्य अपहर्ता आमयावी आमव्याधिमान् अजीर्णान्नः । तुशब्दः परान्नविघ्नकरणसंग्रहार्थः । तथाच **शातातपः**—"परान्नविघ्नकरणादजीर्णमपि जायते" इति ॥ ११ ॥ अननुज्ञाताध्यायी पुस्तकापहारी संदेशाप्रवक्ता वा मूकः वागिन्द्रियहीनः ॥ १२ ॥ वस्त्रापहर्ता श्वित्री कुष्ठबिन्दुमान् ॥ १३ ॥ अश्वापहर्ता पङ्गुः पादहीनः ॥ १४ ॥ विनापराधं देवद्विजयोः गालिप्रदाता मूकः ॥ १५ ॥

**लोलजिह्वो गरदः ॥ १६ ॥ उन्मत्तोऽग्निदः ॥ १७ ॥ गुरोः प्रतिकूलोऽपस्मारी ॥ १८ ॥ गोघ्नस्त्वन्धः ॥ १९ ॥ दीपापहारकश्च[6] ॥ २० ॥ काणश्च दीपनिर्वापकः ॥ २१ ॥**

परस्मै मरणानुपहितविषप्रयोगकर्ता वचनावसरे चलज्जिह्वो भवति ॥ १६ ॥ प्राणिव्यतिरिक्तसामग्रीसहितपरगृहदाहकः उन्मादवायुमान् ॥ १७ ॥ पितृप्रतिकूलकर्ता अपस्मारी ॥ १८ ॥ गोहन्ता अन्धः

[1] अभिधानम्—ख, ग.
[2] तादृगुपपद्यते—च.
[3] This Sūtra omitted in ज, ठ.
[4] अन्नापहार्यामयावी—ज, ठ.
[5] मूर्खः—ठ.
[6] दीपापहर्ता च—ज, ठ.

चक्षुर्हीनः। तुशब्दो मातृघ्नपरिग्रहार्थः, "मातृहान्धः प्रजायते" इति शातातपस्मरणात् ॥ १९ ॥
[1]देवद्विजगृहादिस्थदीपहर्ता चान्धः ॥ २० ॥ पूर्वोक्तदीपप्रशामकः काण एकनेत्रहीनः ; चकारात् तिमिरवांश्च ;

" देवद्विजगृहे तीर्थे पुण्यस्थाने च संस्थितम् ।
प्रदीपं शमयित्वा तु तिमिरव्याधिमान् भवेत् ॥ "

इति [2]शातातपस्मरणात् ॥ २१ ॥

**त्रपुचामरसीसकविक्रयी[3] रजकः ॥ २२ ॥ एकशफविक्रयी मृगव्याधः ॥ २३ ॥ कुण्डाशी भगास्यः ॥ २४ ॥ [4]घाण्टिकः स्तेनः ॥ २५ ॥ वार्धुषिको भ्रामरी ॥ २६ ॥ मृष्टाश्येकाकी[5] वातगुल्मी ॥ २७ ॥ समयभेत्ता खल्वाटः ॥ २८ ॥ श्लीपद्यवकीर्णी ॥ २९ ॥ परवृत्तिघ्नो दरिद्रः ॥ ३० ॥ परपीडाकरो दीर्घरोगी ॥ ३१ ॥**

त्रपु ताम्रसहभावेन पित्तलोत्पादको धातुः पिच्चटापरपर्यायः। चामरं वालव्यजनम्। सीसकं नागः। तेषां विक्रयी रजकः वस्त्ररागकारः प्रतिलोमजः ॥ २२ ॥ एकशफाः अश्वादयः। [6]तेषां विक्रेता मृगव्याधः मृगहननोपजीवी ॥ २३ ॥ कुण्डस्य कुण्डपरिगितं वा अन्नम् अश्नातीति कुण्डाशी। भगवत् आस्यं यस्येति ; मैथुनाय मुखसमर्पकः ॥ २४ ॥ स्वर्णातिरिक्तद्रव्यस्तेनः घाण्टिकः वैनालिकः ॥ २५ ॥ वार्धुषिकः निषिद्ध-वृद्ध्युपजीवी भ्रामरी भ्रमणवातवान् ॥ २६ ॥ एकाकी मृष्टाशनः वातगुल्मवान् ॥ २७ ॥ संविद्व्यतिक्रमकारी खल्वाटः शिरश्चन्द्रिकावान् ॥ २८ ॥ अवकीर्णी क्षतव्रतः श्लीपदी उच्छूनजङ्घचरणः ॥ २९ ॥ ब्राह्मणवृत्तिघ्नो दरिद्रः निःस्वः ॥ ३० ॥ निष्कारणं परपीडाकरः असाध्यव्याधिमान् ॥ ३१ ॥

**एवं कर्मविशेषेण जायन्ते लक्षणान्विताः ।
रोगान्वितास्तथान्धाश्च कुब्जखञ्जैकलोचनाः ॥ ३२ ॥
वामना बधिरा मूका दुर्बलाश्च तथापरे ।
तस्मात् सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत् ॥ ३३ ॥**

**इति [7]श्रीविष्णुस्मृतौ पञ्चचत्वारिंशोऽध्यायः**

[1] The commentary on Sūtra-s 20 and 21 omitted in ख.
[2] शातातपीयात्—घ, च. [3] सीस for सीसक—ज, ठ. [4] तालिकः—ज, ठः
[5] एको—ज. [6] तद्विक्रेता—ग.
[7] वैष्णवे धर्मशास्त्रे पापचिह्नप्रकरणं पञ्चचत्वारिंशम्—ज, ठ.

निषिद्धकर्मणामानन्त्यात् प्रतिकर्म फलवचनाशक्तेः संक्षेपेण तदाह । एवमुक्तप्रकारेण तत्तत्कर्मविशेषेण तत्तल्लक्षणैः श्यावदन्तत्वादिभिः रोगैश्च कुष्ठादिभिः तथोभयलक्षणैः देहविकारैरन्धत्वादिभिरन्विता जायन्ते । अन्धः पूर्वोक्तः । कुब्जः पृष्ठगडुमान् । खञ्जः एकपादः । काणः एकलोचनः । वामनः ह्रस्वदेहः । बधिरः श्रोत्रेन्द्रियहीनः । मूकः पूर्वोक्तः । दुर्बलः कृशः । तथापरेऽपि कुणिषण्डादयो जायन्ते ।

इदं च कर्मविपाकानुकीर्तनमैहिक इव प्राग्भवीयेऽपि क्षयरोगाद्यनुमिते ब्रह्महत्यादौ द्वादशवार्षिकादि-व्रतप्राप्त्यर्थम् । यथाह **शातातपः**—

" महापापेषु सर्वं स्यात् तदर्धमुपपातके ।
दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलादिति ॥ "

इति । सर्वं द्वादशाब्दम् । तदर्धम् उपपातके व्रतार्धम् । पापेषु संकरीकरणादिषु । एतेन—" क्षयित्वादिलक्षण-कथनं न तद्युक्तानां द्वादशवार्षिकादिव्रतप्राप्त्यर्थम् " इति **प्राचां** प्रौढिवचनमपास्तम्; व्रतविधेः प्रत्यक्षत्वात् । नापि प्रयोजनाभावः ;

" प्रतिजन्म भवेत् तेषां चिह्नं तत्पापसूचकम् ।
प्रायश्चित्ते कृते याति पश्चात्तापवतां नृणाम् ॥ "

इति तेनैव रोगनिवृत्तेः प्रयोजनत्वेनाभिधानात् । एतेन " आरब्धफलपापनाशे न किंचित् प्रयोजनम् " इत्यप्यपास्तम्[1] । सर्वगृहदाहानुत्पत्त्यर्थं गृहैकदेशाग्निनिर्वापणवत् अनेकजन्मानुवर्तिष्यमाणव्याधिनिवृत्तेरेव प्रयोजनत्वात् ।

यच्च " तदारब्धफलनाशार्थोऽप्यपूर्वनाशो नान्वेषणीयः ; निमित्तकारणनाशेन कार्यनाशाभावात् " इति, तदप्यापाततः ; दुरितैकनिदानत्ववत् व्याध्यादेर्दुरितनाशैकनाश्यत्वस्यापि शब्दैकसमधिगम्यत्वेन लौकिक-तर्कनिरसनात् ; अपेक्षाबुद्धिनाशेन द्वित्वनाशस्य लोकेऽप्यनुसरणाच्च । तदप्याह **शातातपः**—

" कर्मजा हि नृणां रोगा यान्ति चैवं क्रमात् क्षयम् ।
जपैः सुरार्चनैर्होमैर्दानैश्चैषां शमो भवेत् ॥ "

इति । यथैव दुरितात् व्याधिः, एवं तत्क्षये व्याधिक्षय इति क्रमः । दुरितक्षयश्च जपादिभिरिति ।

यदप्युक्तम्—" नैसर्गिकं कौनख्यादि न प्रत्यानेयम् " इति, तदपि प्रत्यक्षविरुद्धम्; प्रायश्चित्तेन रोगनिवृत्तेः प्रत्यक्षोपलम्भात्; अनिवृत्तौ वैगुण्यकल्पनम् । [2]यदप्युक्तम्—" नरकतिर्यग्योन्याद्यनुभूतवतः कौनख्यादिकं चरमं फलम् । तेन चोत्पन्नमात्रेण स्वकारणापूर्वनाशान्न प्रायश्चित्तेनार्थः " इति, तदपि न । सत्यं नाश्यते ; परं तु न कृत्स्नम्; तथात्वे अनेकजन्मरोगानुवृत्तिविरोधात् । यथा मन्थनजनिता-शुशुक्षणिना अरणेर्भङ्गो न कृत्स्नायाः ।

[1] अपि omitted in च.

[2] यदुक्तम्—घ.

यदप्युक्तम्—"नापि संव्यवहारार्थम्; शिष्टैस्तेषामपरिहारात्" इति, तदपि न; "सर्वे संचारिणो नेत्रत्वग्विकारा विशेषतः" इत्यत्रिणा रोगमात्रस्य संचारित्वोक्त्या "व्याधितैर्न च संविशेत्" इति योगिना रोगिपरीहाराभिधानाच्च। यद्यप्ययं दृष्टार्थपरिहारः, तथापि "रोगी हीनातिरिक्ताङ्गः" "कुनखी श्यावदन्तकः" इत्यादिना श्राद्धे परिहारमदृष्टार्थमप्यवेहि। तस्मात् रोगाद्यनुमितेषु प्राग्भवीयेष्वपि ब्रह्महत्यादिषु पापक्षयार्थं श्राद्धादिषु संव्यवहारार्थं च प्रायश्चित्तमुक्तम्। अन्यथा कर्मविपाकशास्त्रानर्थक्यमिति।

यदप्युक्तम्—"यदपि कौनख्यादौ वासिष्ठं कृच्छ्रप्रायश्चित्तं, तदपि नैमित्तिकमेव न पापक्षयार्थम्" इति, तदपि न संभवति; प्रायश्चित्तस्य कौनख्यानुमितपापक्षयार्थत्वे नैमित्तिकत्वायोगात्। गृहदाहस्य तु पापजन्यत्वे प्रमाणाभावेन तन्निमित्तकक्षामवत्याः पापक्षयार्थत्वायोगात् युक्तं नैमित्तिकत्वमिति विषमो दृष्टान्तः। अथ गृहदाहादेरपि पापसामान्यं कल्प्येत, तर्हि तन्नाशार्थतैव क्षामवत्याः स्यात्; न नैमित्तिकत्वमित्यलं वृद्धमर्मविभेदनेन।

एवं त्रिविधपापफलश्रवणेन कान्दिशीकं प्रत्याह। यस्मात् प्रायश्चित्तस्य विधानादकरणे नरकतिर्यग्योनिकुष्ठरोगादीनि दुःखानि भवन्ति, तस्मात् तन्निदानपातकनाशेन तदनुत्पादाय उत्पन्नस्य रोगादेर्ध्वंसाय वा "कृते निःसंशये पापे न भुञ्जीतानुपस्थितः" इत्यालस्ये बाधकदर्शनात् आलस्यमुदस्य सम्यक् सभ्योपस्थानादिविधिपूर्वकं प्रायश्चित्तं पापनाशकं कर्माचरेत्; "प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्" इत्यङ्गिरःस्मरणात्॥ ३२, ३३॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवारणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मजश्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां पञ्चचत्वारिंशोऽध्यायः

[1] विष्णुस्मृतिविवृतौ पञ्चचत्वारिंशोऽध्यायः—घ, च.  [2] श्री omitted in ग.

## षट्चत्वारिंशोऽध्यायः

**अथ कृच्छ्राणि भवन्ति ॥ १ ॥ त्र्यहं नाश्नीयात् ॥ २ ॥ प्रत्यहं च[1] त्रिषवणं स्नानमाचरेत् ॥ ३ ॥ त्रिः प्रतिस्नानमप्सु [2]मज्जनम् ॥ ४ ॥ मग्नस्त्रिरघमर्षणं जपेत् ॥ ५ ॥ दिवा स्थितस्तिष्ठेत् ॥ ६ ॥ रात्रावासीनः ॥ ७ ॥ कर्मणोऽन्ते पयस्विनीं दद्यात् ॥ ८ ॥ इत्यघमर्षणम् ॥ ९ ॥**

पूर्वाध्यायान्ते विहितं प्रायश्चित्तं षट्चत्वारिंशेन प्रपञ्चयितुं प्रतिजानीते। अथेत्यधिकारः। कृच्छ्रसाध्यत्वात् कृच्छ्राणि वक्ष्यमाणव्रतानि वक्तव्यानि भवन्ति ॥ १ ॥ तत्राघमर्षणकृच्छ्रमाह। त्रीण्यहोरात्राणि न किंचिदश्नीयात् ॥ २ ॥ किंच त्रिरात्रं प्रत्यहं त्रिषवणं स्नानं च कुर्यात् ॥ ३ ॥ स्नाने गुणविशेषमाह। त्रिरात्रं प्रतिस्नानं त्रिवारमप्सु मज्जनं कार्यम्। अप्स्विति बहुवचनात् उद्धृतनिरासः। मज्जनविधानात् शिरस्यञ्जलिना प्रक्षेपनिरासः ॥ ४ ॥ किंच प्रतिस्नानं त्रिरात्रमप्सु निमग्नः[3] त्रिवारम् अघमर्षणसूक्तं जपेत् ॥ ५ ॥ किंच सूर्योदयमारभ्य यावत् सूर्यास्तं त्रिरात्रं कर्माविरुद्धे काले उत्थित एव तिष्ठेत्; नोपविशेत् ॥ ६ ॥ किंच त्रिरात्रं रात्रावासीत; न शयीत ॥ ७ ॥ किंच त्रिरात्रान्ते पयस्विनीं गां ब्राह्मणाय दद्यात् ॥ ८ ॥ उक्तव्रतसंज्ञामाह। इति उक्तप्रकारकं व्रतम् अघमर्षणसंज्ञं भवति। भेदव्यवहाराय संज्ञाकरणम्। इतिशब्देन प्रकारान्तरमप्युक्तम्। तदाह शङ्खः—

" त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः।
मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाघमर्षणम् ॥ "

इति ॥ ९ ॥

**त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमयाचितमश्नीयात्[4]। एष प्राजापत्यः ॥ १० ॥**

प्राजापत्यमाह। सायम्; दिवा भोजनपरिहारेण नक्तकाले। प्रातः; रात्रिभोजनपरिहारेण मध्याह्ने; " त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहम् " इति आपस्तम्बस्मरणात्। दिवा रात्रौ वा एकवारमयाचितं स्वीयं

[1] च omitted in ठ.
[2] निमज्जयेत्—ज, ठ.
[3] एव added in ख.
[4] त्र्यहं नाश्नीयात् added in ज.

परकीयं वा याचनव्यतिरेकेणोपस्थितम्; "अथापरं त्र्यहं न कंचन याचेत" इति **गौतमस्मरणात्**। त्र्यहमश्नीयात्; 'त्र्यहं नाश्नीयात्' इत्यनुवर्तते। तेनान्ते त्रिरात्रमुपवसेत्। सोऽयं प्राजापत्यः;

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं च नाश्नीयात् प्रजापत्यं चरन् द्विजः॥"

इति **मनुस्मरणात्**। अनेन च प्रातरुपक्रमेण मूलोक्तः सायमुपक्रमो विकल्प्यते। अयमेव प्रकारान्तरेण शिशुकृच्छ्रो बालादौ **वसिष्ठेनोक्तः**—

"अहः प्रातरहर्नक्तमहरेकमयाचितम्।
अहः पराकं तत्रैकमेवं चतुरहौ परौ॥
अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः।
बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह॥"

इति। पराकम्; उपवासः। "एकभक्तादीनां च चतुर्णां द्व्यहं द्व्यहमावृत्तौ वृद्धकृच्छ्रः" इति **शङ्खलिखितौ**। पादोनप्राजापत्याभिधानं त्ववान्तरविधानां पादोनतापर्यन्तताभिधानाय। तथाच पादकृच्छ्रोऽर्धकृच्छ्रः पादोनकृच्छ्रश्चेत्यस्यैवावान्तरविधाः सिध्यन्ति। यथाह **योगीश्वरः**—

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः॥"

इति। तथाच **आपस्तम्बः**—"सायं प्रातर्दिनार्धं स्यात् पादोनं नक्तवर्जितम्" इति। अयाचितोपवासपादाभ्यामर्धकृच्छ्रः। एकभक्तायाचितोपवासपादैश्च पादोनकृच्छ्र इति। प्रकारान्तरेणार्धकृच्छ्रमाह **स एव**—

"सायं प्रातस्तथैकैकं दिनद्वयमयाचितम्।
दिनद्वयं च नाश्नीयात् कृच्छ्रार्धं तद्विधीयते॥"

इति। अनेन कृच्छ्रप्राजापत्ययोरभेदो द्वादशाहसाध्यः प्राजापत्यश्चाभिहितः। **पराशरस्तु** तमेव षोडशाहसाध्यमुक्त्वा पादकृच्छ्रादिप्रकारमेवमाह—

"एकाहमेकभक्ताशी एकाहं नक्तभोजनः।
अयाचितं त्वेकमहरेकं मारुताशनः॥
दिनद्वयं चैकभक्तो द्विदिनं नक्तभोजनः।
दिनद्वयमयाची स्याद् द्विदिनं मारुताशनः॥
त्रिदिनं चैकभक्ताशी त्रिदिनं नक्तभोजनः।
दिनत्रयमयाची स्यात् त्रिदिनं मारुताशनः॥

चतुर्हं चैकभक्ताशी चतुर्हं नक्तभोजनः ।
चतुर्दिनमयाची स्याच्चतुर्हं मारुताशनः ॥ "

इति । तत्र च ग्राससंख्यामाह स एव—

" सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ।
एकविंशतिरायाच्यं परं निरशनं स्मृतम् ॥ "

इति । अशक्तस्याह **आपस्तम्बः**—

" सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः ।
कुक्कुटाण्डप्रमाणस्तु यथा वास्यं विशेत् सुखम् ॥ "

इति ॥ १० ॥

**[1]त्र्यहमुष्णाः पिबेदपस्त्र्यहमुष्णं घृतं त्र्यहमुष्णं पयस्त्र्यहं च नाश्नीयादेष तप्तकृच्छ्रः ॥ ११ ॥**

तप्तकृच्छ्रमाह । जलघृतदुग्धान्युष्णानि [2]प्रतित्र्यहं पीत्वा त्र्यहमुपवसेत् । स तप्तकृच्छ्रः । **मनुस्तु** द्रव्यव्यत्ययेनाह—

" तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत् स्नायात् समाहितः ॥ "

इति । जलादिपरिमाणमाह **पराशरः**—

" अपां पिबेत्तु त्रितयं द्विपलं तु पयः पिबेत् ।
पलमेकं पिबेत् सर्पिस्त्रिरात्रं चोष्णमारुतम् ॥ "

इति । उष्णमारुतम्; [3]उष्णोदकबाष्पमास्यपूरणम् । अशक्तस्याह **ब्रह्मपुराणम्**—

" षट् पलानि तु तप्तस्य तोयस्य सुसमाहितः ।
प्रभाते त्रीणि दुग्धस्य सुतप्तस्य पिबेत् त्र्यहम् ॥

[1] त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं पिबेत् सर्पिर्वायुभक्षः परं त्र्यहम् ॥
एष तप्तकृच्छ्रः—अ.

[2] प्रति omitted in ख.

[3] उष्णोदकपानम्—घ.

पलं घृतस्य तप्तस्य मध्याह्ने त्रिदिनं पिबेत् ।
वायुभक्षस्त्र्यहं चात्र निर्दहेत् पातकं ततः ॥"

इति । चतुरहसाध्यमाह **योगीश्वरः**—

"तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥"

इति । "एतैरेव द्रव्यैः समस्तैः सोपवासैः द्व्यहसाध्यस्तप्तकृच्छ्रः" इति **मिताक्षरा** ॥ ११ ॥

## [1]एतैरेव शीतैः शीतकृच्छ्रः ॥ १२ ॥

एतैरेव द्रव्यैः शीतैः चतुर्षु त्र्यहेषु पीतैः शीतकृच्छ्रः । 'इदं कृच्छ्रद्वयमेकोपवासकमन्ते ; तेन दशाहसाध्यम्' इति कश्चित् ॥ १२ ॥

## [2]कृच्छ्रातिकृच्छ्रः पयसा दिवसैकविंशतिक्षपणम् ॥ १३ ॥

एकविंशतिरात्रं पयसा दुग्धेन वर्तनं कृच्छ्रातिकृच्छ्रः । जलेनेति **ब्राह्मे**—

"चरन् कृच्छ्रातिकृच्छ्रं तु पिबेन् तोयं च शीतलम् ।
एकविंशतिरात्रं तु कालेष्वेतेषु संयतः ॥"

इति । एतेषु; प्रातर्मध्याह्नसायंकालेषु । **यमस्तु** चतुर्विंशतिरात्रमाह—"एकैकं ग्रासमश्नीयात्" इत्यनुवृत्तौ,

"चतुर्विंशतिरात्रं तु नियतात्मा जितेन्द्रिय
कृच्छ्रातिकृच्छ्रं कुर्वीत एकस्थाने द्विजोत्तमः ॥"

इति । एकस्थाने; एकवारम्, एकभक्तकाले वा । "द्वादशरात्रमुदकेन वर्तनं कृच्छ्रातिकृच्छ्रः" इति **गौतमः** । उदकं च सकृत् हस्तेन यावद् ग्रहीतुं शक्यते तावदेव ; "अब्भक्षस्तृतीयः कृच्छ्रातिकृच्छ्रो यावत् सकृदाददीत" इति **वासिष्ठात्** । "द्वादशरात्रं निराहारः कृच्छ्रातिकृच्छ्रः" इति **सुमन्तुः** ॥ १३ ॥

## उदकसक्तूनां मासाभ्यवहारेणोदककृच्छ्रः ॥ १४ ॥

उदककृच्छ्रमाह । मासमुदकमिश्रसक्तुप्राशनेन उदककृच्छ्रः । अयमेव वारुणः कृच्छ्रः ; "सक्तून् वा सोदकान् मासे कृच्छ्रो वारुण उच्यते" इति **ब्राह्मात्** । मासानुवृत्तौ "तोयकृच्छ्रो जलेन तु" इति **मार्कण्डेयः** ।

[1] एष एव—घ, च.    [2] कृच्छ्रातिकृच्छ्रः missing in घ, ञ,

" अनश्नन् जलमध्यस्थश्चाहोरात्रं जपन् बुधः ।
संवत्सरकृतं पापं जलकृच्छ्रो व्यपोहति ॥ "

इति **जाबालिः** । जपः वरुणसूक्तानां गायत्र्याश्च[1] ।

" वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाप्सु सूर्यदृक् ।
सहस्राष्टाधिकां जप्त्वा गायत्रीं जलकृच्छ्रकः ॥ "

इति **योगयाज्ञवल्क्यः** ॥ १४ ॥

**बिसाभ्यवहारेण मूलकृच्छ्रः[2] ॥ १५ ॥**

मूलकृच्छ्रमाह । मृणालस्य मासं भोजनेन मूलकृच्छ्रः । " मूलकृच्छ्रः स्मृतो मूलैः " इति **मार्कण्डेयः** । पक्वबिसाशने संज्ञान्तरं **ब्राह्मे**—" बिसान्युदकसिद्धानि मासमश्नीत संयतः " इति ; " कृच्छ्रो वारुण उच्यते " इति शेषः ॥ १५ ॥

**[3]बिल्वाभ्यवहारेण श्रीफलकृच्छ्रः ॥ १६ ॥ पद्माक्षैर्वा ॥ १७ ॥**

श्रीफलकृच्छ्रमाह । मासं बिल्वफलभक्षणेन श्रीफलकृच्छ्रः । " श्रीकृच्छ्रः श्रीफलैः प्रोक्तः " इति **मार्कण्डेयः** ॥ १६ ॥

तस्यैव प्रकारान्तरमाह । पद्मबीजैर्मासं भक्षितैर्वा श्रीफलकृच्छ्रः । वाशब्दात् आमलकैर्वा ;

" बिल्वैरामलकैर्वापि पद्माक्षैरथवा शुभैः ।
मासेन लोके श्रीकृच्छ्रः कथ्यते द्विजसत्तमैः ॥ "

इति **ब्राह्मात्** ॥ १७ ॥

**[4]निराहारस्य द्वादशाहेन पराकः ॥ १८ ॥**

पराकमाह । द्वादशाहं जपहोमसक्तस्याहारमात्रत्यागः पराकः ;

" जपहोमरतः कुर्याद् द्वादशाहमभोजनम् ।
पराक एष विख्यातः सर्वपापप्रणाशनः ॥ "

इति **बृहस्पतिस्मरणात्** ॥ १८ ॥

[1] गायत्र्या वा—ख, ग.
[2] शीतकृच्छ्रः—ज, ठ.
[3] This Sūtra omitted in ठ.
[4] निराहारेण—ज, ठ.

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकान्येकदिवसमश्नीयात्**[1] **। द्वितीयमुपवसेत् । एतत् सांतपनम् ॥ १९ ॥**

सांतपनमाह । गोमूत्रादिसाहचर्यात् ब्रह्मकूर्चदर्शनाच्च क्षीरादिकमपि गव्यमेव । क्षीरादिसाहचर्याच्च गोमूत्रादिकमपि स्त्रीगव्या एव । पूर्वेद्युः पञ्चगव्यं कुशोदकमिश्रमाहारान्तरनैरपेक्ष्येण पीत्वा परेद्युरुपवसेत् । एतत् सांतपनम् । कुशोदकानीति बहुवचनं कुशानेकत्वज्ञापनाय ; " सप्तपर्णास्तु ये दर्भाः " इति दर्शनात् । एतदेव समन्त्रकं ब्रह्मकूर्चमुच्यते । यथाह **पराशरः**—

" गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम् ॥
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम् ।
पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ॥
घृतं च कृष्णवर्णायाः सर्वं कापिलमेव वा ।
अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः ॥
गोमूत्रे माषकास्त्वष्टौ गोमयस्य तु षोडश ।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ॥
गोमूत्रवद् घृतस्योक्तास्तदर्धं तु कुशोदकम् ।
गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥
पञ्चगव्यमृचा पूतं होमयेदग्निसंनिधौ ।
सप्तपर्णास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥
एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावती इदं विष्णुर्मानस्तोके च शंवतीम् ॥
एताभिश्चैव होतव्यं हुतशेषं पिबेद् द्विजः ।
प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च ॥
प्रणवेन समुद्धृत्य पिबेत् तत् प्रणवेन तु ।
मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत् ॥
स्वर्णपात्रेण रौप्येण ब्रह्मतीर्थेन वा पुनः ।

1 एकविंशतिदिवसमश्नीयात्—ज.

यत् त्वगस्थिगतं पापं देहे तिष्ठति मामके ।
ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम् ॥ ”

इति । ब्रह्मकूर्चार्थम् उपवासो ब्रह्मकूर्चोपवास इति । अयमर्थः—पूर्वेद्युरुपोष्य परेद्युः प्राशनमिति पूर्वस्माद्विशेषः ;

“ चतुर्दश्यामुपोष्याथ पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्चमिति स्मृतम् ॥ ”

इति **जाबालिस्मरणात्** । विशेषस्तूक्तविधिना । तद्देशमप्याह **शातातपः**—

“ नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु च ।
तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेत् ॥ ”

इति । त्रिरात्रं पञ्चगव्याशने यतिसांतपनम् । “ एतदेव त्र्यहाभ्यस्तं यतिसांतपनं स्मृतम् ” इति **शङ्खस्मरणात्** ॥ १९ ॥

**गोमूत्रादिभिः [1]प्रत्यहमभ्यस्तैर्महासांतपनम् ॥ २० ॥**

महासांतपनमाह । गोमूत्रादिभिः षड्भिर्द्रव्यैः प्रत्येकं प्रत्यहम् अभ्यस्तैः महासांतपनं षडहसाध्यं भवति । **योगीश्वरस्तु** तदेव सोपवासं सप्ताहसाध्यमाह—

“ पृथक् सांतपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासांतपनं स्मृतम् ॥ ”

इति । एतदेवाद्योपवासकं कृच्छ्रं सांतपनं **ब्राह्मे**—

“ प्रथमेऽहनि नाश्नीयाद् गोमूत्राशी ततः परम् ।
चतुर्षु गोमयं क्षीरं दधि चाज्यमहःक्रमात् ।
कुशोदकं सप्तमे च कृच्छ्रसांतपने विधिः ॥ ”

इति । तैरेव प्रत्येकं त्र्यहाभ्यस्तैः पञ्चदशाहिकं महासांतपनम् ;

“ त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः ।
महासांतपनं ह्येतत् सर्वपापप्रणाशनम् ॥ ”

इति **यमस्मरणात्** । अत्र कुशोदकाभावः घृतान्तैरेव शुद्धयभिधानात् । षण्णां प्रत्येकं त्र्यहाभ्यासे त्र्यहमुपवासे चैकविंशाहिकं महासांतपनम् ;

[1] प्रत्यहाभ्यस्तैः—घ, च.

"षण्णां प्रत्येकमेतेषां त्रिरात्रमुपयोजयेत् ।
त्र्यहं चोपवसेदन्ते महासांतपनं स्मृतम् ॥"

इति **जाबालि**स्मरणात् ॥ २० ॥

**त्र्यहाभ्यस्तैश्चातिसांतपनम् ॥ २१ ॥**

अतिसांतपनमाह । तैरेव गोमूत्रादिभिः षड्भिः प्रत्येकं त्र्यहाभ्यस्तैः अष्टादशाहिकमतिसांतपनं भवति । तैरेव द्व्यहाभ्यस्तैर्दशाहिकम् । **यम** आह—

"एतान्येव तथा पेयान्येकैकं तु तथा द्व्यहम् ।
अतिसांतपनं नाम श्वपाकमपि शोधयेत् ॥"

इति ॥ २१ ॥

**पिण्याकाचामतक्रोदकसक्तूनामुपवासान्तरितोऽभ्यवहार-स्तुलापुरुषः ॥ २२ ॥**

तुलापुरुषकृच्छ्रमाह । पिण्याकः तिलखलिः । आचामः ओदननिस्रावः । तक्रम् उदश्वित् । उदकं जलम् । सक्तवः भर्जितयवपिष्टानि । तेषां प्रत्येकमुपवासानन्तरदिवसे भोजनं दशाहिकः तुलापुरुषः । **योगीश्वर**स्त्वेतमेव पञ्चदशाहिकमाह—

"एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥"

इति । **यमस्तु** एकविंशाहिकमाह—

"आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् ।
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहद्वयम् ।
एकविंशतिरात्रस्तु तुलापुरुष उच्यते ॥"

इति । अयमेव सैकोपवासः षडहः सौम्यकृच्छ्रः ;

"पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥"

इति **योगि**स्मरणात् ॥ २२ ॥

**कुशपलाशोदुम्बरपद्मशङ्खपुष्पीवटब्राह्मीसुवर्चलापत्रैः क्वथितस्याम्भसः [1]प्रत्येकं पानेन पर्णकृच्छ्रः ॥ २३ ॥**

[1] प्रत्यहं—ठ.

पर्णकृच्छ्रमाह । पलाशः किंशुकः । उदुम्बरः जन्तुफलः । पद्मम् अब्जम् । शङ्खपुष्पी भूसंलग्ना सूक्ष्मश्वेतकुसुमा । ब्राह्मीसुवर्चला ; अर्कभक्ताभिध ओषधिविशेषः ; " कपोतवङ्का चाथार्कभक्ता ब्रह्मसुवर्चला " इति निघण्टुस्मरणात् । तल्लक्षणं तु—

" शिग्रुपत्रसमं पत्रं मूलं विद्रुमसंनिभम् ।
पुष्पं तु श्यामलं प्रोक्तं भवत्येषा सुवर्चला ॥ "

इति । ब्राह्मीति सुवर्चलाविशेषणम् । तेनापरब्राह्मीव्युदासः । शेषं प्रसिद्धम् । [1]एषां सप्तानां पत्रैः क्वथितम् अम्भः सप्ताहं पीत्वा पर्णकृच्छ्रः । **योगीश्वरः** प्रकारान्तरेणाह—

" पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥ "

इति । त्रिरात्रोपवासान्ते समस्तैः तत्पानं पर्णकूर्चः । तथाह **यमः**—

" एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः ।
क्वाथयित्वा पिबेदद्भिः पर्णकूर्चोऽभिधीयते ॥ "

इति । मैत्रकृच्छ्रमाह **स एव**—

" कपिलायां तु दुग्धायां धारोष्णं तु पयः पिबेत् ।
एष मैत्रकृतः कृच्छ्रः सर्वपापप्रणाशनः ॥ "

इति ॥ २३ ॥

**कृच्छ्राण्येतानि सर्वाणि कुर्वीत कृतवापनः ।**
**नित्यं त्रिषवणस्नायी अधःशायी जितेन्द्रियः ॥ २४ ॥**

उक्तवक्ष्यमाणव्रतानां पूर्वाङ्गमाह । एतानि पूर्वोक्तानि सर्वाणि वक्ष्यमाणानि च कृच्छ्राणि व्रतानि, कृतवापनः ; कृतं वापनं केशश्मश्र्वादीनां येन तादृशः सन् कुर्वीत । वापनम् आद्यन्ताङ्गोपलक्षणम् । तानि चाह **अङ्गिराः**—

" अत ऊर्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणम् ।
उपस्थितो हि न्यायेन व्रतादेशनमर्हति ॥
कृते निःसंशये पापे न भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्धयेत् पापमसत्यं पर्षदि ब्रुवन् ॥
संशये तु न भोक्तव्यं यावत् कार्यस्य निर्णयः । "

[1] एतासां—घ, च.

संशयः पापस्य । कार्यस्य प्रायश्चित्तस्य ।

" प्रमादश्च न कर्तव्यो यथैवासंशये तथा ॥ "

प्रमादः उपेक्षा । असंशय इवेति सत्योपस्थितिः तात्कालिक्युच्यते ।

" कृत्वा पापं न गूहेत गूहमानस्य वर्धते ।
बहु वा [1]स्वल्पकं वापि धर्मविद्भ्यो निवेदयेत् ॥ "

इति । धर्मविदः सभ्याः । तानाह **पराशरः**—

" त्रैविद्यो हैतुकस्तर्की अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा ॥ "

इति । पूर्वे ; यतिव्यतिरिक्ताः । " त्रयश्चाश्रमिणो वृद्धाः " इति पाठे ब्रह्मचारि यतिरिक्ताः । तत्र यतिप्रायश्चित्ते यतयः, अन्यत्रान्ये इति ज्ञेयम् । **स्मृत्यन्तरे**—" पातके तु शतं पर्षत् सहस्रं महदादिषु " इति । आदिशब्दात् अतिपातके । " उपपापेषु पञ्चाशत् स्वल्पे स्वल्पा तथा भवेत् " इति । **अङ्गिराः**—

" पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम् ॥ "

इति । **पराशरः**—

" राज्ञश्चानुमतं स्थित्वा प्रायश्चित्तं विनिर्दिशेत् ।
स्वयमेव न कर्तव्यं कर्तव्या स्वल्पनिष्कृतिः ॥ "

इति । **अङ्गिराः**—

" प्रायश्चित्ते समुत्पन्ने [2]धीमान् सत्यपराक्रमः ।
मृदुरार्जवसंपन्नः शुद्धिं याचेत मानवः ॥
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्रियो वापि वैश्यो वा पर्षदं ह्युपतिष्ठति ॥
सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥
मया कृतं महाघोरं ज्ञाताज्ञातकिल्बिषम् ।
प्रसादः क्रियतां मह्यं [3]शुभानुज्ञां प्रयच्छत ॥
पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमैः ।
उपस्थाय ततः शीघ्रमार्तिमान् धरणीं व्रजेत् ॥

[1] स्वल्पकं—ग. [2] ह्रीमान्—ग. [3] शुध्दा—घ, च.

गात्रैश्च शिरसा चैव न च किंचिदुदाहरेत् ।
ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम् ।
वृद्धाः पृच्छन्ति किं कार्यमुपविश्याग्रतः स्थितम् ॥
किं ते कार्यं वदास्माभिः किं वा मृगयसे द्विज ।
तत्त्वतो ब्रूहि तत् सर्वं सत्यं हि गतिरात्मनः ॥
सत्येन द्योतते राजा सत्येन द्योतते रविः ।
सत्येन द्योतते वह्निः सर्वं सत्ये प्रतिष्ठितम् ॥
भूर्भुवःस्वस्त्रयो लोकास्तेऽपि सत्ये प्रतिष्ठिताः ।
अस्माकं चैव सर्वेषां सत्यमेव परं बलम् ॥
यदि चेद्वक्ष्यसे सत्यं नियतं प्राप्स्यसे शुभम् ।
यद्यागतोऽस्यसत्येन न त्वं शुध्यसि कर्हिचित् ॥
सत्येनैव हि शुध्यन्ति शुद्धिकामाश्च मानवाः ।
तस्मात् तद्वद यत् सत्यमादिमध्यावसानिकम् ।
एवं तैः समनुज्ञातः सर्वं ब्रूयादशेषतः ॥ "

इति । पापप्रवचनं च पर्षदं निबन्धं च संपूज्य पर्षद्दक्षिणां च दत्वा कार्यम् । तदाह **शातातपः**—" धेनुं दद्याद् द्विजेभ्योऽथ दक्षिणां च स्वशक्तितः " इति । धेनुं निबन्धपूजार्थं दद्यात् । अथ अनन्तरं द्विजेभ्यः सभ्येभ्यः शक्तितो दक्षिणां वक्ष्यमाणां दद्यात् । तामाह **पराशरः**—" पापं प्रख्यापयेत् पापी दत्त्वा धेनुं तथा वृषम् " इति । ' गोमिथुनं च न स्वरूपतः ; पर्षद्विभागासहत्वात् विक्रयनिषेधाच्च । किंतु निष्क्रयरूपेण ' इति प्राञ्चः । इदं च कृच्छ्रव्रते । ततोऽधिके तु, ' स्वशक्तितः ' इति वचनात् अधिककल्पना कार्या । न्यूने तु विशेषमाह **विष्णुः**—

" पादव्रते वस्त्रदानं कृच्छ्रार्धे तिलकाञ्चनम् ।
पादहीने तु गामेकां कृच्छ्रे गोमिथुनं स्मृतम् ॥ "

इति । प्रकीर्णके तु किंचिद्देयम् ; " विख्याप्य पापं वक्तृभ्यः किंचिद्दत्त्वा व्रतं चरेत् " इति **स्मरणात्** । पर्षद्दक्षिणामन्तरेण प्रायश्चित्तं न देयम् । तत्र **अङ्गिराः**—

" अनर्थितैरनाहूतैरपृष्टैश्च यथाविधि ।
प्रायश्चित्तं न दातव्यं जानद्भिरपि कल्पतः ॥ "

इति । अर्थितानामवचनेऽपि **स एव** ;

" आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।
जानन्तो न प्रयच्छन्ति ते तेषां समभागिनः ॥

तस्मादार्तं समासाद्य ब्राह्मणं च विशेषतः।
जानद्भिर्धर्मपन्थानं न भाव्यं तु पराङ्मुखैः॥"

इति। जानद्भिरिति वचनात् अज्ञैर्न देयम्। यथाह **शातातपः**—

"यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते।
नैव शुद्धिमवाप्नोति प्रायश्चित्ते कृतेऽपि सः॥
अदृष्ट्वा धर्मशास्त्राणि प्रायश्चित्तं वदन्ति ये।
तत् पापं शतधा भूत्वा तद्वक्तॄनभिगच्छति॥"

इति। प्रायश्चित्तदानमाह **अङ्गिराः**—

"तस्मिन् निवेदिते कार्य उत्सार्यो हि स कार्यवान्।
तस्मिंस्तूत्सारिते पापे यथा ये धर्मपालकाः॥
ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम्।
आपद्धर्मेषु यत् प्रोक्तं यच्च सानुग्रहं भवेत्॥
पर्षदः संपदश्चैव कार्याणां च बलाबलम्।
यथादेशं यथाकालं यच्च कार्यान्तरं भवेत्॥"

कार्यान्तरम्; वृद्धमातापितृशुश्रूषादि। "पर्षत् संचिन्त्य तत् सर्वं प्रायश्चित्तं विनिर्दिशेत्" इति। तत्राह **पराशरः**—

"वचः पूर्वमुदाहार्यं यथोक्तं धर्मवक्तृभिः।
पश्चात् कार्यानुसारेण शक्त्या कुर्युरनुग्रहम्॥
दुर्बलेऽनुग्रहः कार्यस्तथा वै शीघ्रशुद्धये।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः॥"

इति। **हारीतः**—

"पादत्रयमथाप्यर्धं पादं वापि विधानतः।
ज्ञात्वा बलाबलं कार्ये प्रायश्चित्तं प्रकल्पयेत्॥"

इति। **अङ्गिराः**—

"आहूय श्रावयेदेकः पर्षदा यो नियोजितः।
ब्राह्मणो ब्राह्मणानां तु क्षत्रियाणां पुरोहितः॥
वैश्यानां याजकश्चैव प्रायश्चित्तं समादिशेत्।
शृणु भोस्त्वमिदं विप्र यत् त आपूर्यते व्रतम्॥

तत् ते यत्नेन कर्तव्यमन्यथा तद् वृथा भवेत् ।
यदा त्वया भवेच्चीर्णं सदा शुद्धिप्रकाशनम् ।
कृत्वा कुर्याः प्रयत्नेन शक्त्या विप्राभिपूजनम् ॥"

इति । अत्र सभ्यानामिव प्राड्विवाकस्यापि दक्षिणा गम्यते; प्रायश्चित्तोपदेशस्य लोभमूलकत्वात्; अन्यथा निषिद्धे प्रवृत्त्यनुपपत्तेः । असावनुक्तपरिमाणत्वात् यथापापं कल्पनीया ।

प्रायश्चित्तोपदेशमाह **पराशरः**—"प्रायश्चित्तं प्रदातव्यं देवतायतनाग्रतः" इति । सभ्यप्रायश्चित्तमाह स एव—"आत्मकृच्छ्रं ततः कुर्याज्जपेद्वा वेदमातरम्" इति । आत्मकृच्छ्रम्; आत्मशोधकमित्यर्थः । प्राड्विवाकप्रायश्चित्तमाह **अङ्गिराः**—"प्रायश्चित्तं समादिश्य तप्तकृच्छ्रं समाचरेत्" इति । रागद्वेषादिना पर्षदसंभवे **सुमन्तुः**—"अथवा रागद्वेषादलभ्यमानेषु प्रायश्चित्तेषु यज्ञहवनाध्ययनब्रह्मचर्यपरो भैक्षाशी दण्डी मेखली स्वयमेव संवत्सरेण महापातकानि तत्परो व्यपोहति किल्बिषम् । न ब्राह्मणस्य पतनमिच्छन्त्याचार्याः" इति । अस्यार्थः—[1]रागादिवशात् पर्षदः सकाशात् प्रायश्चित्तमलभमानः स्वयमेव शास्त्रपर्यालोचनया अन्योपदेशेन वा विदुषः पृष्ट्वा तत् समाचरेत् । कथमित्यत आह—यज्ञहवनेति । उपलक्षणमेतत् तद्व्रतानाम्; अन्यथा उपपातकादिष्वप्यश्वमेधादियज्ञः प्राप्नुयात् । यज्ञः; अश्वमेधादिः । हवनम्; कोटिहोमादि । अध्ययनम्; संहितापारायणादि । शेषं प्रसिद्धम् । तत्र कालमाह—संवत्सरेणेति । इदमपि तत्तत्कालोपलक्षणम्; अन्यथा महापातकप्रकीर्णकयोरविशेषेण संवत्सरापत्तेः । [2]उक्तेऽर्थे हेतुमाह—न ब्राह्मणस्येति । पर्षदुपदेशमन्तरेण प्रायश्चित्ताचरणे ब्राह्मणस्यात्यन्तिकं पातित्यं स्यात् । तच्चाचार्या नेच्छन्ति । अनेनाशक्याज्ञान्तरहानेनापि प्रायश्चित्ताचरणमुक्तं भवति । ब्राह्मणग्रहणात् न क्षत्रियादेस्तादृशानुष्ठानमेव इति । व्रतग्रहणप्रकारमाह **विष्णुः**—

"सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम् ।
ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते ।
दिनान्ते नखरोमाणि प्रवाप्य स्नानमाचरेत् ॥"

इति । नखरोमादिप्रवापने विशेषमाह **पराशरः**—

"पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।
त्रिपादे तु शिखावर्जं सशिखं तु निपातने ॥"

इति । निपातनः; कृच्छ्रः । स्त्रीणां विशेषमाह—

"केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।
गोवधादिषु सर्वेषु छेदयेदङ्गुलित्रयम् ॥"

[1] रागद्वेषादि—ख.    [2] उक्तार्थे—घ.

इति । नारी सधवा ;

" सधवानां तु नारीणामलंकाराय सर्वदा ।
केशसंधारणं प्रोक्तं प्रायश्चित्ते द्विजोत्तमैः ॥ "

इति **स्मरणात्** । तेन विधवानां वपनमेव । सधवेति कुमार्या अप्युपलक्षणम् ;

" सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलद्वयम् ।
एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम् ॥ "

इति **पराशरस्मरणात्** । नारीपदस्य सधवापरत्वेन कुमारीणामप्राप्तौ पृथगुपादानमर्थवत् । राजादीनामपि विशेषः ;

" राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
अकृत्वा वपनं तेषां प्रायश्चित्तं विनिर्दिशेत् ॥ "

इति **पराशरस्मरणात्** । तेषां वपनाभावे व्रतद्वैगुण्यम् ;

" केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ।
द्विगुणे व्रत आचीर्णे दक्षिणा द्विगुणा भवेत् ॥ "

इति तस्यैव **स्मरणात्** । इदमपि महापातकादिव्यतिरेकेण ;

" विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः ॥ "

इति **स्मरणात्** । अत एव **हारीतः**—

" राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥ "

इति । तदनन्तरमाह **अङ्गिराः**—" भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः " ; आदिशब्दात् कुशोदकम् । " मलापकर्षणं कार्यं बाह्यशौचोपसिद्धये " ; मलापकर्षणमित्यनेन दृष्टार्थतावगमान्मन्त्रादिनिवृत्तिः । " दन्तधावनपूर्वेण पञ्चगव्येन संयुतम् " इति । यद्यपि स्नानानन्तरं दन्तधावनमुक्तम् ; तथाप्याह्निके बद्धक्रमत्वात् स्नानात् प्रागेव कार्यम् । तेन तत्रत्यमन्त्रसिद्धिः । स्नानानन्तरं वैष्णवं श्राद्धं कार्यम् ; " श्राद्धं कार्यं व्रतान्ते च गोहिरण्यादि दक्षिणा " इति **जाबालिस्मरणात्** । श्राद्धं च विष्णूद्देशेन त्र्यवरब्राह्मणभोजनम्[1] ; " विधाय वैष्णवं श्राद्धं संकल्प्य निजकाम्यया " इति **शातातपीयात्** । श्राद्धानन्तरमादितो गोदानं कार्यम् ; 'व्रतान्ते च' इति चकारात् आदावपि तत्सिद्धेः । तत्र विधिर्गौदानिक एव । तदनन्तरं शालाहोमः कार्यः ;

[1] विप्रभोजनम्—ख, ग.

"आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयाद् व्याहृतीः पृथक् ॥"

इति जाबालिस्मरणात् । 'आज्येनैव' इत्येवकारेणेष्ट्यादिनिवृत्त्या तत्तन्त्रनिवृत्तिः । तदनन्तरं पञ्चगव्यप्राशनं कार्यम् । तत्प्रकारश्च ब्रह्मकूर्चविधावुक्तः । तदसंभवे त्वमन्त्रकमेव पञ्चगव्यं पेयम् ; सांतपने तथा दर्शनात् । विष्णुरपि—

"पञ्चगव्येन संयुतम् ।
व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने ॥
आचम्यातः परं मौनी ध्यायन् दुष्कृतमात्मनः ।
मनःसंतापनं तीव्रमुद्वहेच्छोकमन्ततः ॥"

इति । बहिः, ग्रामाद् गृहाद्वा । पञ्चगव्यप्राशनावसर एव 'व्रतग्रहणं करिष्ये' इति ब्राह्मणान् पृष्ट्वा तदनुज्ञातः तत्प्राशनं कुर्यादिति संयुतशब्दार्थः । पञ्चगव्यासंभवे [1]घृतमात्रप्राशनमेव । तथाच शङ्खलिखितौ—

"वाप्य केशनखान् पूर्वं घृतं प्राश्य बहिर्निशि ।
प्रत्येकनियतं कालमात्मना व्रतमुद्दिशेत् ॥"

इति । प्रत्येकेति ; प्रतिनियतं कालम् आत्मना अन्तःकरणेनोद्दिशेत् संकल्पयेदित्यर्थः । स्त्रीणां विशेषमाह जाबालिः—"स्त्रीणां होमो न दातव्यः पञ्चगव्यं तथैव च" इति । होमपञ्चगव्ये अङ्गभूते ; तयोरेव प्रक्रमात् । स्त्री शूद्रस्याप्युपलक्षणम् ;

"पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणश्च सुरां पिबेत् ।
तावुभौ तुल्यदोषौ हि पूयाख्ये नरके गतौ ॥"

इति वक्ष्यमाणत्वात् ;

"तथा शूद्रं समासाद्य सदा धर्मपथे स्थितम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥"

इति अत्रिस्मरणात् । एत एव श्राद्धगोदानहोमाः प्रातिलोम्येन व्रतान्तेऽपि कार्याः ; होमव्रतयोरुपक्रमे संनिधानादन्तेऽपि सांनिध्यस्योचितत्वात् । "व्रतान्ते च गोहिरण्यादि दक्षिणा" इति वचनात् श्राद्धानन्तरमेव गोदानं भवति । ततश्च व्रतसमाप्त्यनन्तरं प्रथमं होमः । ततो वैष्णवं श्राद्धम् । अन्ते च गोदानमिति शिष्टसांप्रदायिकः क्रमः पाठक्रमान्यत्वेऽपि द्रष्टव्यः । एवं व्रतस्य पूर्वोत्तराङ्गानि वापनशब्देनोपलक्ष्य, इदानीं व्रताचरणकालीनाङ्गान्याह । सवनशब्देन स्वकालत्रयं लक्ष्यते । तेन च नित्यं व्रतग्रहणोत्तरदिनमारभ्य

[1] मात्र omitted in घ.

यावद्व्रतसमाप्तिदिनं तावत् त्रिष्वपि सवनकालेषु प्रातर्मध्याह्नसायाह्नेषु स्नानशीलो भवेत्। तदेतत् तप्तकृच्छ्र-व्यतिरिक्तविषयम्; तत्र "सकृत्स्नायी समाहितः" इति **मानवीयविशेषात्**। यत्तु "त्रिरह्नस्त्रिर्निशायां च सवासा जलमाविशेत्" इति [1]**मानवीयं**, तत् पिपीलिकामध्यचान्द्रायणव्यतिरिक्तेषु शक्तविषयम्; "अप उपस्पृशंस्त्रिषवणम्" इति विशेषात्। त्रिषवणाशक्तस्य द्विकालस्नानमाह **वैशम्पायनः**—"स्नानं त्रिकालमेव स्याद् द्विकालं वा द्विजन्मनः" इति। यत्तु **गार्ग्येण**—"एकवासाश्चरेद्भैक्षं स्नात्वा वासो न पीडयेत्" इत्युक्तं, तत् ग्रीष्मकाले अशक्तस्य; "एकवासा आर्द्रवासा लघ्वाशी स्थण्डिलेशयः" इति **शङ्खेनै**कवस्त्रताया: पाक्षिकत्वाभिधानात्। अधःशायी; खट्वादिपरिहारेण भूमिशायी। अधः शयनं च स्थानासनाशक्तस्य; "स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा" इति **मानवात्**। जितेन्द्रियः हिंसादिवर्जितः; "अहिंसां सत्यमक्रोधमार्जवं च समाचरेत्" इति **मानवात्** ॥ २४ ॥

**स्त्रीशूद्रपतितानां च [2]वर्जयेच्चातिभाषणम्।**
**पवित्राणि जपेन्नित्यं जुहुयाच्चैव शक्तितः ॥ २५ ॥**

**इति [3]श्रीविष्णुस्मृतौ षट्चत्वारिंशोऽध्यायः**

स्त्री परस्य। भाषणं स्पर्शाद्युपलक्षणम्;

"स्त्रीणां संप्रेक्षणात् स्पर्शात् ताभिः संकथनादपि।
ब्रह्मचर्यं विनश्येत न दारेषु तु संगमात् ॥"

इति **शातातपीयात्**। अपिशब्दोऽत्र रागोत्पादकतामाचष्टे। ततः यथा रागो नोत्पद्यते, तथा भवेदिति; "यावदर्थं भाषेत" इति **आपस्तम्बीयात्** न व्रतलोपो भवतीति विज्ञायते। पवित्राणि; "अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः" इति **वसिष्ठाद्युक्तानि** नित्यकर्माविरुद्धे काले जपेत्। अनुवर्तमाने नित्यशब्दे पुनर्वचनं त्रिषवणाद्यसंभवेऽपि जपावश्यकताद्योतनार्थम्। अत एव **शङ्खः**—"गायत्र्या जपसाहस्रमाह्निको जप उच्यते" इति जपाधिक्यमेवाह। पवित्राणीति बहुवचनात् गायत्रीं च; "सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः" इति **मानवात्**। होमेऽपि नित्यमिति संबद्ध्यते। स च कूष्माण्डैर्व्याहृतिभिः सावित्र्या वा तिलयवानामन्यतमेन; "कूष्माण्डैर्जुहुयाद् घृतम्" इति शङ्खस्मरणात्;

"महाव्याहृतिभिर्होमः सावित्र्या चान्वहं स्वयम्।
कर्तव्यः पावनः सम्यक् सर्पिर्यवतिलैस्तथा ॥"

1 मानवं—घ, च.
2 वर्जयेच्चापि—ठ; वर्जयेदभि—ज
3 वैष्णवे धर्मशास्त्रे कृच्छ्रप्रकरणं षट्चत्वारिंशम्—ज, ड.

इति वसिष्ठस्मरणाच्च । चकारात् मौनादिग्रहणम् ;

" स्थानवीरासनी मौनी मौञ्जी दण्डकमण्डलू ।
भैक्षचर्याग्निकार्यं च कूश्माण्डैर्जुहुयाद् घृतम् ॥ "

इति शङ्खस्मरणात् । 'शक्तितः' इति वचनात् बालवृद्धादिभिरशक्याङ्गहानेनापि व्रतं कार्यम् । तथाच लघुविष्णुः—

" असंस्कृतो निराहारो रोगी नवतिवार्षिकः ।
यथाशक्ति प्रकुर्वीत व्रतं ह्येषु न लुप्यते ॥ "

इति । षट्त्रिंशन्मतेऽपि—

" जपहोमादि यत्किंचित् कृच्छ्रोक्तं संभवेन्न चेत् ।
[1]सर्वं व्याहृतिभिः कार्यं गायत्र्या प्रणवेन वा ॥ "

इति । सर्वथाशक्तावन्यद्वारापि कार्यम् । यथा ब्राह्मे—

" रोगी वृद्धश्च पौगण्डः कुर्वीतान्यैर्व्रतं सदा ।
गर्भिणी बालवत्सा च प्रसूतार्थान्तरावृतः ॥ "

इति । पौगण्डः बालः । अर्थान्तरावृतः ; अनन्यसाध्यकार्यव्यापृतः । कुर्वीत ; कारयेत् ॥ २५ ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[3]श्रीरामपण्डितात्मजश्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां षट्चत्वारिंशोऽध्यायः

[1] सर्व—घ.
[2] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.
[3] श्री omitted in ग.

## सप्तचत्वारिंशोऽध्यायः

**[1]अथ चान्द्रायणम् ॥ १ ॥ [2]ग्रासानविकारानश्नीयात् ॥ २ ॥**

पूर्वाध्याये कृच्छ्रलक्षणमुक्तम्। इदानीं चान्द्रायणलक्षणं सप्तचत्वारिंशेनाभिधातुं प्रतिजानीते। अथेत्यधिकारः। चान्द्रायणमुच्यत इति शेषः ॥ १ ॥ तत्र ग्रासपरिमाणमाह। ग्रस्यन्त इति ग्रासाः कबलाः। तान् अविकारान् शास्त्रोक्तपरिमाणान् अन्यूनाधिकान् यत्र ग्रासविधानं तत्राश्नीयात्। तत्राह **योगीश्वरः**—"तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिख्यण्डसंमितान्" इति। तत्परिमाणाशनाशक्तावाह **गौतमः**—"ग्रासपरिमाणमास्याविकारेण" इति। आस्यविकारः प्राकृतविकासात् संकोचविकासातिशयः। **पराशरोऽपि**—"कुक्कुटाण्डप्रमाणं वा ग्रासं तु परिकल्पयेत्" इति। **शङ्खोऽपि**—"आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्मृताः" इति। ग्रासद्रव्याण्याह **गौतमः**—"चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि[3]" इति। पयोग्रासपरिमाणं तु आवर्तनेन घनीभूतस्य घटते। यथा—"घृतस्य तत्परिमाणं पर्णपुटिकादिना" इति **प्राञ्चः**। यद्यपीदं चान्द्रायणप्रकरणेऽभिहितम्, तथापि वाक्यबलात् आकाङ्क्षितत्वाच्च कृच्छ्रादावप्युपतिष्ठते ॥ २ ॥

**तांश्चन्द्रकलाभिवृद्धौ [4]वर्धयेत्, हानौ ह्रासयेत्, अमावास्यायां[5] नाश्नीयात्। एष चान्द्रायणो यवमध्यः ॥ ३ ॥**

यवमध्यं चान्द्रायणमाह। चन्द्रकलानामभिवृद्धिर्यस्मिन् पक्षे, तत्र पूर्वोक्तद्रव्यपरिमाणान् ग्रासान् वर्धयेत्। अयमर्थः—शुक्लपक्षे यथा चन्द्रकलाः एकैकोपचयेन वर्धन्ते, तथैवैकैकोपचयेन ग्रासान् वर्धयेत्। प्रतिपद्येकः, द्वितीयायां द्वौ, तृतीयायां त्रय इत्यादिवृद्ध्या पौर्णमास्यां पञ्चदश भवन्ति। ततः पुनः चन्द्रकलाहानौ कृष्णपक्षे एकैकापचयेन ह्रासयेत्। प्रतिपदि चतुर्दश, द्वितीयायां त्रयोदश, तृतीयायां द्वादशेति हान्या चतुर्दश्यामेको भवति। ततोऽमावास्यायां नाश्नीयात् उपवसेत्। अवशिष्टग्रासाभावादेवानशनप्राप्तौ पुनर्वचनं नियमार्थम्;

[1] This Sūtra omitted in ठ.

[2] ग्रासानास्याविकारेण—ठ.

[3] उत्तरोत्तरशस्तानि—ग, च.

[4] क्रमेण वर्धयेत्, तद्धानौ च—ज, ठ.

[5] च added in ठ.

"एकैकं वर्धयेत् पिण्डं शुक्ले कृष्णे च ह्रासयेत्[1] ।
इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः ॥"

इति **वसिष्ठ**स्मरणात्। ग्रासाशनकालश्च चन्द्रोदयकाल एव रात्रिंदिवसाधारणः। तथाच **हारीतः**—"ज्योत्स्नायां सावित्र्याभिमन्त्रितान् पिण्डान् प्राश्नीयात्" इति। एष पौर्णमास्यादिदर्शान्तमाससाध्यश्चान्द्रायणः। चन्द्रस्यायनमिवायनं यस्येति चान्द्रायणः; चन्द्रकलोपचयापचयाभ्यां ग्रासोपचयोपचयात्। संज्ञायां दीर्घः। यवमध्यता तु वक्ष्यते। पुंलिङ्गनिर्देशश्च "एष चान्द्रायणो मासः" इति **गौतमीये** माससामानाधिकरण्यात् ॥ ३ ॥

**पिपीलिकामध्यो वा ॥ ४ ॥ यस्याामावास्या मध्ये भवति स पिपीलिकामध्यः ॥ ५ ॥ यस्य पौर्णमासी स यवमध्यः ॥ ६ ॥**

तस्यैव गुणविशेषात् संज्ञान्तरमाह। यदा ग्रासहानिमेवादौ प्रयुङ्क्ते पश्चात् वृद्धिं, तदासौ पिपीलिकामध्यो भवति। तद्यथा—कृष्णपक्षप्रतिपदि चतुर्दश ग्रासान् भुक्त्वा, एकापचयेन चतुर्दश्यामेकं ग्रासं भुक्त्वा अमावास्यायामुपोष्य, पुनः शुक्लप्रतिपदमारभ्य एकैकोपचयेन पौर्णमास्यां पञ्चदश भवन्तीति। यथाह **वसिष्ठः**—

"मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश।
ग्रासापचयभोजी सन् पक्षशेषं समापयेत्।
एतत् पिपीलिकामध्यं चान्द्रायणमुदाहृतम् ॥"

इति ॥ ४ ॥

संज्ञाद्वये निमित्तमाह। उपक्रमे कृष्णप्रतिपदि चतुर्दश ग्रासाः, मध्ये अमावास्यायामुपोषणम्, अन्ते पौर्णमास्यां पञ्चदश ग्रासा इति पिपीलिकावन्मध्येऽणीयो भवतीति स पिपीलिकामध्यः ॥ ५ ॥

किंच शुक्लप्रतिपद्येको ग्रासः, पौर्णमास्यां पञ्चदश, अमावास्यायामुपोषणम्। एवं यववन्मध्ये स्थवीयः प्रान्तयोश्चाणीयो भवतीति यवमध्यः। यथाह **वसिष्ठः**—

"तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम्।
ग्रासोपचयभोजी सन् पक्षशेषं समापयेत्।
एतच्चान्द्रायणं नाम यवमध्यं प्रकीर्तितम् ॥"

इति। यद्यपि लक्षणाभिधान एवायमर्थो लभ्यते, तथापि लक्ष्यतावच्छेदकलक्षणयोरभेदापत्त्या पृथगभिधानमुभयोः। तत्र पौर्णमासीमध्यत्वं लक्ष्यतावच्छेदकम्; वृद्धिपूर्वकह्रासवद्ग्रासवत्त्वं लक्षणं यवमध्यस्य। तथा पिपीलिकामध्यस्य अमावास्यामध्यत्वं लक्ष्यतावच्छेदकम्; ह्रासपूर्वकवृद्धिमद्ग्रासवत्त्वं लक्षणमिति। यदा त्वन्यतरस्मिन् पक्षे तिथिह्रासवृद्धिभ्यां षोडश चतुर्दश वा दिनानि भवन्ति, तदा ग्रासानामपि वृद्धिक्षयौ

1. संत्यजेत्—घ, च.

वेदितव्यौ ; "तिथिवृद्धया चरेत् पिण्डान्" इति योगिस्मरणात् ; [1]वक्ष्यमाणषट्यूनत्रिशतीवत् संख्याप्रचयाश्रवणाच्च ॥ ६ ॥

**अष्टौ ग्रासान् प्रतिदिवसं मासमश्नीयात् स यतिचान्द्रायणः ॥ ७ ॥**

यतिचान्द्रायणमाह । मासं प्रतिदिनमष्टानां ग्रासानाम् अपर्याप्तेः अष्टाष्टाविति वीप्सा कल्प्यते । ततश्च मासं प्रतिदिनमष्टावष्टौ ग्रासानश्नीयात् स यतिचान्द्रायणः ; "अष्टौ ग्रासा मुनेर्भक्षः" इति यतिवत् ग्रासनियमात् । यतिचान्द्रायणग्रासाशनं च मध्याह्ने । यथा **मनुः**—

"अष्टावष्टौ समश्नीयात् पिण्डान् मध्यंदिने रवौ ।
नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् ॥"

इति । पूर्वं चान्द्रमासोपक्रमात् प्रवृत्तिनिमित्तं विना चान्द्रायणशब्दाप्रवृत्तेः प्राकृतविकारत्वाच्चात्रापि चान्द्रमाससाध्यत्वमेवावसीयते, न सावनादिमाससाध्यत्वम् । अतश्च तिथिह्रासवृद्ध्योरत्रापि ग्रासह्रासवृद्धी कल्पनीये; मासमिति अत्यन्तसंयोगे द्वितीयाश्रवणात् । विकृतित्वादेव प्रकृतिप्राप्ते मासे पुनर्मासग्रहणं द्विविधस्यापि प्राप्त्यर्थम् । अन्यथा शुक्लादिरेव प्राप्नुयात्; प्रकृतिसमवायात् । यद्वा, अमावास्यायामुपोषणाभावाय पुनर्मासग्रहणम् । तेनोपक्रमतिथिरत्र शुक्ला कृष्णा वा प्रतिपद्भवति ॥ ७ ॥

**[2]सायं प्रातश्चतुरश्चतुरः स शिशुचान्द्रायणः ॥ ८ ॥**

शिशुचान्द्रायणमाह । मासं प्रत्यहं सायं सूर्यास्तानन्तरं प्रातस्त्रिमुहूर्तमध्ये चतुरश्चतुरः पिण्डान् अश्नीयात् । स शिशूनामिवात्यन्ताल्पाशनेन शिशुचान्द्रायणः ;

"चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः ।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं चरन् ॥"

इति **मनुस्मरणात्** । अनया च समाख्यया बालानामिदमेवेति गम्यते । तथा च **यमः**—

"चतुरः प्रातरश्नीयाच्चतुरः सायमेव च ।
पिण्डानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम् ॥"

[1] वक्ष्यमाणषट्योन—ग.

[2] सायं चत्वारः, प्रातश्चत्वारः—ज.

इति । [1]नियतग्राससाध्यत्वेनान्यदपि सूचितम् । यथा **यमः**—

" त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ॥ "

इति ॥ ८ ॥

**यथा कथंचित् षष्ट्योनां त्रिशतीं मासेनाश्नीयात् स सामान्यचान्द्रायणः ॥ ९ ॥**

सामान्यचान्द्रायणमाह । यथाकथंचित् उक्तप्रकारातिरिक्तेन येन केनापि ग्राससंख्याविनियोगेन एकस्मिन् चत्वारः, अपरस्मिन् द्वादश, एकाहमुपोष्य, अपरस्मिन् षोडश, द्व्यहमुपोष्य, तृतीये चतुर्विंशतिः, त्र्यहमुपोष्य, चतुर्थे द्वात्रिंशत् इत्येषामन्यतमेन षष्ट्योनां त्रिशतीं ग्रासानां मासेन शक्त्या अश्नीयात्, स सामान्यचान्द्रायणः । यद्यपि यतिशिशुचान्द्रायणयोरपीयं संख्या वर्तते, तथापि नानियतविनियोगेनेति न तयोरत्रान्तर्भावः । अत्रैतत्संख्याम्नानात् यवमध्यपिपीलिकामध्ययोर्नेयं संख्या; तत्र पञ्चविंशत्यधिकशतद्वय-संख्यासिद्धेः । प्रकृतिप्राप्तेऽपि मासे पुनर्वचनं नियमार्थम्;

" यथाकथंचित् पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ "

इति **योगि**स्मरणात् । अन्यथा द्वादशभिरेव दिनैः प्रत्यहं विंशतिग्रासाशनेन चतुर्विंशतिदिनसाध्यसोमायनवत् [2]चान्द्रायणमपि स्यात् । यदा तस्मिन्नेव व्रते तिथिह्रासवृद्धी भवतः, तदा तद्दिनप्राप्तायाः संख्यायाः द्वैगुण्यमर्धक्लृप्तिर्वा कार्या; षष्ट्योनत्रिशतीपूरणस्यावश्यकत्वात् । एतन्मध्ये त्वेकादशीपातेऽपि नोपवासलोपः, एकादश्यविलोपेनापि ग्राससंख्यापूरणसंभवात्; यथाकथंचिदिति वाक्यात् । यवमध्यादौ त्वेकादश्युपवासलोप एव; तस्यामेकादशग्रासानशने कलावृद्ध्याद्यननुसरणेन व्रतस्वरूपलोपप्रसङ्गात् । तत्र पूर्वारब्धमेकादशीव्रत-मन्यद्वारा करणीयमिति तत्त्वम् । माससाध्यमेव सोमायनम् । तदाह **मार्कण्डेयः**—

" गोक्षीरं सप्तरात्रं तु पिबेत् स्तनचतुष्टयात् ।
स्तनत्रयात् सप्तरात्रं सप्तरात्रं स्तनद्वयात् ॥
स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत् ।
एतत् सोमायनं नाम व्रतं कल्मषनाशनम् ॥ "

इति । अत्रापि चान्द्रायणीया एव धर्माः; **हारीतेन** " एवं सोमायनम् " इति चान्द्रायणधर्मातिदेशात् । अशक्तस्य प्रकारान्तरमाह **स एव**—" [3]कृष्णचतुर्थीमारभ्य शुक्लद्वादशीं यावत् चतुःस्तनेन त्रिरात्रं, त्रिस्तनेन

[1] From here up to ऋषिचान्द्रायणं स्मृतम् ॥ इति omitted in ख, ग.

[2] चान्द्राणमित्यपि—ग.

[3] कृष्णचतुर्दशीम्—ख.

त्रिरात्रं, द्विस्तनेन त्रिरात्रम् , एकस्तनेन त्रिरात्रम् ; एवमेकस्तनप्रभृति पुनश्चतुःस्तनपर्यन्तम् ; 'या ते सोम चतुर्थी तनूः, तया नः पाहि, तस्यै स्वाहा ; या ते सोम पञ्चमी षष्ठी' इत्येवं यथार्थास्तिथिहोमाः ; एकमाप्त्वा एनोभिः पूतश्चन्द्रमसः सालोक्यं सायुज्यं च गच्छति " इति । इदं चतुर्विंशतिरात्रसाध्यम् ॥ ९ ॥

**व्रतमेतत् पुरा [1]भूमि कृत्वा सप्तर्षयोऽमलाः ।**
**प्राप्तवन्तः परं स्थानं ब्रह्मा रुद्रस्तथैव च ॥ १० ॥**

**इति [2]श्रीविष्णुस्मृतौ सप्तचत्वारिंशोऽध्यायः**

उक्तविधेरर्थवादमाह । एतदुक्तविधिना इदं चान्द्रायणं पुरा कल्पान्तरे कृत्वा सप्तर्षिब्रह्मरुद्राः उत्कृष्टं स्थानं प्रापुः । तस्मात् एतद्धर्मार्थमपि कार्यमित्युक्तम् ; " धर्मार्थं यश्चरेदेनच्चन्द्रस्यैति सलोकताम् " इति योगिस्मरणात् । भूमिशब्दस्य " अम्बार्थनद्योर्ह्रस्वः " इति संबोधने ह्रस्वः ॥ १० ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[1]श्रीरामपण्डितात्मज[4]श्रीनन्द-
पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां सप्तचत्वारिंशोऽध्यायः

[1] भूमी—ज.　　[2] वैष्णवे धर्मशास्त्रे चान्द्रायणप्रकरणं सप्तचत्वारिंशम्—ज, ठ.

[3] श्रीविष्णुस्मृतिविवृतौ सप्तचत्वारिंशोऽध्यायः—घ, च.　　[4] श्री omitted in ग.

# अष्टचत्वारिंशोऽध्यायः

**अथ कर्मभिरात्मकृतैर्गुरुमात्मानं मन्येतात्मार्थे प्रसृतियावकं श्रपयेत् ॥ १ ॥**

अथाष्टचत्वारिंशेन निमित्तविशेषे नैमित्तिकं यावकव्रतमाह । अथेत्यधिकारः । आत्मकृतैरिति परकृत-कर्मसंसर्गे नेदमिति गमयति । अत एव यावकोपक्रमे हारीतः—

"अयाज्ययाजनं कृत्वा प्राश्य मूत्रपुरीषके ।
अप्रतिग्राह्यमादाय याजयित्वा तु निन्दितान् ॥"

इति स्वकृतमेव कर्माभिहितवान् । कर्मभिः; अयाज्ययाजनादिभिः । गुरुम् आत्मानं मन्येत; स्वकृतशुभाशुभ-कर्मणः स्वान्तरात्मसाक्षिकतया तत्कृतात्मगौरवलाघवैः स्वप्रत्यक्षे तज्ज्ञानं निमित्तमत्र दर्शितम् । यद्वा तुलापुरुष-कृच्छ्रोक्तप्रकारेण परात्मप्रतिकृतितोलने आत्मप्रतिकृतेर्गौरवं मन्येतेति व्याख्येयम्;

"यदा तु गुरुमात्मानमसकृत्तुलया धृतम् ।
परं च लाघवं मन्येत् ततः कर्म समारभेत् ॥"

इति हारीतस्मरणात् । आत्मार्थ इति आत्ममात्रार्थे । प्रसृतियावकं प्रसृतिपरिमितयवसाध्यं चरुं श्रपयेत् स्वयम्; नान्यश्रपितं ग्राह्यम् । अत्र औशनसो विशेषः—"स्नातः शुचिर्भूत्वोदितेषु नक्षत्रेषु ताम्रभाजने प्रसृतियावकं श्रपयेद्यथा यवागूर्भवति" इति ॥ १ ॥

**न ततोऽग्नौ जुहुयात् ॥ २ ॥ न [1]चात्र बलिकर्म ॥ ३ ॥ अश्रृतं श्रप्यमाणं श्रृतं चाभिमन्त्रयेत् ॥ ४ ॥ श्रप्यमाणे रक्षां कुर्यात् ॥ ५ ॥**

**ब्रह्मा देवानां पदवीः कवीना[2]-**
**मृषिर्विप्राणां महिषो मृगाणाम् ।**

[1] ततो—ञ, ठ.

[2] कवीनामिति दर्भान्—ञ.

**श्येनो गृध्राणां स्वधितिर्वनानां**
**सोमः पवित्रमत्येति रेभन् ॥**
**इति दर्भान् बध्नाति ॥ ६ ॥**

आत्मपदव्यावर्त्यमाह । ततः प्रसूतियावकात् अग्नौ होमं वैश्वदेवं न कुर्यात् । न चासंस्कृतान्नभोजनं-दोषः; वैश्वदेवानन्तरं पुनः पाक इव दोषाभावात् ॥ २ ॥ किंच बलिकर्म; चित्रादिभ्यो भोजनकालीनं बलि-दानम्; न भूतयज्ञः; तस्य हुतशेषद्रव्यत्वेन होमनिवृत्त्यैव निवर्तनात् ॥ ३ ॥ अश्रृतम्; अग्नावनधिश्रितम्। श्रप्यमाणम् अधिश्रयणानन्तरं शृतं पक्वम् । चकारात् अवरोप्य च "यवोऽसि" इति सार्धषण्मन्त्रैर्वक्ष्य-माणैरभिमन्त्रयेत् । "शृतेऽवरोप्य देवस्य त्वा सवितुरित्यादिनोत्पूय सावित्र्याभिमन्त्र्य ततोऽभिमन्त्रयेत यवोऽसीत्यादिभिः षड्भिः" इति औशनसात् ॥ ४ ॥ श्रप्यमाणे चरौ वक्ष्यमाणमन्त्रेण रक्षां कुर्यात् ॥ ५ ॥ तत्र मन्त्रः—ब्रह्मा देवानामिति । अनेन मन्त्रेण चरुस्थालीकण्ठे दर्भान् बध्नीयात् । औशनसे त्वन्ये मन्त्राः—"तस्य श्रपणकाले रक्षां कुर्यात्, नमो रुद्राय भूताधिपतये पर्वतानां पतये त्वमिमं रक्षस्व" इति । अस्मिन् पक्षे अभिमन्त्रणमात्रम्; न दर्भबन्धनमिति विशेषः ॥ ६ ॥

**शृतं च [1]तमश्नीयात् पात्रे निषिच्य ॥ ७ ॥ [2]ये देवा मनो-जाता मनोजुषः सुदक्षा दक्षपितरस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेत्यात्मनि जुहुयात् ॥ ८ ॥ [3]अथाचान्तो नाभिमालभेत ॥९॥ स्वाताः पीता भवत यूयमापो अस्माकमुदरे यवाः, ता अस्मभ्यमनमीवा अयक्ष्मा अनागसः सन्तु देवीरमृताँ ऋतावृध इति ॥ १० ॥**

शृतं च तं चरुं पात्रान्तरे निषिच्य तमश्नीयात् ॥ ७ ॥ तत्र मन्त्रः—ये देवा इति । अनेन मन्त्रेण चरुं प्राश्नीयात्; न मन्त्रान्तरेण । तत्रौशनसो विशेषः—"ततो ब्रह्मा देवानामिति प्राश्य ततः प्राणाय स्वाहेत्यादिभिर्यथोक्तं सर्वं प्राश्नीयात्" इति ॥ ८ ॥ चरुप्राशनोत्तरं यथोक्तमालभेत । तत्र मन्त्रः—स्वाता इति । अनेन नाभिमालभेत ॥ ९, १० ॥

**त्रिरात्रं मेधार्थी ॥ ११ ॥ षड्रात्रं पापकृत् ॥ १२ ॥ सप्तरात्रं पीत्वा महापातकिनामन्यतमं पुनाति ॥ १३ ॥ द्वादशरात्रेण पूर्व-**

[1] लघ्वश्नीयात्—ठ.
[2] Sūtra-s 8, 9, 10 omitted in ठ.
[3] Sūtra-s 9, 10 omitted in ज.

**पुरुषकृतमपि पापं निर्दहति[1] ॥ १४ ॥ मासं पीत्वा सर्वपापानि ॥ १५ ॥ गोनिहारमुक्तानां यवानामेकविंशतिरात्रं च ॥ १६ ॥**

उक्तकर्मणो यथाधिकारं विनियोगमाह । मेधा धारणावती बुद्धिः । तदर्थी त्रिरात्रं प्राश्नीयात् ॥ ११ ॥ महापातकादर्वाचीनं पापं कृत्वा षड्रात्रं प्राश्नीयात्; "षड्रात्रं ततो नियमातिक्रमजात् प्रतिषिद्धसेवनजात् अभक्ष्यभक्षणजाच्च सर्वस्मात् पापात् प्रमुच्यते" इति उशनःस्मरणात् ॥ १२ ॥ सप्तरात्रपानेन ब्रह्महादीनामेकं पुनाति; "सप्तरात्रं पीत्वा भ्रूणहत्यां गुरुतल्पं सुवर्णस्तेयं सुरापानं च पुनाति" इति उशनःस्मरणात् ॥ १३ ॥ द्वादशाहं पीत्वा पित्रादिकृतमपि पापं निर्दहति । अपिशब्दात् आत्मनोऽपि पूर्वकृतम्; "एकादशरात्रं पीत्वा पूर्वकृतं पापं नुदति[2]" इति उशनःस्मरणात् ॥ १४ ॥ मासं त्रिंशद्दिनं पीत्वा सर्वाणि महापापोपपापादीनि सर्वेषां स्वस्य पित्रादीनां च निर्दहति । तत्तन्महापातकादौ व्यवस्था कल्पनीया ॥ १५ ॥ गोनिहारः; गोमयम्; तेन सह मुक्ताः गोनिहारमुक्ताः । तेषां यवानाम् एकविंशतिरात्रमेव यावकप्राशनेन सर्वपापानि निर्दहतीति शुद्धयवेभ्यो विशेषः । उशना—"एकविंशतिरात्रं पीत्वा गणान् पश्यति, गणाधिपतिं पश्यति, विद्याधिपतिं पश्यति, एवमहरहरन्याहारो यवागूं प्राश्नीयात्" इति । शङ्खस्तु मासमाह—

"गोपुरीषाद्यवान्नं च मासं नित्यं समाहितः ।
व्रतं तु यावकं कुर्यात् सर्वपापापनुत्तये ॥"

इति ॥ १६ ॥

**यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः ।**
**निर्णोदः सर्वपापानां पवित्रमृषिभिर्धृतम् ॥ १७ ॥**
**घृतं यवा मधु यवा आपो वा अमृतं यवाः ।**
**सर्वे पुनीत मे पापं यन्मे किंचन दुष्कृतम् ॥ १८ ॥**
**वाचा कृतं कर्मकृतं [3]मनसा दुर्विचिन्तितम् ।**
**अलक्ष्मीं कालकर्णीं च नाशयध्वं यवा मम ॥ १९ ॥**
**श्वसूकरावलीढं च उच्छिष्टोपहतं च यत् ।**
**मातापित्रोरशुश्रूषां [4]तत्पुनीध्वं यवा मम ॥ २० ॥**
**गणान्नं गणिकान्नं च शूद्रान्नं श्राद्धसूतकम् ।**
**चौरस्यान्नं नवश्राद्धं पुनीध्वं च यवा मम ॥ २१ ॥**

1 निर्णुदति—ज; निर्हन्ति—घ.
2 तुदति—ख
3 दुःस्वप्नं—ज.
4 पुनीध्वं च—ठ.

[1]बालधूर्तमधर्मं च राजद्वारकृतं च यत् ।
सुवर्णस्तैन्यमव्रात्यमयाज्यस्य च याजनम् ।
ब्राह्मणानां परीवादं पुनीध्वं च यवा मम ॥ २२ ॥

इति [2]श्रीविष्णुस्मृतावष्टचत्वारिंशोऽध्यायः

अश्रुताद्यभिमन्त्रणे मन्त्रानाह । स्मृतमिति **औशनसे** ॥ १७ ॥ "अलक्ष्मीं कालकर्णीं च सर्वं पुनत मे यवाः" इति **औशनसे** ॥ १८, १९ ॥ "केशकीटावधूतं च काकाद्युच्छिष्टमेव च । + सर्वं पुनत मे यवाः ॥" इति **औशनसे** ॥ २० ॥ श्राद्धसहितं सूतकम् । "तथाभक्ष्यं सर्वं पुनत मे यवाः" इति **औशनसे** ॥ २१ ॥ धूर्तमित्यत्र भावप्रधानो निर्देशः । अव्रतसमूहः अव्रात्यम् । सुवर्णस्तैन्यं महापातकोपलक्षणम् ; "महापातकसंयुक्तं दारुणं राजकिल्बिषम्" इति **औशनसात्** । परीवादः निन्दा ॥ २२ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीलक्ष्मणनायका**परनामधेय**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[4]**श्रीरामपण्डिता**त्मज[4]**श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्या**मष्टचत्वारिंशोऽध्यायः

1 बालवृत्तं—ज.
2 वैष्णवे धर्मशास्त्रे पावकप्रकरणमष्टचत्वारिंशम्—ज, ठ.
3 श्रीविष्णुस्मृतिविवृतौ अष्टचत्वारिंशोऽध्यायः—घ, च.
4 श्री omitted in ग.

## एकोनपञ्चाशत्तमोऽध्यायः

**मार्गशीर्षशुक्लैकादश्यामुपोषितो द्वादश्यां भगवन्तं [1]श्रीवासुदेवमर्चयेत्[2] ॥ १ ॥ [3]पुष्पधूपानुलेपनदीपनैवेद्यैः [4]वह्निब्राह्मणतर्पणैश्च ॥ २ ॥**

अथैकोनपञ्चाशत्तमेन वैष्णवव्रतान्याह । मृगशीर्षर्क्षयुक्ता पौर्णमासी यस्मिन् मासे स मार्गशीर्षः । तस्य शुक्लैकादश्यां यथाविधि उपोषितः पापमोहराहित्येन भगवन्नामकीर्तनादियुक्तः श्वोभूते द्वादश्यां प्रातः भगवन्तं श्रीवासुदेवं षोडशर्चेन पुरुषसूक्तेनावाहनादिविसर्जनान्तैः षोडशभिरुपचारैः पूजयेत् । यद्वा वासुदेवद्वादशाक्षरेण गन्धादिपञ्चोपचारैरेवार्चयेत् ॥ १ ॥

उपचारानाह । पुष्पं जात्यादि । धूपः अगर्वादिः । अनुलेपनं चन्दनादि । दीपः घृतादेः । नैवेद्यं पायसादि । अनुलेपनस्य पश्चात् पाठेऽपि दानमादावेव । एतैरुपचारैः यथाशक्ति होमैः ब्राह्मणभोजनैश्चार्चयेत् । तत्र होमः पुरुषसूक्तेन वासुदेवद्वादशाक्षरेण वा तिलयवाज्यानामन्यतमेन कार्यः ॥ २ ॥

**व्रतमेतत् संवत्सरं कृत्वा पापेभ्यः पूतो भवति ॥ ३ ॥ यावज्जीवं कृत्वा श्वेतद्वीपमाप्नोति ॥ ४ ॥ उभयपक्षद्वादशीष्वेवं संवत्सरेण स्वर्गलोकमाप्नोति ॥ ५ ॥ यावज्जीवं कृत्वा विष्णुलोकम् ॥ ६ ॥ एवमेव पञ्चदशीष्वपि ॥ ७ ॥**

उक्तव्रतस्य कालं फलं विनियोगं चाह । मार्गशीर्षशुक्लद्वादशीमारभ्य कार्तिकशुक्लद्वादशीपर्यन्तं द्वादशस्वपि शुक्लद्वादशीषु पूर्वोक्तं व्रतं कृत्वा पातकादिभ्यो नवविधेभ्योऽपि[5] पापेभ्यो मुक्तः पूतो भवति । यथोक्तं **स्कान्दे**—

> " पापं च विविधं प्रोक्तं पातकं चातिपातकम् ।
> उपपातकसंज्ञं च महापातकमेव च ॥

[1] श्री omitted in घ, च. [2] अभ्यर्चयेत्—ज.
[3] अनुलेपनपुष्पधूपदीप—ठ. [4] वह्नि omitted in घ. [5] अपि omitted in घ.

प्रकीर्णकं चान्यदपि नराणामिह जायते ।
अभोज्यभोजनाज्जातमगम्यागमनाच्च यत् ॥
अयाज्ययाजनाद्यच्च अभक्ष्याणां च भक्षणात् ।
अस्पृश्यस्पर्शनाच्चैव[1] परेषां निन्दनाच्च यत् ॥
आत्मसंस्तवनाद्यच्च पारदार्यकृतं च यत् ।
विहिताकरणाद्यच्च परवित्तापहारतः ॥
ज्ञानाज्ञानकृतं यच्च स्वयमन्येन कारितम् ।
तत् सर्वं विलयं याति एकादश्यामुपोषणात् ॥
एकादशी महापुण्या मार्गशीर्षस्य शुक्लगा ।
तस्यामुपोषितो यस्तु द्वादश्यां पूजयेद्धरिम् ॥
तस्य पापानि नश्यन्ति विष्णौ भक्तिश्च जायते ।
ज्ञानं च शाश्वतं येन संसारान्मुच्यते नरः ॥"

इति । अगम्यागमनं निषिद्धदेशाभिमुख्येन गमनं, वेश्यादिगमनं वा; मात्रादिगमनस्यातिपातकत्वेन परदारगमनस्य च स्वातन्त्र्येणैवोपादानात् । न चेदमर्थवादमात्रम्; मूलवाक्येन फले विनियोगात् । ततश्च यत्र फले विनियोगो नास्ति, तत्रापि रात्रिसत्रन्यायेनार्थवादिकमेव फलं कल्पनीयम् । यथा—

"नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः ।
तावत् कर्तुं न शक्नोति पातकं पातकी जनः ॥"

इत्यादौ । न चैवमन्यानर्थक्यम्; धनिकसमर्थादिविषयत्वेन द्वादशवा[illegible]द्युपपत्तेः, निर्धनासमर्थभक्तविषयत्वेन च भगवन्नामस्मरणस्येत्यलमतिगुप्तनिजसर्वस्वप्रकाशनेन ॥ ३ ॥ उक्तव्रतस्य कालविशेषेण फलान्तरमाह । उक्तमेव व्रतं यावज्जीवं व्रतग्रहणदिनमारभ्यामरणं कृत्वा श्वेतद्वीपं हरिवंशादिप्रसिद्धं भगवदधिष्ठानं प्राप्नोति ॥ ४ ॥ उक्तधर्मव्रतकं व्रतान्तरमाह । संवत्सरं कृष्णशुक्लद्वादशीषु एवं पूर्वोक्तप्रकारकं व्रतं कृत्वा स्वर्गलोकम् इन्द्रादिस्थानं प्राप्नोति ॥ ५ ॥ अस्यापि कालविशेषेण फलान्तरमाह । चतुर्विंशतिद्वादशीषु यावज्जीवमुक्तव्रताचरणे विष्णुलोकं प्राप्नोति ॥ ६ ॥ उक्तव्रते कालान्तरमप्याह । एवमेव चतुर्दश्यामुपोष्य पञ्चदशीषु पौर्णमासीषु अमावास्यासु च भगवन्तं श्रीवासुदेवमुक्तविधिनाभ्यर्च्य उक्तकालेनोक्तमेव फलं प्राप्नोति[2] ॥ ७ ॥

**ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च ।**
**योगभूतं परिचरन् केशवं महदाप्नुयात् ॥ ८ ॥**

[1] स्पर्शनाद्यच्च—ख.

[2] आप्नोति—ख.

**दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।**
**पौर्णमासी तु महती प्रोक्ता [1]संवत्सरे तु सा ॥ ९ ॥**
**तस्यां दानोपवासाद्यमक्षयं परिकीर्तितम् ।**
**तथैव द्वादशी शुक्ला या स्याच्छ्रवणसंयुता ॥ १० ॥**

इति [2]श्रीविष्णुस्मृतौ एकोनपञ्चाशोऽध्यायः

तत्रैव गुणफलमाह । तत्रैव पञ्चदशीव्रते यद्यमावास्यायां ब्रह्मभूतं नित्यनिरतिशयसुखानन्दरूपं, पौर्णमास्यां च योगभूतं योगशायिनं केशवमर्चयन्ति, तदा महत् ब्रह्मरूपनामाप्नोति । अनेन ब्रह्मकेशवयोगकेशवाभिधं विशिष्टं देवताद्वयमभिहितम् । तेन च पूजायां ब्रह्मकेशवाय नमः, योगकेशवाय नम इति प्रयोगः ॥ ८ ॥

उक्तव्रतेषु फलविशेषाय कालविशेषमाह । यस्मिन् संवत्सरे यस्यां पौर्णमास्यां गुरुचन्द्रावेकनक्षत्रे एकराशौ वा दिवि दृश्येते, या च शुक्ला द्वादशी श्रवणनक्षत्रयुक्ता भवति, सा उभय्यपि तस्मिन् संवत्सरे महतीत्युच्यते; स्नानदानव्रतोपवासादेरक्षय्यताहेतुत्वात । यथाह **गार्ग्यः**—

"माससंज्ञे यदा ऋक्षे चन्द्रः संपूर्णमण्डलः ।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता ॥"

इति । **शंकरगीतास्वपि**—

"एकराशिगतौ स्यातां यदा गुरुनिशाकरौ ।
सा पौर्णमासी महती सर्वपापहरा स्मृता ॥"

इति । शुक्लेति कृष्णाव्युदासः । येति सामान्येनोपादानं भाद्रपदशुक्लातिरिक्ताया अपि प्राप्त्यर्थम् । यथा **ब्रह्मवैवर्ते**—

"नभस्ये फाल्गुने वापि यदि वा द्वादशी भवेत ।
शुद्धश्रवणसंयुक्ता महती विजया च सा ॥"

इति ॥ ९, १० ॥

**इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[4]श्रीरामपण्डितात्मज[4]श्रीनन्द-पण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामेकोनपञ्चाशत्तमोऽध्यायः**

[1] संवत्सरेस्तु—ठ.
[2] वैष्णवे धर्मशास्त्रे व्रतप्रकरणमेकोनपञ्चाशम्—ज, ठ.
[3] विष्णुस्मृतिविवृतौ एकोनपञ्चाशत्तमोऽध्यायः—घ, च.
[4] श्री omitted in ग.

# पञ्चाशत्तमोऽध्यायः

## वने पर्णकुटीं कृत्वा वसेत् ॥ १ ॥

पञ्चत्रिंशेऽध्याये कामकृतेषु महापातकेषु प्रायश्चित्तमुक्तम् । इदानीमकामकृतेषु प्रायश्चित्तं वक्तुं पञ्चाशत्तमेन ब्रह्महत्यायां तावदाह । 'ब्राह्मणं हत्वा द्वादशसंवत्सरम्' इत्यग्रेतनेनानुषङ्गः । ततश्च ब्रह्महा द्वादशाब्दमरण्ये पर्णशालां कृत्वा तत्र वसेत् । वनाभावे पक्षान्तरमाह **मनुः**—

" कृतवापो वा निवसेद् ग्रामान्ते गोव्रजेऽपि वा ।
आश्रमे वृक्षमूले वा सर्वभूतहिते रतः ॥ "

इति । कृतवापो वेति विकल्पेन जटाधारणं गम्यते ; " ब्रह्महा द्वादशाब्दानि वाल्वासा जटी ध्वजी " इति **संवर्तस्मरणात्** । वाल्वासाः ; कम्बलच्छन्नः । परिधानार्थं तु शाणी ; " अर्धशाणीपक्षमधोनाभ्युपरि जान्वाच्छाद्य" इति **आपस्तम्बीयात्** ॥ १ ॥

## त्रिषवणं स्नायात् ॥ २ ॥

त्रिकालं स्नायात् । स्नानविधानात् तदङ्गमन्त्रप्राप्तिः ; भावनायाः त्र्यंशत्वात् । त्रिकालग्रहणात् त्रिकालसंध्योपासनमपि गम्यते ;

" संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत् ॥ "

इति **दक्षेण** सर्वकर्माङ्गताभिधानात् । न च " द्विजातिकर्मभ्यो हानिः पतनम् " इति **गौतमवाक्येन** सर्वशब्दसंकोचः ; तस्य प्रायश्चित्तानङ्गभूतद्विजातिकर्मपरत्वादिति **प्राञ्चः** । वस्तुतस्तु महापातकेषु पुनःसंस्कारविधानान्यथानुपपत्त्या पूर्वसंस्कारनाशावगमात् सावित्र्यन्तरोपदेशश्रवणाच्च न संध्यावन्दनेऽधिकारः । संध्यावन्दनाधिकारापादकसंस्कारनाशात् सावित्र्यन्तरोपदेशजन्यसंस्कारानुदयाच्च । किंच यथा आशौचे " नित्यानि निवर्तेरन् " इत्यनेन सर्वकर्मापवादे कृते यत् प्रतिप्रसूतमग्निहोत्रादि तावदेवानुष्ठेयं, न पञ्चयज्ञादि ; प्रतिप्रसवाभावात् ; तथा अपतिताधिकारिकाणां सर्वेषां संध्यावन्दनादिकर्मणां " द्विजातिकर्मभ्यो हानिः " इत्यनेनापवादात् कूश्माण्डीजपादिवद् विना प्रतिप्रसवमनुष्ठानासिद्धेर्न संध्यावन्दनाद्यधिकार इति प्रतिभाति । विशेषान्तरं [1]तु अस्माभिः **पराशरस्मृतिटीकायां विद्वन्मनोहरायामुक्तमिति** नेहोच्यते ॥ २ ॥

[1] तु omitted in च.

**स्वकर्म [1]चाचक्षाणो ग्रामे ग्रामे भैक्ष्यमाचरेत् ॥ ३ ॥**

स्वकर्म ब्रह्महत्या। तामाख्यायैव प्रतिग्रामं भैक्षं चरेत्। यथाह **पराशरः**—"वेश्मद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः" इति। चकारात् "पथोऽपक्रामेत् संदर्शनादार्यस्य" इति **गौतमीयं** ग्राह्यम्। द्वारग्रहणात् न वेश्मप्रवेशः; "ब्राह्मणावसथांश्चैव देवागाराणि वर्जयेत्" इति **यम**स्मरणात्। ग्रामे ग्राम इति वीप्सया नैकस्मिन्नेव ग्राम इति गम्यते। यथा **पराशरः**—

"गोकुलेषु च सर्वेषु ग्रामेषु नगरेषु च।
तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च।
एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम्॥"

इति। ग्रामे भैक्ष्यमिति वचनात् भैक्ष्यायैव ग्रामे प्रवेशः, नान्यथा; "भिक्षार्थे ग्रामं प्रविशेत्" इति **गौतमीयात्**। भैक्ष्यविधिमाह **यमः**—

"मृन्मयेन कपालेन स्वकर्म श्रावयंस्तथा।
सप्तागाराण्यपूर्वाणि यान्यसंकल्पितानि वै॥
संचरेत् तानि शनकैर्विधूमे भुक्तिवर्जिते।
एककालं चरेद्भैक्ष्यमलब्ध्वोपवसेद्दिनम्॥"

इति। तच्च ब्राह्मणेष्वेव, "ब्राह्मणेषु चरेद्भैक्ष्यं स्वकर्म ख्यापयन् शुचिः" इति **पाराशर्यात्**। तदसंभवे चातुर्वर्ण्येषु; "चातुर्वर्ण्यं चरेद्भैक्ष्यं खट्वाङ्गी संयतः पुमान्" इति **संवर्त**स्मरणात्। तदपि वन्येन जीवनाशक्तौ; "भिक्षार्थे प्रविशेद् ग्रामं वन्यैर्यदि न जीवति" इति **संवर्त**स्मरणात्॥ ३॥

**तृणशायी च स्यात् ॥ ४ ॥ एतन्महाव्रतम् ॥ ५ ॥**

तृणेष्वेव शयीत, न शय्यादौ। इदं च वीरासनासंभवे; "स्थानवीरासनी मौनी" इति **शङ्ख**स्मरणात्। दिवा स्थानं, रात्रौ वीरासनमिति व्यवस्था; "रात्रौ वीरासनं वसेत्" इति **स्मरणात्**। चकारादन्यदपि ब्रह्मचर्यादि ग्राह्यम्; "द्वादशसंवत्सरान् ब्रह्मचारी" इति **गौतमीयाच्च**। आह च **शङ्खः**—"मौञ्जी दण्डकमण्डलू। भिक्षाचर्याग्निकार्ये च कूश्माण्डीभिः सदा जपः।" इति। दण्डः अजिनस्याप्युपलक्षणम्। तच्च गार्दभम्, "खट्वाङ्गी [2]गार्दभाजिनी" इति **शङ्ख**स्मरणात्। तथा मधुमांसादिवर्जनमपि ब्रह्मचर्योक्तमेव। तथा शिरःकपालादिकमपि धार्यम्; "शिरःकपाली ध्वजवान्" इति **योगि**स्मरणात्। हतस्यैव शिरःकपालम्; "ब्राह्मणो ब्राह्मणं हत्वा तस्यैव शिरःकपालमादाय तीर्थान्यनु-

[1] च omitted in ठ.

[2] गर्दभा—घ.

संचरेत्" इति शातातपीयात्। ध्वजः अन्यशवशिरः; "कृत्वा शवशिरोध्वजम्" इति मानवात्। तदुभयं पाणिभ्यां धार्यम्, "खट्वाङ्गकपालपाणिः" इति गौतमीयात्। तत्र कपालं दक्षिणे, वामे ध्वजः; "कपालं दक्षिणे पाणौ वामे शवशिरोध्वजम्" इति स्मरणात्। कपालं च चिह्नार्थं, न [1]भोजनाद्यर्थम्, "पुरुषशिरः प्रतिपादनार्थं खट्वाङ्गं दण्डार्थे" इति आपस्तम्बीयात्। प्रतिपादनं ब्रह्महत्याज्ञापनम्। दण्डो ब्रह्मचर्याङ्गत्वेन श्रुतः; तदर्थम्। तेन न पृथक् दण्डप्राप्तिः ॥ ४ ॥ उक्तव्रतसंज्ञामाह। एतत् उक्तं महाव्रतसंज्ञम्; कृच्छ्रादिभ्योऽधिककालत्वान्महत्त्वम् ॥ ५ ॥

**ब्राह्मणं हत्वा द्वादशसंवत्सरं कुर्यात् ॥ ६ ॥**

तस्य निमित्तविशेषेण कालविशेषं विनियोगं चाह। यः साक्षादकामतो ब्राह्मणं हन्ति, स द्वादशाब्दान्येव तद्व्रतं चरेत्; "अकामकृते ब्रह्मवधे ब्रह्महा पर्षदोऽनुमते खट्वाङ्गी गर्दभाजिनी द्वादशे वर्षे शुद्धिमाप्नोति" इति शङ्खलिखितस्मरणात्। असमाप्तव्रतोऽप्यन्तरा ब्राह्मणमोचनादिनैव शुध्यति। द्वादशे वर्षे शुद्धिमाप्नोतीति शङ्खः। "ब्राह्मणं मोचयित्वा वा गवां द्वादशानां परित्राणात् सद्य एवाश्वमेधावभृथस्नानात् पूतो भवति" इति शङ्खस्मरणात्। ब्राह्मणं हन्यमानं, गवां हन्यमानानामिति ज्ञेयम्। अश्वमेधोऽन्यस्य; "अश्वमेधावभृथं गत्वा तत्रानुज्ञातः स्नातः सद्यः पूतो भवति" इति तस्यैव स्मरणात्। तथा मृतोऽपि शुध्यति;

"प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते।
शुद्धस्तदहरेवासाविह लोके परत्र च ॥"

इति यमस्मरणात्। इदं च गुणदोषरहितब्राह्मणकर्तृकतादृशब्राह्मणहनने,

"तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तम।
प्रायश्चित्तं तु [2]कर्तव्यं विधिवद् द्वादशाब्दिकम्।
प्राप्नोति शुद्धिं जीवन् वै सङ्गं च स्वजनैरिह ॥"

इति भविष्यात्। कामतो निर्गुणकृतगुणवद्ब्राह्मणवधे तु प्राणान्तिकं यावज्जीवव्रतं वा। यथा भविष्ये—

"गुणाढ्यब्राह्मणवधे बुद्धिपूर्वकृते गुह।
ब्राह्मणो हि यदा हन्ता गुणैश्च परिवर्जितः ॥
प्राणान्तिकं महाबाहो न जीवञ्छुद्धिमाप्नुयात्।
आ चोत्तमाद्वा निश्वासादवस्थानमिति स्मृतिः ॥"

[1] भोजनार्थम्—ख. [2] वै कृत्वा—ग.

इति । अकामतः चतुर्विंशतिवार्षिकम् । सवनस्थवधे पित्रादिवधे चतुर्विंशतिवार्षिकम् ;

"यज्ञसंस्थौ च पितरौ राजानं चाप्यनागसम् ।
हत्वा चरेद् व्रतं सम्यक् चतुर्विंशतिवत्सरम् ॥"

इति **ब्राह्मात्** । यज्ञसंस्थाविति न पितृविशेषणम् ; अविशेषापातात् । इदमकामतः, "ब्राह्मणो ब्राह्मणं हत्वा सवनस्थमकामतः । प्रायश्चित्तद्वयं कुर्यात्" इति **भविष्यात्** । प्रायश्चित्तद्वयम् ; द्वादशाब्दद्वयम् ; "द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्" इति **योगिस्मरणाच्च** । तेषामेव कामतो वधे मरणाश्वमेधादि पूर्वोक्तम् । तदशक्तौ यावज्जीवं व्रतम् । यथा **भविष्ये**—

"मातरं पितरं हत्वा सोदर्यं भ्रातरं तथा ।
गुरुं हत्वा श्रोत्रियं च आहिताग्निमथापि वा ।
अन्तिमाद्यावदुच्छ्वासाद्व्रतं चीर्त्वा विशुध्यति ॥"

इति । विशुध्यति परत्र ; नात्र, "नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते" इति **आपस्तम्बीयात्** । प्रत्यापत्तिः व्यवहारः । इदं च सर्ववर्णजातिसाधारणम् ; "वर्णापेक्षा न कर्तव्या मातरं पितरं प्रति" इति **विष्णुधर्मोत्तरात्** । एवं भ्रात्रादिष्वपि ;

"मातापितृषु यद्दत्तं भ्रातृषु स्वसुतासु च ।
जायात्मजेषु यद्दत्तं सोऽनिन्द्यः स्वर्गसंक्रमः ॥"

इति **व्यासोक्त**दानफलविशेषेण हिंसायामपि दोषविशेषसिद्धेः ; "दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि" इति **दक्षेणो**भयव्याप्तिदर्शनात्[1] । एवमन्यत्रापि दानफलविशेषेपूह्यम् । जातिमात्रब्राह्मणहनने **भविष्ये**—

"जातिमात्रं यदा हन्याद् ब्राह्मणं ब्राह्मणो गुह ।
वेदाभ्यासविहीनो वै धनवानग्निवर्जितः ॥
प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥"

इति । इदमकामतः । कामतस्तु **तत्रैव**—

"जातिमात्रे हते विप्रे कामतोऽथ भवेच्छृणु ।
चरेद् द्वादशवर्षाणि कृत्वा शवशिरोध्वजम् ॥"

इति । तस्यैव गुणवता अकामतो वधे **तत्रैव**—

"जातिमात्रं तु यो हन्याद् विप्रं त्वमतिपूर्वकम् ।
ब्राह्मणोऽत्यन्तगुणवांस्तदेदं परिकल्पयेत् ॥

[1] प्राप्तिदर्शनात्—ख, ग.

जपेद्वा नियताहारस्त्रिकृत्वो वेदसंहिताम् ।
तस्यैव तादृशेनैवाकामतो वध एव हि ॥"

इति । आततायिगुणिविप्रवधेऽपि तत्रैवाह—

"हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम् ।
कामतोऽपि च धीरत्वाद् द्वादशाब्दात्यमुत्तमम् ॥"

इति । अकामतो निर्गुणे वार्धम् । पतितविप्रवधे **पराशरः**—

"वैश्यं शूद्रं क्रियासक्तं विकर्मस्थं द्विजोत्तमम् ।
हत्वा चान्द्रायणं कुर्यात् त्रिंशद्गाश्चैव दक्षिणाम् ॥"

इति । व्रात्यविप्रवधे **शङ्खलिखितौ**—"शूद्रवदेवाव्रते सर्वमविशेषेण" इति । अव्रतो व्रात्यः;

"द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् ।
तान् सावित्रीपरिभ्रष्टान् व्रात्यानित्यभिनिर्दिशेत् ॥"

इति **मानवात्** । षण्ढविप्रवधे **षट्त्रिंशन्मते**—

"षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ।
चान्द्रायणं वा कुर्वीत पराकद्वयमेव च ॥"

इति । कामतः शूद्रहत्याव्रतम्; अकामतश्चान्द्रायणादि । मानसविप्रवधे **वसिष्ठः**—"अथापरं भ्रूणहत्याया द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्" इति । अकामतो युगपदनेकविप्रवधे यावज्जीवव्रतम्; यथा **भविष्ये**—

"अकामतो यदा हन्याद् युगपद्ब्राह्मणान् बहून् ।
चरेद्वने तदा घोरे यावत्प्राणपरिक्षयम् ॥"

इति । कामतस्तद्वधेऽपि **तत्रैव**—

"कामतश्च यदा हन्याद् ब्राह्मणान् सुबहून् गुह ।
तदात्मानं दहेदग्नौ करीषाग्नौ घृतप्लुतः ॥"

इति । अत्र बहुत्वं द्वित्वस्याप्युपलक्षणम्,

"ब्राह्मणं ब्राह्मणौ वापि ब्राह्मणान् सुबहूनपि ।
निहन्युर्युगपद्वीर एवं प्राणान्तिकं चरेत् ॥"

इति तत्रैवाभिधानात् । सुबहून् चतुरादीन् । अन्यथा कपिञ्जलन्यायेन ब्राह्मणानिति बहुवचनेन त्रयाणामेव प्राप्तिः स्यात् । अकामतः क्रमिकानेकब्राह्मणवधे **मनुदेवलौ**—

"विधेः प्राथमिकादस्माद् द्वितीये द्विगुणं भवेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ॥"

इति । अत्र वचनारम्भसामर्थ्यान्न तन्त्रम् । प्रायश्चित्तस्य द्वैगुण्यादिविधिसामर्थ्याच्च नावृत्तिविधिः; न्यायप्राप्तत्वादावृत्तेः । किंतु द्वैगुण्यादिविधिः । तथाच द्वितीये ब्रह्मवधे प्रथमस्य द्वादशाब्दम्; द्वितीयस्य द्विगुणं चतुर्विंशतिवार्षिकमित्येवमेककालेऽनुष्ठीयमानं च षट्त्रिंशदाब्दिकं कार्यम् । एवं तृतीये ब्रह्मवधे द्विसप्तत्यब्दम् । चतुर्थे विंशोत्तरशताब्दकालाभावात् व्रतरूपनिष्कृत्यभावो मरणान्तिकाभ्यनुज्ञानायेति । तदाह अङ्गिराः—

"शरीरं न दहेद्यावद् ब्रह्महा पापकृत्तमः ।
तावत् तस्य न शुद्धिः स्याद्भगवान् मनुरब्रवीत् ॥"

इति । अत्र तमप्प्रत्ययेन ब्रह्महत्यायामावृत्तिरूपातिशयावगमात् यत्र चतुर्थब्रह्महत्यादौ व्रतरूपप्रायश्चित्ताभावो बोध्यते, तत्रानेन मरणान्तिकं प्रायश्चित्तं विधीयत इत्यवश्यं वाच्यम् । अन्यथा पृथग्विशेषणं तमप्प्रत्ययश्च नोपपद्येते । न च कामकृतत्वमेव तमप्प्रत्ययार्थः; तत्र

"यः कामतो महापापं नरः कृत्वा कथंचन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥"

इति तेनैव पृथक् प्रायश्चित्तविधानेनास्य पौनरुक्त्यापत्तेः । न [1]चाकामविषयत्वं मरणस्य संभवति । न च सवनस्थश्रोत्रियादिविषयत्वम्; द्विगुणप्रायश्चित्ताम्नानात् । न च द्वित्रिब्राह्मणवधविषयत्वम्; द्विगुणादिव्रतविधानात् । तस्माद्यथोक्तमेव साधीयः ।

स च शरीरदाहः "निष्कालको घृताभ्यक्तो गोमयाग्निना पादप्रभृत्यात्मानमवदाहयेत्; मरणात् पूतो भवतीति विज्ञायते" इति वासिष्ठो विज्ञेयः । 'गुरुणि गुरूणि' इति न्यायात् । ब्राह्मणवधार्थमुद्योगे अकृतवधस्यापि प्रायश्चित्तमाह गौतमः—"सृष्टश्चेद् ब्राह्मणवधेऽहत्वापि" इति । इदं च द्वादशाब्दादिव्रतजातं साक्षाद्धन्तुरेव; व्यापाराधिक्यात् । अनुग्राहकादीनां तु ततो न्यूनं कल्प्यम्; व्यापारालपत्वात् । तत्रानुग्राहकस्य नवाब्दं, प्रयोजकस्य षडब्दम्, अनुमन्तुः सार्धचतुरब्दं, निमित्तिनः त्र्यब्दम् । तत्र सुमन्तुः—

"तिरस्कृतो यदा विप्रो हत्वात्मानं मृतो यदि[2] ।
निर्गुणः सहसा क्रोधाद् गृहक्षेत्रादिकारणम् ॥
त्रैवार्षिकं व्रतं कुर्यात् प्रतिलोमां सरस्वतीम् ।
गच्छेद्वापि विशुद्ध्यर्थं तत्पापस्येति निश्चितम् ॥"

[1] कामविषयत्वं—घ. [2] यदा—घ.

इति । इदं निर्गुणाक्रोष्टृविषयम् ;

" अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि ।
क्रोधाद्वै म्रियते यस्तु निर्निमित्तं तु भर्त्सितः ।
वत्सरत्रितयं कुर्यान्नरः कृच्छ्रं विशुद्धये ॥ "

इति तस्यैव स्मरणात् । गुणवत्याक्रोष्टरि एकाब्दम् ;

" केशश्मश्रुनखादीनां कृत्वा तु वपनं वने ।
ब्रह्मचर्यं चरन् विप्रो वर्षेणैकेन [1]शुध्यति ॥ "

इति तस्यैव स्मरणात् । शुष्कवादविषयमिदमिति भविष्ये ; " संबन्धेन विना देव शुष्कवादेन कोपितः " इत्यस्यानन्तरमस्य पाठात् । संबन्धः धनादेः । इदमेव व्रतजातं क्षत्रियादावकामतो [2]हन्तरि द्विगुणादि कल्प्यम् । यथाह अङ्गिराः—

" पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता शूद्राणां च चतुर्गुणा ।
पर्षद्वच्च व्रतं ज्ञेयं शुद्धये पापकर्मिणाम् ॥ "

इति । निर्गुणस्याकामतो गुणिविप्रवधे वाजिमेधः । यथा भविष्ये—

" यदा तु गुणिनं विप्रं निर्गुणो हन्ति पार्थिवः ।
तदासौ वाजिमेधेन [3]यजेतामतिपूर्वकम् ॥ "

इति । अमतिपूर्वकं हन्तीत्यन्वयः । कामतो निर्गुणस्य सगुणवधेऽपि भविष्ये—

" हत्वा तु क्षत्रियो विप्रं गुणाढ्यमिह कामतः ।
प्रायश्चित्तं चरेद्वीर विधिवत् कायशुद्धये ॥
लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥
यजेत वाश्वमेधेन क्षत्रियो विप्रघातकः ।
प्रायश्चित्तत्रयं ह्येतत् क्षत्रियस्य प्रकीर्तितम् ॥ "

इति । कामतो गुणिनो निर्गुणवधेऽपि वाजिमेधस्तत्रैव —

" निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान् गुह ।
स यजेताश्वमेधेन क्षत्रियो यो महीपतिः ॥ "

[1] From शुध्यति up to शुष्कवादेन missing in घ.
[2] हन्तुः—घ, च.
[3] यजेत्—ख, ग.

इति । विट्शूद्रयोस्तु कामतो निर्गुणविप्रवधेऽपि मरणमेव तत्रोक्तम्—

"विट्शूद्राणां विशेषेण हनतां कामतो द्विजान् ।
प्राणान्तिको भवेत् पुत्र ब्राह्मणे निर्गुणे हते ॥"

इति । अत्र निर्गुणत्वस्य ब्राह्मणविशेषणत्वात् तदतिरिक्तद्विजयोः सगुणत्वं गम्यते । यतः सगुणविप्रवधे निष्कृत्यभावमाह तदेव—"सगुणे तु हते कामान्निष्कृतिर्न विधीयते" इति । निष्कृतिः यथाकथंचिन्मरणेन न; किंतु गोमयाग्निना पादप्रभृतिदाहेनेत्यर्थः । अन्यथा मरणान्तिकप्रायश्चित्ताभावपरत्वे प्रायश्चित्ताभाव एवापद्येत । तच्चानिष्टम्; निषेधस्य प्रायश्चित्ताविनाभावात् । न वा कामकृतप्रायश्चित्तद्वैगुण्याभावपरं निष्कृत्यभाववचनम्; षण्णवत्यब्दप्रायश्चित्तस्य शतायुःपुरुषानुष्ठेयतासंभवात् । तस्माद्यथोक्तमेव साधीयः ।

तथा आश्रमविशेषेणापि द्वैगुण्यादि कल्प्यम् । यथाह अङ्गिराः—

"गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि ।
शौचवच्छोधनं कुर्युरर्वाग्ब्रह्मनिदर्शनात् ॥"

इति । शौचवदिति ;

"एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥"

इत्युक्तम् । तत्र ब्रह्मचारिणो द्वैगुण्यं षोडशवर्षादूर्ध्वम् । अर्वाक् त्वर्धं[1] वक्ष्यति ।

'अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च ॥'

इति । बालोऽपि उपनीतः । अनुपनीतस्य पादः; "पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" इति स्मरणात् । स्त्रियो युवत्यः । बालवृद्धयोस्तु पादः ;

"अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव च ।
अर्धमेव भवेत् पुंसां तुरीयं तत्र योषिताम् ॥"

इति तस्यैव स्मरणात् । बालस्य प्रायश्चित्तं पित्रादिः कुर्यात् ;

"ऊनैकादशवर्षस्य पञ्चवर्षात् परस्य च ।
प्रायश्चित्तं चरेद् भ्राता पिता वान्यः सुहृज्जनः ॥
अतो बालतरस्यास्य नापराधो न पातकम् ।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥"

इति शङ्खस्मरणात् । अष्टमांश इति प्राञ्चः । प्रायश्चित्ताभाव एवेति प्राच्याः ॥ ६ ॥

[1] तदर्धं—घ, च.

**यागस्थं क्षत्रियं[1] वैश्यं वा ॥ ७ ॥**

एवं ब्रह्महत्याप्रायश्चित्तमुक्त्वा इदानीं तत्समेषु प्रायश्चित्तमाह । यागोऽत्र सोमयागः; "सवनगतौ च राजन्यवैश्यौ" इति **वासिष्ठात्** । तस्मिन् दीक्षणीयाद्युदवसानीयान्ते [2]प्रयोगे स्थितं क्षत्रियं वैश्यं वा हत्वा पूर्वोक्तं द्वादशवार्षिकं व्रतं कुर्यात् । वाशब्दात् मूर्धावसिक्ताम्बष्ठयोर्ग्रहणमित्युक्तम् । तत्र ब्राह्मणात् न्यूनं[3] क्षत्रियांदधिकमष्टादशाब्दिकं कल्प्यम्; सवनस्थविप्रवधे चतुर्विंशतिवार्षिकश्रवणात् । इदं चाकामतः । कामतो द्विगुणम् । एवमन्येऽपि पूर्वोक्ता विषयाः तद्व्रतानि च तथैव योज्यानि । एवमग्रेऽपि । औपदेशिकत्वाच्च व्रतस्य [4]न न्यूनतेति । **आपस्तम्बोऽपि**—"पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वा द्वादश वर्षाणि" इत्युक्तवान् । एतच्चाकामतः । कामतो वधेऽपि न मरणान्तिकम्; अनुपदेशात् । किंतु द्विगुणं व्रतमेव; "विहितं यदकामानां कामात्तं द्विगुणं चरेत्" इति **अङ्गिरःस्मरणात्** ॥ ७ ॥

**गुर्विणीं रजस्वलां वा[5] ॥ ८ ॥**

किंच गुर्विणी स्वपतिनिहितगर्भवती स्त्री गौश्च । रजस्वला उदक्या । वाशब्दात् ऋतुस्नाता जन्मप्रभृतिसंस्कारैः संस्कृता सवनस्थाग्निभार्या च गृह्यते । तामकामतो हत्वा पूर्वोक्तद्वादशवार्षिकव्रतं कुर्यात् । तथाच **प्रचेताः**—"स्त्रीगर्भिणीगोगर्भिणीबालवधे च भ्रूणहा भवति" इति । **वसिष्ठोऽपि**—"रजस्वलामृतुस्नातामात्रेयीमाहुः; अत्रह्येषापत्यं भवति" इति । त्रिदिनं रजस्वला । स्नानानन्तरत्रयोदशदिनानि ऋतुस्नाता । **यमोऽपि**—

"जन्मप्रभृतिसंस्कारैः संस्कृता मन्त्रवच्च या ।
गर्भिणी त्वथवा[6] या स्यात् तामात्रेयीं विनिर्दिशे ॥"

इति । **पराशरोऽपि**—"सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत" इति । **अङ्गिराः**—

"आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च ॥"

इति । अत्र गर्भिणीग्रहणं गर्भवधेऽप्येतदेव व्रतमिति बोधयितुम् । गर्भः स्वपतिनिहितोऽनुपजातस्त्रीपुंनपुंसकव्यञ्जनश्च; "हत्वा गर्भमविज्ञातम्" इति **मानवात्** । न च ब्रह्मवधनिषेधेनैवास्यापि क्रोडीकारात् पृथगारम्भोऽनर्थक इति वाच्यम्, पुंस्त्वसंदेहेऽपि पुंवधप्रायश्चित्तप्राप्त्यर्थत्वेन सार्थक्यात् । यथाह **आपस्तम्बः**—"अविज्ञाता हि गर्भाः पुमांसो भवन्ति" इति । तत्र चोभयत्र यथावर्णमिति वाच्यम्; "गर्भहा च यथावर्णं

[1] वा added in ज.
[2] प्रयोगस्थितं—घ, च.
[3] ऊनं—घ, च.
[4] न omitted in घ.
[5] वा omitted in ज, ठ.
[6] ह्यथवा—ख.

तथात्रेयीनिषूदकः" इति **योगिस्मरणात्**। ततश्च यद्वर्णपुरुषवधे यत् प्रायश्चित्तं तदेव तद्वर्णगर्भगर्भिणीवधे कार्यम्। जारगर्भे तु विशेषः **चतुर्विंशतिमते**—

"गर्भपाते विनिर्दिष्टं यथावर्णविधि व्रतम्।
जारगर्भे विशेष स्याद्यथोक्तमृषिभिः पुरा॥
ब्रह्मगर्भवधे कृच्छ्रमब्दं सांतपनाधिकम्।
क्षत्रगर्भवधे चैव चरेच्चान्द्रायणद्वयम्।
[1]वैश्यस्य चैन्दवं प्रोक्तं गर्भपाते विशेषतः॥"

इति। प्रतिलोमगर्भवधे तु चान्द्रायणम्; "चान्द्रायणं चरेत् सर्वानपकृष्टान् निहत्य च" इति **योगिस्मरणात्**॥ ८॥

## अत्रिगोत्रां [2]वा नारीम्॥ ९॥

किंच अत्रिगोत्रा अत्रिगोत्रोत्पन्ना अत्रिगोत्रोढा च त्रैवर्णिकस्त्री। रजस्वलात्वेनात्रेयीत्वं तु शूद्रादिस्त्रीसाधारणम्। वाशब्दात् अतिसंनिकृष्टानां सपत्नमातृदुहितृभगिनीस्नुषात्मपत्नीनां सवर्णानां ग्रहणम्; जननीवधे [3]चतुर्विंशतिवार्षिकस्याकामतः, कामतश्च यावज्जीवं व्रतस्य विधानात्। अन्यत्र तु "सोदर्यं भ्रातरं तथा" इति **भविष्यवाक्ये** प्रत्यासत्त्यतिशयद्योतकं सोदर्यपदमेव मूलम्। उपपादितं चैतत् प्रागेव 'दानफलविशेषेण हिंसायामपि दोषविशेषसिद्धेः' इत्यादिना। तासामकामतो वधे सर्ववर्णेषु द्वादशवार्षिकम्। याः पुनर्विप्रकृष्टाः [4]सपत्नभगिनीपितृष्वसृमातृष्वसृमातुलानीपितृव्यपत्नीभ्रातृभार्यापितामहीमातामह्यः, तासां वधे नववार्षिकम्; गमने महापातकतुल्यत्वाभिधानात्;

"मातृष्वसा स्वसा चैव तथैव च पितृष्वसा।
मातामही [5]भागिनेयी भागिनेयस्तथैव च।
दौहित्रो विट्पतिश्चैव तेषु दत्तं तथाक्षयम्॥"

इति **विष्णुधर्मोत्तरे** दाने फलविशेषेण हिंसायामपि दोषाधिक्यसिद्धेः। विट्पतिः जामाता। एवमन्यत्राप्यूह्यम्॥ ९॥

## मित्रं वा[6]॥ १०॥

मित्रं सुहृत् जातिविशेषानादरेण। वाशब्दात् बालग्रहणम्; "बालवधे च भ्रूणहा भवति" इति **प्रचेतःस्मरणात्**। सुरापानसमस्यापि सुहृद्वधस्यात्राभिधानं ब्रह्मवधप्रायश्चित्ताभिधानाय। ततश्च सुरापान-

1 वैश्येऽपि—घ, च.
2 नारीं वा—ठ.
3 चतुर्वार्षिकस्य—घ.
4 Several words are omitted here in ख.
5 भागिनेयी omitted in घ.
6 तपस्विनं वा added in ज, ठ.

प्रायश्चित्तेनास्य विकल्पः । तमकामतो हत्वा द्वादशाब्दं कार्यम् ; औपदेशिकत्वात् । यानि पुनः पूर्वोद्दिष्टान्यप्यविज्ञातवधादीन्यन्यत्र [1]नानानूदितानि तेषामप्येतदेव प्रायश्चित्तम् ; तत्सहपठितेषु यागस्थक्षत्रियादिवधेषु द्वादशवार्षिकाभिधानात् ; 'अनुपातकिनस्त्वेते' इत्यनेन कामतो वधे तुल्यप्रायश्चित्ताभिधानाच्च । तच्चोक्तमेव प्राक् । शरणागतबाल्योरब्राह्मणयोरपि वधे द्वादशाब्दम् । अत्र कृतप्रायश्चित्तस्याप्यसंव्याह्यत्वमिति विशेषः ;

" शरणागतबालस्त्रीहिंसकान् संविशेन्न तु ।
चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् ॥ "

इति **योगिस्मरणात्** । वक्ष्यति च स्वयमपि—'बालघ्नांश्च कृतघ्नांश्च' इत्यादिना । यानि चोत्कर्षेऽनृतवचनादीनि मन्वाद्युक्तानि, तेषामपि विषयविशेषे ब्रह्महत्यासाम्येनेदमेव प्रायश्चित्तं पादोनं बोध्यम् ; मूले तेषामुपपातकेषु परिगणनेन द्वादशाब्दोपदेशाभावात् ॥ १० ॥

**नृपतिवधे महाव्रतमेव द्विगुणं कुर्यात् ॥ ११ ॥ पादोनं क्षत्रियवधे ॥ १२ ॥ अर्धं वैश्यवधे ॥ १३ ॥ तदर्धं शूद्रवधे ॥ १४ ॥**

एवं ब्रह्महत्यासमेषु प्रायश्चित्तमुक्त्वा निमित्तान्तरे तदाह । नृपतिः अभिषिक्तः क्षत्रियः, न भूपतिमात्रम् । तस्यायुध्यमानस्यात्यन्तगुणवतो वधे द्वादशवार्षिकमेव द्विगुणं कुर्यात् ;

" यज्ञसंस्थौ च पितरौ राजानं चाप्यनागसम् ।
हत्वा चरेद् व्रतं सम्यक् चतुर्विंशतिवत्सरम् ॥ "

इति **ब्राह्मात्** । इदं चाकामतः ; **ब्राह्मवाक्ये** राजसहपठितस्य सवनस्थ । " सवनस्थमकामतः । प्रायश्चित्तद्वयं कुर्यात् " इति **भविष्ये** अकामाभिधानात् । कामतो द्विगुणम् ; " विहितं यदकामानाम् " इति वचनात् । " राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्यमृषभैकसहस्राश्च गा दद्यात् " इति **गौतमोक्तं** वा द्रष्टव्यम् ॥ ११ ॥ वधव्रतप्रसङ्गात् वधोपपातकेष्वपि केषुचित् तदाह । यागस्थनृपतिव्यतिरिक्तसद्गुणश्रोत्रियक्षत्रियवधे पादोनं द्वादशाब्दं नववार्षिकं व्रतं कुर्यात् ॥ १२ ॥ अदीक्षितसद्गुणवैश्यवधे अर्धं षडब्दं व्रतं कुर्यात् ॥ १३ ॥ सद्गुणशूद्रवधे तदर्धम्, अर्धार्धं चतुर्थांशं त्र्यब्दं कुर्यात् । इदं चाकामतः । कामतो द्विगुणं सर्वत्र । यानि पुनः,

" अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
ऋषभैकसहस्रा गा दद्याच्छुद्ध्यर्थमात्मनः ॥ "

[1] नानूदितानि—ग.

इत्यादीनि मन्वाद्युक्तानि, तानि अग्निहोत्रिश्रोत्रियाभिषिक्तक्षत्रादिवधविषयाणि योज्यानि। ईषद्गुणक्षत्रियवधे[1] वसिष्ठः—"ब्राह्मणो राजन्यं हत्वाष्टौ वर्षाणि व्रतं चरेत्" इति। यत्तु "षड् वर्षाणि राजन्ये प्राकृतं ब्रह्मचर्यं त्रीणि वैश्ये सार्धं शूद्रे" इति हारीतेनोक्तं, तत् स्वधर्मनिष्ठक्षत्रियादिवधविषयम्। ईषद्-[2]वृत्तहीनादिक्षत्रियादिविषये तु मनुः—

"तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः॥"

इति। एवमन्यान्यपि व्रतानि व्यवस्थाप्यानि। एवं च यादृशक्षत्रियादिवधे यत् प्रायश्चित्तमुक्तं, तत् तादृश-मूर्धावसिक्ताद्यनुलोमवधे ब्राह्मणाद्यपेक्षया चाधिकं कल्प्यम्। प्रतिलोमवधे [3]ब्रह्मगर्भः—

"प्रतिलोमप्रसूतानां स्त्रीणां मासा वधे स्मृताः।
अन्तरप्रभवानां च सूतादीनां चतुर्द्विषट्॥"

इति। सूतवैदेहचण्डालानां वधे क्रमेण [4]षट्चतुर्द्विमासाः। मागधक्षत्रोश्चतुर्द्विमासाः। अयोगववधे द्वौ मासौ। अत्रापि क्षत्रियादिषु हन्तृषु पादपादहानिर्ज्ञेया। यथाह लौगाक्षिः—

"सर्वं त्रिपादमर्धं च पादं चैव व्रतं चरेत्।
वर्णक्रमादन्तरजहत्यागमनभोजने॥"

इति। अत्र यद्यपि अन्तरजहत्यागमनभोजनेष्वेव पादादिहानिः श्रूयते, तथापि सर्वत्रोपपातकादिष्वियं द्रष्टव्या;

"विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्।
वैश्येऽर्धं [5]पादशेषस्तु शूद्रजातिषु शस्यते॥"

इति स्मरणात्। 'ब्राह्मण्युत्पन्नानां सूतवैदेहचण्डालानां वधे सर्वम्; क्षत्रियोत्पन्नानां मागधक्षत्रोः पादोनम्; वैश्योत्पन्नस्यायोगवस्यार्धम्; शूद्रायां निषादोत्पन्नस्य पुल्कसस्य वधे पादः' इत्यन्ये। कामतश्चेदम्। अकामतः पूर्वोक्तं चान्द्रायणं पराको वा। यथाह अङ्गिराः—

"सर्वान्त्यजानां गमने भोजने संप्रभाषणे।
पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम्॥"

इति। अत्रापि पूर्ववदेव कल्पना। चौरश्वपाकादिवधे पराशरः—

"चौरः श्वपाकश्चण्डालो विप्रेणाभिहतो यदि।
अहोरात्रोषितः स्नात्वा घृतं प्राश्य विशुध्यति॥"

इति।

[1] क्षत्रवधे—ख, ग. [2] व्रत—घ, च. [3] बालगर्भः—ख, ग.
[4] षड्द्विचतुर्द्विमासाः—घ, च. [5] धर्मशेषस्तु—घ, च.

स्त्रीवधप्रायश्चित्तमाह हारीतः—"षड् वर्षाणि राजन्ये" इत्युपक्रम्य "क्षत्रियवद् ब्राह्मणीषु, वैश्यवत् क्षत्रियायां, शूद्रवच्च वैश्यायां, शूद्रां हत्वा नव मासान्" इति। एतच्च कामतः श्रोत्रियसद्गुणपत्नीवधविषयम्। तदेवाकामतोऽर्धम्। यथाह व्यासः—"अकामतः स्त्रियं हत्वा ब्राह्मणीं वैश्यवच्चरेत्" इति। वैश्यवत् त्र्यब्दमित्यर्थः। अनयैव दिशा क्षत्रियायां सार्धाब्दं, वैश्यायां नव मासाः, शूद्रायां सार्धाश्चत्वार इति। जातिमात्रे ब्राह्मण्यादिवधे प्रचेताः—"अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्दं षण्मासान् वा, क्षत्रियां हत्वा षण्मासान् मासत्रयं वा, वैश्यां हत्वा मासत्रयं सार्धमासं वा, शूद्रां हत्वा सार्धमासं सार्धद्वाविंशत्यहानि वा" इति। कामाकामाभ्यां पक्षद्वयं ज्ञेयम्। ईषद्व्यभिचरितब्राह्मण्यादिवधे याज्ञवल्क्यः —"अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्" इति। षाण्मासिकमित्यर्थः। इदं चाकामतः। कामतः प्रतिलोमप्रसूतब्राह्मण्यादिवधे ब्रह्मगर्भः—

"प्रतिलोमप्रसूतानां स्त्रीणां मासा वधे स्मृताः।
अन्तरप्रभवानां च सूतादीनां चतुर्द्विषट्॥"

इति। ब्राह्मणीवधे षण्मासाः; क्षत्रियावधे चत्वारः; वैश्यावधे द्वाविति। अत्यन्तव्यभिचरितस्त्रीवधे याज्ञवल्क्यः—

"दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु।
दृतिं धनुर्बस्तमविं क्रमाद् दद्याद्विशुद्धये॥"

इति। दृतिः चर्मकोशः। वैश्यावधे गौतमः—"वैशिकेन किंचित्" इति। वैशिकं वेश्याकर्म; तेन जीवन्तीं हत्वा किंचित् अष्टमुष्टिधान्यं दद्यात्। जलमित्यन्ये; "शू[illegible]मविकं वैश्यां हत्वा दद्याज्जलं नरः" इति अङ्गिरःस्मरणात्॥ १४॥

**सर्वेषु[1] शवशिरोध्वजी स्यात्॥ १५॥**

उक्तव्रतशेषमाह। सर्वेष्वपि ब्रह्महत्यादिव्रतेषु शवशिरोयुक्तध्वजधारी स्यात्। ध्वजः कपालादिसर्वधर्मोपलक्षणम्; "शिरःकपाली ध्वजवान्" इत्यादिस्मरणात्॥ १५॥

**मासमेकं कृतवापनो[2] गवामनुगमनं कुर्यात्॥ १६॥ [3]तास्वासीनास्वासीत॥ १७॥ [4]स्थितासु स्थितश्च स्यात्॥ १८॥ सक्तां चोद्धरेत्॥ १९॥ भयेभ्यश्च रक्षेत्॥ २०॥ तासां शीतादि-**

[1] च added in ठ.
[2] वपनो—ठ.
[3] तासु omitted in घ, च.
[4] उत्थितासु उत्थितः स्यात्—ज, ठ.

**त्राणमकृत्वा नात्मनः कुर्यात् ॥ २१ ॥ गोमूत्रेण स्नायात् ॥ २२ ॥ गोरसैश्च वर्तेत ॥ २३ ॥**

गोवधप्रायश्चित्तमाह। कृतं वापनं केशश्मश्रूणां येनासौ तथा। स एकं मासं वक्ष्यमाणप्रकारेण गवामनुगमनं सेवां कुर्यात्। सामान्यतः प्राप्तस्य वपनस्य पुनर्वचनं सशिखत्वप्राप्त्यर्थम्; "सशिखं वपनं कृत्वा त्रिसंध्यमवगाहनम्" इति **पराशरस्मरणात्** ॥ १६ ॥ अनुगमनप्रकारमाह। गोष्वासीनास्वेव स्वयमासीत; न स्थितासु। तेन यावद्गवासनं स्थानमेव, नासनम्। बहुवचनात् सर्वास्वनुगम्यमानास्वासीनासु; नैकस्यामासीनायामिति गम्यते ॥ १७ ॥ किंच गोषु स्थितासु स्वयमपि तिष्ठेदेव; नोपविशेदिति गम्यते। बहुवचनात् एकस्यामपि स्थितायां नोपविशेत्। चकारात् "पिबन्तीषु पिबेत् तोयं संविशन्तीषु संविशेत्" इति **पाराशर्यं** ग्राह्यम् ॥ १८ ॥ किंच अनुगम्यमानासु गोषु या सन्ना पतिता पङ्कलग्ना वा, तामुद्धरेत्; "पतितां पङ्कलग्नां[1] वा सर्वप्राणैः समुद्धरेत्" इति **पाराशर्यात्**। सन्नोद्धरणविधानात् यथा न सीदेत्, तथा रक्षेदिति गम्यते; "नातिविषमेणावतारयेन्नाल्पोदके पाययेत्" इति **काश्यपीयात्**। चकारात्—

"आत्मनो यदि वान्येषां [2]गृहे क्षेत्रेऽथवा खले।
भक्षयन्तीं न कथयेत् पिबन्तीं चैव वत्सकम् ॥"

इति **पाराशर्यं** ग्राह्यम् ॥ १९ ॥ किंच सिंहव्याघ्रादिजनितेभ्यो भयेभ्यो रक्षेत्। [3]चकारात् रक्षणाशक्तौ स्वप्राणांस्त्यजेत्; "गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत्" इति **पाराशर्यात्** ॥ २० ॥ किंच तासां गवां शीतोष्णवातादिभ्यस्त्राणमकृत्वा आत्मत्राणं न कुर्यात्। यथा **पराशरः**—

"उष्णे वर्षति शीते वा मारुते वाति वा भृशम्।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥"

इति ॥ २१ ॥ किंच त्रिकालं गोमूत्रेण स्नायात्; "स्नानं त्रिषवणं तस्य" इति [4]**संवर्तस्मरणात्** ॥ २२ ॥ किंच गोमूत्रादिभिः पञ्चभिर्गव्यैः वर्तेत जीवेत्। चकारात् गोमतीं च जपेत्। यथाह **शातातपः**—

"पञ्चगव्येन गोघाती मासेनैकेन शुध्यति।
गोमतीं च जपेद्विद्यां गवां गोष्ठे च संवसेत् ॥"

इति। गोमती च विद्या—

"गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥"

इत्यादिका **यमोक्तान्यत्र** द्रष्टव्या ॥ २३ ॥

1 मग्नां—च.
2 गृहक्षेत्रे—घ, च.
3 From चकारात् up to त्यजेत् omitted in घ.
4 संवर्त omitted in घ.

**एतद् गोव्रतं गोवधे कुर्यात् ॥ २४ ॥**

उक्तव्रतस्य विनियोगमाह। एतत् उक्तं गोव्रतसमाख्यं व्रतं गोवधे कुर्यात्। एतच्चाकामतः क्षत्रियस्वामिकगोवधे। अत्रैव पञ्चगव्यपानाशक्तौ **काश्यपीयम्**—"मासं पञ्चगव्येन" इति प्रतिपाद्य "षष्ठे काले पयोभक्षो वा गच्छन्तीष्वनुगच्छेत्, तासु सुखोपविष्टासु चोपविशेत्, नातिप्लवं गच्छेत्, नातिविषमेणावतारयेत्, नाल्पोदकं पाययेत्, अन्ते ब्राह्मणान् भोजयित्वा तिलधेनुं दद्यात्" इत्युक्तं द्रष्टव्यम्। अकामतो ब्राह्मणस्वामिकगोवधे तु **याज्ञवल्क्यः**—"दद्यात् त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः" इति। अकामतो वैश्यस्वामिकगोवधे **प्रचेताः**—"गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत्, सशिखं वपनं कृत्वा गोचर्मणा [1]प्रावृतो गाश्चानुगच्छन् गोष्ठेशयो गां दद्यात्" इति। अकामतः शूद्रस्वामिकगोवधे **जाबालिः**[2]—

"प्राजापत्यं चरेन्मासं गोहन्ता चेदकामतः।
गोहितो गोऽनुगामी स्याद् गोप्रदानेन शुध्यति॥"

इति। अत्र वृषभैकादशगोदानस्यैकादशप्राजापत्यप्रत्याम्नायत्वात् मासं पञ्चगव्याशने षडुपवासात्मकप्राजापत्यप्रत्याम्नायकल्पनया पञ्च धेनवः, व्रतान्तधेनुश्चैकेति षट् धेनवः। पञ्चविंशतिरात्रं पञ्चगव्याशने चतस्रः, व्रतान्तधेनुश्चैकेति पञ्च धेनवः। मासं प्राजापत्ये सार्धधेनुद्वयम्, व्रतान्तधेनुश्चैकेति सार्धधेनुत्रयमित्यकामतः प्रायश्चित्तम्। कामतस्तु तदेव द्विगुणम्। गोगुणब्राह्मणादिगुणविशेषेण प्रायश्चित्तगौरवम्। तद्दोषविशेषेण प्रायश्चित्तलाघवं चोन्नेयम्। यथा **बृहस्पतिः**—

"गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रताम्।
खड्गादिना घातयित्वा द्विगुणं गोव्रतं चरेत्॥
अतिबालामतिकृशामतिवृद्धां च रोगिणीम्।
हत्वा पूर्वविधानेन चरेदर्धं व्रतं द्विजः॥"

इति। क्वचिद्वधापवादमाह **संवर्तः**—

"दाहच्छेदशिरोभेदप्रयोगैरुपकुर्वताम्।
द्विजार्थं गोहितार्थं च प्रायश्चित्तं न विद्यते॥"

इति॥ २४॥

**गजं हत्वा पञ्च नीलवृषभान्[3] दद्यात् ॥ २५ ॥ तुरगं वासः ॥ २६ ॥**

[1] परिवृतो—घ, च.
[2] जाबालः—ख, ग.
[3] नीलान् वृषभान्—ड.

[1]एवं वधे उपपातकप्रायश्चित्तमुक्त्वा तत्प्रसङ्गात् संकरीकरणादिवधेष्वपि प्रायश्चित्तमाह । गजम् उत्कृष्टं कामतो हत्वा पञ्च नीलवृषभान् दद्यात् । नीललक्षणमुक्तं यज्ञपार्श्वेन—

" लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ "

इति । अकामतस्तु शातातपः—" दन्त्यश्वरासभवधे मासं पयोव्रतम् " इति । जातिमात्रगजवधे पूर्वोक्तौ मासयावककृच्छ्रातिकृच्छ्रौ कामाकामाभ्यां ज्ञेयौ ॥ २५ ॥

तुरगम् उत्कृष्टमश्वं हत्वा वासः परिधानयोग्यं दद्यात् । इदमकामतः । कामतो जाबालः— " हस्तिनं तुरगं हत्वा महासांतपनं चरेत् " इति । महासांतपनं सप्ताहिकमुत्कृष्टम् । अस्मिन्नेव विषये हननसाधनविशेषेण प्रायश्चित्तविशेषोऽपि समुच्चीयते । यथाह यमः—

" काष्ठलोष्टाश्मभिर्गावः शस्त्रैर्वा निहता यदि ।
प्रायश्चित्तं कथं तत्र शास्त्रे शास्त्रे विधीयते ॥
काष्ठे सांतपनं कुर्यात् प्राजापत्यं तु लोष्टके ।
तप्तकृच्छ्रं तु पाषाणे शस्त्रे वाप्यतिकृच्छ्रकम् ॥ "

इति । तथा निमित्तविशेषेण व्रतविशेषमाह आपस्तम्बः—

" एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत् [2]सर्वं निपातने ॥ "

इति । वयोविशेषेणाप्याह वृद्धप्रचेताः—

" एकवर्षे हते वत्से कृच्छ्रपादो विधीयते ।
अबुद्धिपूर्वं पुंसः स्याद् द्विपादस्तु द्विहायने ।
त्रिहायने त्रिपादः स्यात् प्राजापत्यमतः परम् ॥ "

इति । गोगर्भवधे पराशरः—

" पिण्डस्थे पादमेकं तु द्वौ पादौ गर्भसंमिते ।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥
निष्पन्नसर्वगात्रस्तु दृश्यते चेत्[3] सचेतनः ।
अङ्गप्रत्यङ्गसंपूर्णे द्विगुणं गोव्रतं चरेत् ॥ "

[1] एवंविधोपपातक—घ, च. [2] सर्वाङ्गपातने—घ, च. [3] वा—ग.

इति । गर्भिणीवधे तु "गर्भिणीं कपिलां दोग्ध्रीं होमधेनुम्" इत्यादि **बार्हस्पत्यम्** । तत्रैव **बार्हस्पत्यसर्व-**विशेषणविशिष्टगोगर्भिणीवधे **प्राचेतसं** पूर्वोक्तं ब्रह्महत्याव्रतम्; "स्त्रीगर्भिणीगोगर्भिणीबालवधे च भ्रूणहा भवति" इति । एकस्या बहुभिर्हनने प्रायश्चित्तमाह **आपस्तम्बः**—

"एका चेद् बहुभिः काचिद् दैवाद् व्यापादिता क्वचित् ।
पादं पादं तु हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥"

इति । एकप्रयत्नेनानेकगोवधे त्वाह **संवर्तः**—

"व्यापन्नानां बहूनां तु रोधने बन्धनेऽपि वा ।
भिषङ्मिथ्यापचारे च द्विगुणं गोव्रतं चरेत् ॥"

इति । भिषग्व्यतिरिक्तस्य तु **व्यासः**—

"औषधं लवणं चैव पुण्यार्थमपि भोजनम् ।
अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् ।
अतिरिक्तैर्विपत्तिश्चेत् कृच्छ्रपादो विधीयते ॥"

इति । हननव्यापाराभावेऽपि स्वामित्वेनैव क्वचित् प्रायश्चित्तमाह **व्यासः**—

"जलौघपल्वले मग्ना मेघविद्युद्धतापि वा ।
श्वभ्रे वा पतिताकस्माच्छ्वापदेनापि भक्षिता ।
प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम् ॥"

इति । **आपस्तम्बः**—

"अतिदाहातिवाहाभ्यां नासिकाच्छेदने तथा ।
नदीपर्वतसंरोधे मृते पादोनमाचरेत् ॥"

इत्यादिरन्यतोऽवगन्तव्यः । कामाकामाभ्यां हनने पूर्वोक्तौ मासयावककृच्छ्रातिकृच्छ्रौ ज्ञेयौ ॥ २६ ॥

**एकहायनमनड्वाहं खरवधे ॥ २७ ॥ मेषाजवधे च ॥ २८ ॥**
**सुवर्णकृष्णलमुष्ट्रवधे ॥ २९ ॥**

खरवधे वृषमेकवर्षं दद्यात् । इदं कामतः । अकामतस्तु **विष्णुः**—

"हयच्छागाविकक्रोष्टुगर्दभेषु च मारणात् ।
प्राजापत्यार्धमेवेह प्रायश्चित्तं विधीयते ॥"

इति । उत्कृष्टखरवधे कामाकामाभ्यां पूर्वोक्तौ यावककृच्छ्रातिकृच्छ्रौ ॥ २७ ॥ मेषः उरभ्रः । अजः छागः । तद्वधेऽप्येकवर्षो वृषो देयः । अत्रापि कामादिव्यवस्था पूर्वैव ॥ २८ ॥ कामत उष्ट्रं हत्वा कृष्णलपरिमितं सुवर्णं दद्यात् । अकामतो वैष्णवं कृच्छ्रार्धम् । उत्कृष्टोष्ट्रवधे तु पूर्वोक्तावेव यावककृच्छ्रातिकृच्छ्रौ ज्ञेयौ ॥ २९ ॥

**श्वानं हत्वा त्रिरात्रमुपवसेत् ॥ ३० ॥**

श्ववधे त्रिरात्रोपवासः । उपवासाशक्तौ त्र्यहं क्षीरपानम् ; " श्वपतत्रिणः । हत्वा त्र्यहं पिबेत् क्षीरम् " इति **योगिस्मरणात्** । त्रिरात्रोपवासस्यार्धकृच्छ्रत्वात् कामविषयमिदम् । अकामतो **विष्णुः**—

" मार्जारसर्पनकुलश्वसृगालमृगेष्वपि ।
प्रमादाद्धनने कार्यः कृच्छ्रपादो विशुद्धये ॥ "

इति । उत्कृष्टहनने पूर्वोक्तयावककृच्छ्रातिकृच्छ्रौ कामाकामाभ्यां ज्ञेयौ ॥ ३० ॥

**हत्वा मूषकमार्जारनकुलमण्डूकडुण्डुभाजगराणामन्यतममुपोषितः [1]कृसरं ब्राह्मणं भोजयित्वा लोहदण्डं [2]दक्षिणां दद्यात् ॥ ३१ ॥**

डुण्डुभः राजिलः । शेषाः प्रसिद्धाः । एषामन्यतमं हत्वा पूर्वेद्युरुपोष्य परेद्युः कृसरं तिलमुद्गमिश्रमोदनं ब्राह्मणं भोजयित्वा, लोहयुक्तो दण्डो लोहदण्डः खनित्रं, तं दक्षिणां दद्यात् । अकामतश्चेदम् । कामतो **वसिष्ठः**—" [3]मार्जारमण्डूकदहरसर्पनकुलमूषकं हत्वा कृच्छ्रं द्वादशरात्रं चरेत् ; किंचिद्दद्यात् " इति । दहरः छुछुंदरिः । उत्कृष्टवधे पूर्वोक्तौ कामाकामाभ्यां यावककृच्छ्रातिकृच्छ्रौ ज्ञेयौ ॥ ३१ ॥

**गोधोलूककाकझषवधे [4]त्रिरात्रमुपवसेत् ॥ ३२ ॥**

गोधा आरण्यपल्ली । उलूकः पेचकः । काकः प्रसिद्धः । झषः मत्स्यः । एषां प्रत्येकं वधे त्रिरात्रोपवासः । उपवासाशक्तौ पयःपानं पादकृच्छ्रं वा ;

" मार्जारगोधानकुलमण्डूकश्वपतत्रिणः ।
हत्वा त्र्यहं पिबेत् क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥ "

इति **योगिस्मरणात्** । इदं च कामतः ; त्रिरात्रोपवासस्यार्धकृच्छ्रप्रत्याम्नायत्वात् । अकामतः पादकृच्छ्रो **विष्णूक्तः** ॥ ३२ ॥

[1] कृसरान्नं—घ, च.
[2] दक्षिणायै—ज, ठ.
[3] मार्जारमण्डूकनकुलसर्पदहरमूषकं—ख, ग.
[4] त्रिरात्रोपोषितो निवसेत्—ज.

**हंसबकबलाका[1]मद्गुवानरश्येनभासचक्रवाकानामन्यतमं हत्वा ब्राह्मणाय गां दद्यात् ॥ ३३ ॥**

मलिनीकरणवधे प्रायश्चित्तमाह । हंसादयः प्रसिद्धाः । पक्षिषु वानरोपन्यासः खगत्वसाम्यात् । एतेषां प्रत्येकं वधे गौर्देया । कामतश्चेदम् । अकामतः **शङ्खलिखितौ**—"क्रौञ्चशुकभासमयूरश्येनगृध्रसिंहबक-बलाकादिवधे वत्सतरीं दद्यात्" इति । यत्तु

"मत्या हंसं बलाकां च श्वाविट्कुररबर्हिणः ।
वानरं श्येनभासौ च हत्वा क्षीरं पिबेत् त्र्यहम्"

इति **संवर्तस्मरणं,** तत् बालादिविषये योज्यम् । यौ पुनः पूर्वोक्तौ तप्तकृच्छ्रकृच्छ्रातिकृच्छ्रौ तौ कामाकामाभ्या-मनेकवधे द्रष्टव्यौ ; उपक्रमे पक्षिणामिति बहुवचनश्रवणात् ॥ ३३ ॥

**सर्पं हत्वाभ्रीं कार्ष्णायसीं दद्यात् ॥ ३४ ॥ षण्ढं हत्वा [2]पलालभारकम् ॥ ३५ ॥ वराहं [3]हत्वा घृतकुम्भम् ॥ ३६ ॥**

पुनः संकरीकरणवधे प्रायश्चित्तमाह । कार्ष्णायसीं लोहमयीम् अभ्रीं खनित्रीं सर्पवधे दद्यात् ॥ ३४ ॥ षण्ढः नपुंसकः ; "षण्ढको लिङ्गहीनः स्यात् संस्कारैश्च नैव सः" इति **देवलस्मरणात्**। अत्र जातिविशेषानुपादानेऽपि समभिव्याहारात् पशुपक्ष्यादिजातिरेव ज्ञेया । न गोब्राह्मणयोः ; तयोः लिङ्गविशेषा-नादरेण जातिमात्रवधनिषेधात् ; "षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत्" इति **षट्त्रिंशन्मते** प्रायश्चित्तान्तरविधानाच्च । तस्मात् गोब्राह्मणव्यतिरिक्तषण्ढवधे पलालस्य व्रीहितृणस्य भारं पुरुषवाह्यं दद्यात् । तदभावे त्रपुसीसकमाषं दद्यात् ; "षण्ढके त्रपुसीसकम्" इति **याज्ञवल्क्यस्मरणात्** । इदं चाकामतः । कामतस्तु **हारीतः**—"त्रिरात्रोपोषितः षण्ढवधे पलालभारकं सीसकमाषकं च दद्यात्" इति ॥ ३५ ॥ ग्राम्यमारण्यं वा सूकरं हत्वा घृतपूर्णकुम्भं दद्यात् । कामतश्चेदम् । अकामतः **काश्यपः**—"मृगमहिषवराहकुञ्जरगण्डककरभ-ऋक्षवानरसिंहव्याघ्रपृषतचमररुरुकादीनामन्येषां च वधे अहोरात्रोपोषितश्चान्ते[4] घृतं दद्यात्" इति ॥ ३६ ॥

**तित्तिरिं तिलद्रोणम् ॥ ३७ ॥ शुकं द्विहायनवत्सम् ॥ ३८ ॥ क्रौञ्चं त्रिहायनम् ॥ ३९ ॥ क्रव्यादमृगवधे पयस्विनीं गां[5] दद्यात् ॥ ४० ॥ अक्रव्यादमृगवधे वत्सतरीम् ॥ ४१ ॥ अनुक्तमृगवधे त्रिरात्रं पयसा वर्तेत ॥ ४२ ॥**

1 मद्गुकशाखामृगाणामन्यतमं—ज, ठ ; मद्गुचामरश्येन—ग.
2 पलल—ठ.
3 हत्वा omitted in ठ.
4 चीर्णान्ते—ख, ग.
5 गां omitted in ठ.

तित्तिरिवधे द्रोणपरिमितास्तिला देयाः। कामतश्चेदम्। अकामतः **काश्यपः**—“शुकसारिकातित्तिरिमयूरकाककलविङ्ककपोतपारावतादीनां वधे प्रायश्चित्तमहोरात्रोपोषितः सर्वबीजानि दद्यात्” इति ॥ ३७ ॥ शुकवधे द्विवर्षो वत्सो देयः। कामतश्चेत्। अकामतः **शङ्खलिखितोक्ता** वत्सतरी देया ॥ ३८ ॥ कामतः क्रौञ्चवधे त्रिवर्षो वत्सो देयः। अकामतोऽत्रापि वत्सतरी ॥ ३९ ॥ क्रव्यम् आममांसम्; तत् अदन्तीति क्रव्यादाः। ते च ते मृगाश्च व्याघ्रादयः। तेषां वधे पयस्विनी गौर्देया। अत्र पयस्विनीति विशेषणात् हंसादिवधे गोमात्रं गमयति। इदमकामतः। कामतः **सुमन्तुः**—

“व्याघ्रसिंहसृगालांश्च मृगखड्गरुरुद्विपान्।
हत्वा सांतपनं कुर्याद् गोभूकन्यानृतेषु च ॥”

इति। सांतपनमत्र सप्ताहसाध्यम्; तस्य प्राजापत्यद्वयस्थानीयत्वात्; “चरेत् सांतपनं कृच्छ्रं प्राजापत्यमनिच्छया” इति **लिङ्गात्** ॥ ४० ॥ अक्रव्यादा मृगाः हरिणगवयादयः। तेषां वधे वत्सतरी देया। इदं चाकामतः। कामतो गौर्देया ॥ ४१ ॥ येषां मृगाणां वधे प्रायश्चित्तं नोक्तं, तत्र त्रिरात्रं पयःपानं कार्यं कामतश्चेत्। अकामतः **संवर्तः**—

“सर्वासामेव जातीनां मृगाणां वनचारिणाम्।
अहोरात्रोषितस्तिष्ठेज्जपन् वै जातवेदसम् ॥”

इति ॥ ४२ ॥

**पक्षिवधे नक्ताशी स्यात् ॥ ४३ ॥ [1]रूप्यमाषं वा दद्यात् ॥ ४४ ॥ हत्वा [2]जलचरमुपवसेत् ॥ ४५ ॥**

येषां[3] पक्षिणां वधे प्रायश्चित्तं नोक्तं, तत्र नक्ताशी स्यात् ॥ ४३ ॥ तत्राशक्तावाह। द्वे कृष्णले रूप्यमाष इति; तं वा दद्यात्। अकामतश्चेदम्। कामतो **योगीश्वरः**—“पतत्रिणः। हत्वा त्र्यहं पिबेत् क्षीरं कृच्छ्रं वा पादिकं चरेत्” इति ॥ ४४ ॥ पुनर्मलावहेष्वाह। जलचराः मत्स्यादयः; तान् हत्वा अहोरात्रमुपोष्य लवणं दद्यात्। यथाह **काश्यपः**—“मण्डूकमत्स्यशिशुमारादीनां वधेष्वेकरात्रमुपोष्य चीर्णान्ते लवणं दद्यात्” इति। अकामतः सकृद्वधे चेदम्। अनेकवधे कामाकामाभ्यां तप्तकृच्छ्रकृच्छ्रातिकृच्छ्रौ वेदितव्यौ[4] ॥ ४५ ॥

**अस्थन्वतां तु सत्त्वानां सहस्रस्य प्रमापणे।
पूर्णे [5]चानस्थनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥ ४६ ॥**

1 रूप्यमाषकं—ठ. 2 जलजम्—ठ.
3 येषां च—ख, ग. 4 ज्ञेयौ—घ, च. 5 चैवाप्यनस्थ्नां तु—ज, ठ.

**किंचिदेव तु विप्राय दद्यादस्थिमतां वधे ।**
**अनस्थ्नां [1]चैव हिंसायां प्राणायामेन शुध्यति ॥ ४७ ॥**

अस्थन्वतां सास्थ्नां सत्त्वानां प्राणिनां कृकलासादीनां सहस्रस्य, अनस्थ्नाम् अस्थिशून्यानां शकटमितानां च वधे षाण्मासिकं शूद्रहत्याव्रतं कार्यं कामतश्चेत् । अकामतोऽर्धम् । अत्र च सहस्रस्य प्रमापणकर्मताश्रवणात् एकप्रयत्नेन सहस्रप्रमापणं शूद्रहत्याप्रायश्चित्तनिमित्तं गम्यते । न तु प्रमापणसहस्रम् । अतश्च सहस्रार्वाचीनसंख्याकसास्थ्यनस्थिवधे प्रायश्चित्तान्तरमेव ॥ ४६ ॥ तदेवाह । सहस्रोनसंख्याकास्थिमद्वधेऽपि यत्किंचित् अष्टमुष्टिधान्यं देयम् । तादृशानामेवानस्थ्नां वधे एकः प्राणायामः कार्यः । एकैकवधेऽप्येतदेव ; " अपि वास्थिमतामेकैकस्मिन् किंचित्किंचिद्दद्यात् " इति **गौतमीयात्** । अकामतश्चेदम् । कामतो द्विगुणम् ; " अनस्थिमतां वधे पणो देयः " इति **सुमन्तुस्मरणात्** ॥ ४७ ॥

**फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ।**
**गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥ ४८ ॥**

फलदा वृक्षाः पनसाम्रादयः । गुल्मादयः पूर्वोक्ताः । पुष्पिता वीरुधः मालत्यादयः । तेषां छेदने ऋचो गायत्र्याः शतं जप्यम् । अकामतश्चेदम् । कामतस्तु **शङ्खः**—" त्रिरात्रं तु व्रतं कुर्याच्छित्वा वृक्षं फलप्रदम् " इति । दुर्लभवृक्षादिच्छेदने **यमः**—" वृक्षगुल्मलतादिच्छेदने वृद्धकृच्छ्रः ; फलवतां प्राजापत्यम् " इति । यत्तु " संवत्सरं व्रतं कुर्याच्छित्त्वा वृक्षं फलप्रदम् " इति **शङ्खोक्तम्**, तत् देवालयादिस्थितवृक्षविषयम् ;

" चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥ "

इति **योगिना** तत्र दण्डद्वैगुण्याभिधानात् ; दण्डवत् प्रायश्चित्तातिशयवचनाच्च । तडागादिभेदने तु **काश्यपः**—" वापीकूपतडागारामसेतुसभाप्रपादेवायतनभेदने प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य, [2]आज्याहुतीर्जुहुयात् । इदं विष्णुरिति प्रथमा । मानस्तोक इति द्वितीया । विष्णोः कर्माणीति तृतीया । पादोऽस्येति चतुर्थी । ततो यां देवतामुत्सादयति तस्यै देवतायै ब्राह्मणान् भोजयेत् " इति । प्रायश्चित्तं च तत्संस्कारानन्तरं कार्यम् । तत्र **शङ्खलिखितौ**—" प्रतिमारामकूपसंक्रमध्वजसेतुनिपातनभङ्गेषु [3]तत्समुत्थानं प्रतिसंस्कारोऽष्टशतं च निपातितानाम् " इति । समुत्थानं ; प्रतिक्रिया । प्रतिसंस्कारः लेपनादि । अष्टशतं पातनादिनिमित्तो दण्डः ॥ ४८ ॥

[1] तु वधे कुर्यात्प्राणायामं विशोधनम्—ज, ठ.
[2] आज्य omitted in घ, च.
[3] तत् omitted in ध.

**अन्नाद्यजातां सत्त्वानां रसजानां च सर्वशः ।**
**फलपुष्पोद्भवानां च घृतप्राशो विशोधनम् ॥ ४९ ॥**

पुनर्मलावहे प्रायश्चित्तमाह । अन्नम् ओदनादि । अद्यं मोदकादि । रसा गुडादयः । फलानि औदुम्बरादीनि । पुष्पाणि मधूकादीनि । तेषु जातानां प्राणिनां वधे घृतप्राशनेन शुद्धिः । सर्वशःशब्देन जलादिजातानामपि वधे एतदेव । अकामतश्चेदम् । कामतो द्विगुणम् ॥ ४९ ॥

**कृष्टजानामोषधीनां जातानां च स्वयं वने ।**
**वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः ॥ ५० ॥**

**इति [1]श्रीविष्णुस्मृतौ पञ्चाशत्तमोऽध्यायः**

पुनरुपपातके प्रायश्चित्तमाह । कृष्टजाः ; यवव्रीह्यादयः । वने स्वयमेवाकृष्टजा नीवारादयः । तासां वृथा दृष्टादृष्टप्रयोजनं विना छेदने पयोव्रतो दिनमेकं गामनुगच्छेत् । अकामतश्चेदम् । कामतो **यमः**—"वृक्षगुल्मलतातृणौषधिच्छेदनेऽर्धकृच्छ्रः फलवतां प्राजापत्यम्" इति ॥ ५० ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रेमास्पदश्री**वारणसी**वसि(?)धर्माधिकारि[3]श्री**रामपण्डिता**त्मज[3]श्री**नन्दपण्डित**कृतौ श्री**विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** पञ्चाशत्तमोऽध्यायः

[4]पूर्वार्धं संपूर्णम्[5]

[1] वैष्णवे धर्मशास्त्रे प्रायश्चित्तप्रकरणं पञ्चाशम्—ज, ट. [2] विष्णुस्मृतिटीकायां पञ्चाशत्तमोऽध्यायः—च.
[3] श्री omitted in ग. [4] This line omitted in ख.
[5] The MS. च adds the following lines. शुभं भवतु । शके 1775 प्रमादीनामाब्दे उदगयने शिशिरऋतौ माघशुक्लपक्षे अष्टम्यां भानुवासरे चतुर्थप्रहरे दिवा संपूर्णम । भगवन्तभट्टपौराणिकोपनाम्ना लिखितमिदम् । श्रीरस्तु ।

अदृष्टदोषान्मतिविभ्रमाद्वा यत्किंचिदूनं लिखितं मयात्र ।
तत्सर्वमार्यैः परिशोधनीयं कोपो न कार्यः खलु लेखकाय ॥

इति विष्णुस्मृतिपूर्वार्धम् ।

## एकपञ्चाशोऽध्यायः

**सुरापः [1]सर्वकर्मवर्जितः कणान् वर्षमश्नीयात् ॥ १ ॥**

[2]एवं ब्रह्महत्याप्रायश्चित्तमुक्त्वा इदानीं क्रमप्राप्तं सुरापानप्रायश्चित्तमेकपञ्चाशत्तमेनाह। सुरा पूर्वोक्ता त्रिविधा। अस्याः पानाविनाभूततालुसंयोगवानत्र सुरापः। स सर्वैः संध्यावन्दनसहितैः यजनयाजनादिकर्मभिर्विर्जितः सन् कणान् तण्डुलल्लवान् वर्षमश्नीयात्। तालुमात्रसंयोगस्य पानत्वाभावेऽपि पातित्यहेतुताबोधनाय सामान्यप्राप्तस्यापि सर्वकर्मवर्जितत्वस्यात्र पुनर्वचनम्; पुनः संस्काराम्नानात्। कणः पिण्याकोपलक्षणम्। भक्षणं न सकृत्। तच्च रात्रौ;

> " कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि।
> सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी ॥ "

इति **मानवात्**। वालवासः चीराद्युपलक्षणम्; " सुरापगुरुतल्पगौ चीरवल्कलवाससौ " इति **प्रचेतःस्मरणात्**। चीरं वस्त्रखण्डः। वल्कलं वृक्षत्वक्। जटीति मुण्डत्वनिवृत्त्यै। ध्वजी सुराध्वजधारी। एतच्चाकामतः। कामतस्तालुमात्रसंयोगे त्र्यब्दमेतदेव; " पिण्याकं वा कणान् वापि भक्षयेत् त्रिसमा निशि " इति **योगिस्मरणात्**। अकामतः पाने तु द्वादशाब्दम्; " अकामतः सुरापाने द्वादशाब्दं व्रतं चरेत् " इति **भविष्यात्**। कामतो मरणमेव; " पैष्ट्याः पाने कामकृते मरणान्तिकमादिशेत् " इति **भविष्यात्**। पैष्टीग्रहणं गौड्याद्युपलक्षणार्थम्;

> " पैष्टीपानेन चैतासां प्रायश्चित्तं निबोध मे।
> मनुनोक्तं महाबाहो समासव्याससयोगतः ॥ "

इति **भविष्यस्यैव** वचनात्। मरणोपायश्च सुराम्बुघृतगोमूत्रगोमयरसपयोरूप्यताम्रत्रपुसीसहिरण्यानामन्यतमस्याग्निवर्णस्य पानं भृग्वग्निजलपातानशनमहाप्रस्थानानि चेति। तत्र **याज्ञवल्क्यः**—" सुराम्बुघृतगोमूत्रपयसामग्निसंनिभम् " इति। " गोशकृद्रसमेव वा " इति **मनुः**। **देवलः**—" रूप्यताम्रत्रपुसीसहिरण्यानामन्यतममग्निवर्णं पीत्वा " इति। **उशना**—

[1] सर्वकाम—ज, ठ; सर्वं omitted in घ. [2] अथ श्रीविष्णुस्मृतौ उत्तरार्धारम्भः added in च.

"भृगुपातेषु निपतेज्ज्वलनं जलमेव वा।
महाप्रस्थानमातिष्ठेत् कुर्याद्वानशनं द्विजः।
सुरापानापनुत्त्यर्थं मरणात् स विशुध्यति॥"

इति। मरणान्तिकत्ववचनं पाक्षिकजीवने शुद्ध्यभावबोधनार्थम्; "नामृतः शुद्धिमाप्नुयात्" **इत्यङ्गिरः-स्मरणात्**। तत्सुरादिपाने पात्रमाह **प्रचेताः**—"सुरापोऽग्निवर्णां सुरामायसेन पात्रेण ताम्रेण वा पिबेत्" इति। तच्चार्द्रवाससा कार्यम्; "सुराप आर्द्रवासा अग्निवर्णां सुरां पिबेत्" इति **पैठीनसिस्मरणात्**। तच्च वासो गोवालादिनिर्मितम्; "गोवालचीरवासाः सुरापोऽग्निवर्णां सुरां पिबेत्" **इत्युशनःस्मरणात्**। एतच्च सकृत्पाने; "सुरापानं सकृत्कृत्वाप्यग्निवर्णां सुरां पिबेत्" **इत्यङ्गिरःस्मरणात्**। अभ्यासेऽपि मरणमेवाह **वसिष्ठः**—"अभ्यासेऽपि सुरापोऽग्निवर्णां तां पिबेत् द्विजो मरणात् पूतो भवति" इति। **भविष्येऽपि**—"गौडीमाध्व्योस्तथाभ्यासे प्राणान्तिकमुदाहृतम्" इति। तथा; कामतः पैष्ट्यभ्यासवत्। तच्च श्मशाने कार्यम्; "जीवितस्यातिकाले तु श्मशाने विहितो विधिः" इति **यमस्मरणात्**। जीवितकालातीते मरणान्तिके प्रायश्चित्ते यो विधिः स श्मशाने विहित इत्यर्थः। मरणाशक्तौ क्षत्रियस्याश्वमेधस्तीर्थयात्रा च पूर्वोक्ता। अन्येषामशक्तौ मरणवैकल्पिकं चतुर्विंशतिवार्षिकम्।

"गत्वैतदेव कुर्वीत गुरुतल्पमकामतः।
कामतो द्विगुणं प्रोक्तं पूर्वेषु च यदुच्यते॥"

इति **व्यासस्मरणात्**। एतद् द्वादशवार्षिकं पूर्वेषु ब्रह्महत्यादिषु यदुच्यते, तदपि द्विगुणमित्यर्थः। अनन्यौषधसाध्यव्याध्युपशमार्थमकामतः पैष्ट्यादिपाने **भविष्ये**—

"अकामतः सुरां पीत्वा पैष्टीं सत्कुलनन्दन।
कृच्छ्रातिकृच्छ्रौ कृत्वा वै पुनः संस्कारतः शुचिः॥
सकृत् पीत्वा तथा गौडीमज्ञानात् सुरसत्तम।
कृच्छ्रातिकृच्छ्रौ विहितौ घृतप्राशनमेव च॥
माध्वीं पीत्वा प्रमादेन सकृद्विप्रः सुराधिप।
गोमूत्रयावकाहारो दशरात्रेण शुध्यति॥
यदि [1]रोगैर्भवेद् दुष्टो नेतरस्य कदाचन।"

इति। कामतस्त्रैमासिकम्। तत्र **बोधायनः**—"मत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयनम्" इति। यद्यपि "गौडी माध्वी च पैष्टी च" इत्युपक्रम्य,

[1] रोगे—ख, ग.

"मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्तिषु ।
द्विजैस्त्रिभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम् ॥"

इति धन्वन्तरिणा भैषज्यार्थमपि त्रैवर्णिकानां सुरापानं निषिद्धम्; तथाप्युत्क्रान्तनिषेधस्य मूर्धावसिक्तादेर्वा इदं ग्राह्यमिति द्रष्टव्यम्; त्रिभिरिति [1]श्रवणात्। एतच्च प्रायश्चित्तजातं त्रैवर्णिकसाधारणम्; त्रयाणामपि वर्णानां त्रिविधसुरापानस्य महापातकत्वात्; "सुरां पीत्वा द्विजोऽमोहादग्निवर्णां सुरां पिबेत्" इति द्विजमात्रस्य मरणविधानाच्च। अमोहादिति पदच्छेदः। तेन क्षत्रियादीनामपि कामतो गौड्यादिपाने मरणान्तिकमेव। अकामतो द्वादशाब्दम्। नात्र द्वैगुण्यम्; तस्य प्रातिलोम्येन वर्णवधविषयत्वात्। नापि पादपादहानिः; तस्या उपपातकप्रकरणपठितत्वेन तदादिविषयत्वादिति। यत्तु [2]भविष्यपुराणम्—

"मतिपूर्वं सुरापाने प्राणान्तिकमुदाहृतम्।
पैष्टीपाने तु ऋषिभिर्नेतरस्यां कदाचन ॥"

इति, तत् "निर्यास्या कथिना परा" इति हारीतोक्तमद्यापरपर्यायचतुर्थसुराभिप्रायेण; न गौड्याद्यभिप्रायेण। तथा च "पैष्टीपानेन चैतासां प्रायश्चित्तं निबोध मे" इति पूर्वोक्तस्ववचनविरोधः स्यात्। तस्मात् यथोक्तमेव साधीयः।

अथ वारुणीपाने। तल्लक्षणं वैद्यके—

"पुनर्नवाशालिपिष्टैर्विहिता वारुणी स्मृता[3]।
संहितैस्तालखर्जूररसैर्या सापि वारुणी ॥"

इति। तत्र बोधायनः—

"अमत्या वारुणी पीत्वा प्राश्य मूत्रपुरीषके।
ब्राह्मणः क्षत्रियो वैश्यः पुनःसंस्कारमर्हति ॥"

इति। अयं च पुनःसंस्कारः प्रायश्चित्तानन्तरम्। प्रायश्चित्तं तूक्तं भविष्ये—

"अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति।
तप्तकृच्छ्रान्वितेनेह केवलेन न शुध्यति ॥"

इति। अमत्याभ्यासे बोधायनः—"अमत्या तु सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयनम्" इति। कामतः सकृत्पाने तु भविष्ये—

"असुरामद्यपाने तु कृते विप्रस्तु कामतः।
चान्द्रायणं समभ्यस्येच्छुद्धिकामः सकृत्कृते ॥

[1] स्मरणात्—घ, च.  [2] भविष्यत्पुराणम्—ख.  [3] मता—घ, च.

यद्वास्मिन् विषये वीर मानवीयं प्रकल्पयेत् ।
कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ।
सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी ॥"

इति । कणभक्षणे अब्दश्रवणात् चान्द्रायणाभ्यासस्त्रिरेव । कामतोऽभ्यासे तु मरणान्तिकमेव ;

"अभ्यासात् कामतः पीत्वा वारुणीं पतति द्विजः ।
मरणं तस्य निर्दिष्टं प्रायश्चित्तं विशुद्धये ॥"

इति यमस्मरणात् । अत्राप्याश्रमविशेषेण द्वैगुण्यादिकल्पना स्त्रीबालवृद्धातुरादीनामर्धादिकल्पना च पूर्ववदेव ज्ञातव्या । एतेन 'क्षत्रियवैश्ययोस्तत्र[1] महापातकम्, नाप्युपपातकम्; किं तु दोषाभाव एव' इति निरस्तम्; सर्वत्रापि निमित्तनैमित्तिकवाक्येषु द्विजपदश्रवणात्; त्रयाणामपि वर्णानां पुनःसंस्कारश्रवणात् ।

"कामादपि हि राजन्यो वैश्यो वापि कथंचन ।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते ॥"

इति बृहद्याज्ञवल्कीये एवकारेण गौड्यादिव्यावृत्तेरवाभिधानात्; असुरापदेनैव पैष्टीव्यावृत्तिसिद्धेः; "उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ" इति लिङ्गेन मद्यासवयोरेवाभ्यनुज्ञानाच्चेत्युक्तं द्वाविंशे ॥ १ ॥

**[2]मलानां मद्यानां चान्यतमस्य प्राशने चान्द्रायणं कुर्यात् ॥ २ ॥**

मलादिपानप्रायश्चित्तमाह । मलाः वसादयो द्वादश पूर्वोक्ताः । मद्यानि माध्वीकादीनि पूर्वोक्तानि दश । मद्येति [3]तालसैरारिष्टानामप्युपलक्षणम् । एतेषामन्यतमस्य प्राशने चान्द्रायणमुक्तलक्षणं कुर्यात् । कामतश्चेदम्;

"कामतो मद्यपानं तु सकृत् कृत्वा द्विजोत्तमः ।
कृच्छ्रातिकृच्छ्रौ कृत्वादौ[4] पुनःसंस्कारतः शुचिः ॥"

इति भविष्योक्तमाख्यान् । अकामतस्तु तत्रैव—

"अज्ञानान्मद्यपानं तु सकृत् कृत्वा द्विजोत्तमः ।
तप्तकृच्छ्रं समातिष्ठेद् घृतं प्राश्य ततः शुचिः ॥"

इति । ततः पुनःसंस्कारानन्तरम्; "ततोऽस्य संस्कारो मद्यमूत्रपुरीषरेतसां च प्राशने च" इति सुरापानप्रायश्चित्तप्रकमे गौतमस्मरणात् । आहिताग्नेस्तु पुनःसंस्कारानन्तरं बृहस्पतिसवोऽप्यधिकः;

1 तत्र—ग.
2 पलानाम्—ठ
3 तालसौरा—ल.
4 वै—ग.

" बृहस्पतिसवेनेष्ट्वा मद्यपो ब्राह्मणः पुनः ।
समत्वं ब्राह्मणैर्गच्छेदित्येषा वैदिकी श्रुतिः ॥ "

इति **भविष्यात्** । सुरापानेऽप्येतत् द्रष्टव्यम् ; तासामपि मद्यत्वात् । वक्ष्यति चैतत् स्वयमग्रे । आ पञ्चमाद्वर्षादनुपनीतस्य मद्यपाने न दोषः ;

" मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।
दोषस्त्वा पञ्चमाद्वर्षादूर्ध्वं पित्रोः सुहृद्गुरोः ॥ "

इति **कुमारस्मरणात्** । पञ्चवर्षादूर्ध्वं त्वनुपनीतस्य मद्यपाने **जातूकर्ण्यः**—

" अनुपेतस्तु यो विप्रो मद्यं मोहात् पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता तथा पिता ॥ "

इति । एतच्चानुपनीतविप्रस्य मद्यपानप्रायश्चित्तं मद्यपानस्य महापातकत्व एव घटते । अन्यथा तस्य कामचारत्वेन उक्तप्रायश्चित्तासंगतेरित्युक्तं प्राक् । [1]एषां मुखमात्रप्रवेशे तु **आपस्तम्बः**—

" अभक्ष्याणामपेयानामलेह्यानां च भक्षणे ।
रेतोमूत्रपुरीषाणां प्रायश्चित्तमिदं चरेत् ॥
पद्मोदुम्बरबिल्वानां पलाशस्य कुशस्य च ।
एतेषामुदकं पीत्वा त्रिरात्रेण विशुध्यति ॥ "

इति । अपर्युषितपनसादिरसपाने **पुलस्त्यः**—

" द्राक्षेक्षुटङ्कखर्जूरपनसादेश्च यो रसः ।
सद्यो जातं तु तं[2] पीत्वा त्र्यहाच्छुध्येद् द्विजोत्तमः ॥ "

इति । आदिपदात् तालाद्येकादशरसानामपि ग्रहणम् । नेदं सद्योजातकेवलद्राक्षेक्षुरसमात्रपाने[3] प्रायश्चित्तम् ; शिष्टाचारविरोधात् ; किंतु मद्योत्पादकद्रव्यसंस्कृतस्य सद्यो जातस्यापि पाने द्रष्टव्यम् । टङ्कादिरसानां तु असंस्कृतानां सद्यो जातानामपि पाने भवति ; तेषां निर्यासतया " निर्यासा कथिता परा " इति **हारीतेन** विशेषात् । अकामतोऽत्यन्ताभ्यासे द्वादशवार्षिकम् । " द्वादशभिर्वर्षैर्महापातकिनः पूयन्ते " इति **हारीतस्मरणात्** । कामतोऽत्यन्ताभ्यासे मरणमेव " अभ्यासे त्वसुरापाने तामेवाग्निनिभां पिबेत् " इति **भविष्यात्** । क्षत्रविट्शूद्राणामपि " नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः " इति **ब्राह्मेण** कलौ मद्यनिषेधात् इदमेव पादपादहान्या कल्पनीयम् ॥ २ ॥

[1] एतेषां—ग. [2] तत्—ख. [3] मात्र omitted in ख.

**लशुनपलाण्डुगृञ्जनैतद्गन्धिविड्वराहग्रामकुक्कुटवानर-गोमांसभक्षणे च ॥ ३ ॥**

अभक्ष्यप्रसङ्गादन्यत्राप्यभक्ष्ये उपपातकप्रायश्चित्तमाह । लशुनं रसोनः । पलाण्डुः [1]सुकन्दकः । गृञ्जनं लशुनावान्तरजातिः ; "लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः" इति **त्रिकाण्डी**स्मरणात् । एतेषामिव गन्धो यस्य तत् कन्दलादि[2] ;

"पलाण्डुसदृशं यत् स्याद् गन्धवर्णरसादिभिः ।
अभोज्यं तद्भवेत् सर्वं भुक्त्वा चान्द्रायणं चरेत् ॥
लशुनादिषु ये तुल्या वर्णगन्धरसादिभिः ।
अभक्ष्यास्ते द्विजातीनां भुक्त्वा सांतपनं चरेत् ॥"

इति **देवल**स्मरणात् । विड्वराहः ग्रामसूकरः । ग्रमकुक्कुटः प्रसिद्धः । ग्रामपदं वनकुक्कुटव्युदासार्थम् ; तस्य भक्ष्यत्वात् । इदं च ग्रामवासिपक्षिमात्रोपलक्षणम् ; "सर्वांश्च ग्रामवासिनः" इति **योगि**स्मरणात् । वानरः मर्कटः । गौः प्रसिद्धा । लशुनादीनां कन्दानां विड्वराहादिमांसानां च भक्षणे चान्द्रायणं कार्यम् । कामतश्चेदम् । अकामतो **मनुः**—"अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सांतपनं चरेत्" इति । अकामतोऽत्यन्ताभ्यासे [3]**शङ्खोक्तम्**—"पलाण्डुलशुनगृञ्जनादिभक्षणे संवत्सरं व्रतं कुर्यात्" इति । कामतः अत्यन्ताभ्यासे तु **मनुः**—

"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः ॥"

इति । तत्र पतितप्रायश्चित्तं द्वादशवार्षिकम् ; "महापातकिनो द्वादशभिर्वर्षैः पूयन्ते" इति **हारीत**स्मरणात् । अकामतो गोमांसादिभक्षणे **सुमन्तुः**—"गोमांसभक्षणे प्राजापत्यं चरेत्" इति । कामतश्चान्द्रायणम् ; "मद्यगोमांसभक्षणे । शुद्ध्यै चान्द्रायणं कुर्यात्" इति **पराशर**स्मरणात् । अकामतोऽत्यन्ताभ्यासे **शङ्खः**—"औष्ट्रगव्यं तथा भुक्त्वा षण्मासान् कृच्छ्रमाचरेत्" इति । कामतोऽत्यन्ताभ्यासेऽपि स एव—

"गामश्वं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखं तथा ।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात् संवत्सरं व्रतम् ॥"

इति । कामतो यावज्जीवाभ्यासे द्वादशाब्दम् ; तत्सहपठितलशुनादिषु पातित्यश्रवणात् । अनन्यौषधसाध्य-व्याध्युपशमार्थं भक्षणे **सुमन्तुः**—"लशुनपलाण्डुगृञ्जनकुम्भीश्राद्धमृत्तिकाभोज्यान्नमधुमांसमूत्ररेतोऽमेध्याभक्ष्य-

[1] सुकण्टकः—घ. [2] कन्दादि—घ. [3] शङ्खः—ख, ग.

भक्षणे सावित्र्यष्टसहस्रेण मूर्ध्नि संपातान्नयेदुपवासश्च। एतान्येव व्याधितस्य भिषक्क्रियायामप्रतिषिद्धानि भवन्ति। यानि चान्यान्येवंप्रकाराणि तेष्वप्यदोषः" इति ॥ ३ ॥

**सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्यात् ॥४॥**

प्रायश्चित्तोत्तरकर्तव्यमाह। सुरापानमारभ्य गोमांसभक्षणान्तेषु निमित्तेषु तत्प्रायश्चित्तान्ते द्विजातीनां पुनर्जातकर्माद्युपनयनान्तं संस्कारं कुर्यात्; "तथाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातः" इति वसिष्ठस्मरणात्। यथा जातस्य जातकर्मादयः, तथा गौतमोक्तशान्त्युदकाभिषिक्तस्य जातकर्मादयः कार्या इत्यर्थः। एतच्चाग्रे स्पष्टयिष्यते ॥ ४ ॥

**[1]वपनमेखलादण्डभैक्ष्यचर्याव्रतानि पुनःसंस्कारकर्मणि वर्जनीयानि ॥ ५ ॥**

तत्रोपनयने विशेषमाह। पुनःसंस्कारेषु उपनयने क्रियमाणे वपनादीनि, व्रतानि ब्रह्मचर्यादिधर्माः गन्धमाल्यादिवर्जनादयः। वर्जनाभिधानात् विकल्पनिरासः। यथाह आश्वलायनः—"अथोपेतपूर्वस्य; कृताकृतं केशवपनं मेधाजननं च, अनिरुक्तं परिदानम्, कालश्च, तत्सवितुर्वृणीमह इति सावित्रीम्" इति ॥ ५ ॥

**[2]शशकशल्यकगोधाखड्गकूर्मवर्जं पञ्चनखमांसाशने सप्तरात्रमुपवसेत् ॥ ६ ॥**

किंच, शल्यकः सेधोपलक्षणम्; "भक्ष्याः पञ्चनखाः सेधाः" इति स्मरणात्। शशादिपञ्चपञ्चनखवर्जमितरपञ्चनखमांसाशने सप्तरात्रोपवासः। अकामतश्चेदम्। कामतो यमः—

"श्वगोमायुकपीनां च तप्तकृच्छ्रं विधीयते।
उपोष्य द्वादशाहं वा कूश्माण्डैर्जुहुयाद् घृतम् ॥"

इति। कामाकामाभ्यामेतत्पक्षद्वयम्। कामाकामतोऽत्यन्ताभ्यासे शङ्खोक्ते षाण्मासिकसांवत्सरिके ज्ञेये ॥ ६ ॥

**[3]गणगणिकास्तेनगायनान्नानि भुक्त्वा सप्तरात्रं पयसा वर्तेत ॥ ७ ॥**

गणः अनेकसमुदायः। गणिका वेश्या। स्तेनः सुवर्णतत्समद्रव्यातिरिक्तद्रव्यस्य चोरः। गायनः गानोपजीवी। एषामन्नानि भुक्त्वा सप्तरात्रं पयोमात्रं पिबेत्। अकामतश्चेदम्। कामतो यमः नटनर्तकादीननुक्रम्य—

[1] वसन—ञ, ठ. [2] After गोधा is added सेधा in ञ, ठ. [3] गणक—ठ.

" एषां तु ब्राह्मणो भुक्त्वा कृत्वा चैव प्रतिग्रहम् ।
प्राजापत्येन शुध्येत ततः पापान्न संशयः ॥ "

इति । अकामतोऽभ्यासे बार्हस्पत्यं द्वादशाहं यावकव्रतम् । कामतोऽभ्यासे सुमन्तूक्तं चान्द्रं शङ्खोक्तं मासयावकव्रत वा बोध्यम् । एषैव व्यवस्थेतरत्र ' अनर्चितं वृथामांसं च ' इत्येतदन्तं बोध्यम् ॥ ७ ॥

**[1]तक्षकान्नं चर्मकर्तुश्च ॥ ८ ॥ वार्धुषिककदर्यदीक्षितबद्धनिगडाभिशस्तषण्ढानां च ॥ ९ ॥**

तक्षकः वर्धकिः ; " तक्षको नागवर्धक्योः " इति कोशात् । चर्मकर्ता चर्मकारः । चकारात् [2]तत्समानधर्मणां कैवर्तादीनां ग्रहणम् ।

" रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजा स्मृताः ॥ "

इति । एषां च ॥ ८ ॥

वार्धुषिकः समर्घं क्रीत्वा महार्घविक्रेता, वृद्ध्युपजीवी वा । यथा यमः—

" समर्घं पण्यमादाय महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत् ॥ "

इति । कदर्यमाह मनुः—

" आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् ।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः ॥ "

इति । दीक्षितः ज्योतिष्टोमादौ दीक्षणीयाद्युदवसानीयान्तप्रयोगस्थितः । बद्धः रज्ज्वादिना । निगडः शृङ्खला ; सास्यास्तीति निगडः ; अर्श आदित्वादच् । अभिशस्तः पातकाभियोगवान् । षण्ढः नपुंसकः । एषां च ॥ ९ ॥

**पुंश्चलीदाम्भिकचिकित्सकलुब्धकक्रूरोग्रोच्छिष्टभोजिनां च ॥ १० ॥ अवीरस्त्री[3]सुवर्णकारसपत्नपतितानां च ॥ ११ ॥ पिशुनानृतवादि[4]क्षतधर्मात्मरसविक्रयिणां च ॥ १२ ॥**

पुंश्चली व्यभिचारिणी । दाम्भिकः लोकानुरागार्थं कर्मकर्ता । [5]चिकित्सकः वैद्यः । लुब्धकः व्याधः । क्रूरः दृढकोपः । उग्रः वाक्कायाभ्यामुद्वेजकः । उच्छिष्टभोजी [6]भुक्तोच्छिष्टाशी । एषां च ॥ १० ॥

[1] तक्षणश्चान्नं—ठ. [2] तत्सम—च. [3] स्वर्णकार—ठ.
[4] क्रतुधर्मसोमविक्रयितःभुवायकृतघ्नानां च—ज, ठ.
[5] विचित्सक—ग. [6] भुक्तोज्झिताशी—ग.

अवीरा पतिपुत्रहीना स्त्री । सुवर्णकारः हेमाभरणकर्ता ; धातुवादेन सुवर्णकृच्च । सपत्नः शत्रुः । पतितः महापातकादिना । एषां च ॥ ११ ॥ पिशुनः सूचकः । अनृतवादी मिथ्यावदनशीलः । क्षतधर्मा विधिनिषेधातीतः । आत्मविक्रयी ; आत्ममूल्यग्राही । रसानां गुडलवणादीनां विक्रेता । एषां च । ॥ १२ ॥

**शैलूषतन्तुवायकृतघ्नरजकानां च ॥ १३ ॥ [1]कर्मकारनिषादरङ्गावतारिवैणशस्त्रविक्रयिणां[2] च ॥ १४ ॥ श्वजीविशौण्डिक[3]तैलिकचैलनिर्णेजकानां च ॥ १५ ॥ [4]रजस्वलासहोपपतिवेश्मनां च ॥ १६ ॥**

शैलूषो नटः । तन्तुवायः [5]कुविन्दः । कृतघ्नः उपकारघ्नः । रजकः वस्त्ररागकृत् । एषां च ॥ १३ ॥ कर्मकारः लोहकारः । निषादः मत्स्यघातजीवी । रङ्गावतारी मल्लादिः । वैणः वेणुच्छेदजीवी प्रतिलोमजः । शस्त्राणाम् असिशरादीनां विक्रेता । एषां च ॥ १४ ॥ श्वजीवी कुक्कुरपोषणवृत्तिः । शौण्डिकः सुराकारः । तैलिकः तैलकृत् । चैलानां वस्त्राणां निर्णेजकः धावकः । एषां च ॥ १५ ॥ रजस्वला उदक्या ; तत्स्वामिकं तदर्थं पक्वं च । उपपतिना जारेण सह वर्तमानं वेश्म यस्यासौ सहोपपतिवेश्मा ; स्वगृहावस्थितजारः । बहुवचनात् नृशंसादीनाम् : "नृशंसराजरजककृतघ्नवधजीविनाम्" इति योगिस्मरणात् । एषां च ॥ १६ ॥

**भ्रूणघ्नावेक्षितमुदक्यासंस्पृष्टं पतत्रिणावलीढं शुना [6]संस्पृष्टं गवाघ्रातं च ॥ १७ ॥ कामतः पदा स्पृष्टमवक्षुतम् ॥ १८ ॥ मत्तक्रुद्धातुराणां च ॥ १९ ॥ अनर्चितं वृथा मांसं च ॥ २० ॥**

भ्रूणघ्नः ब्रह्मगर्भहा ; तेनावेक्षितं दृष्टम् । उदक्या रजस्वला ; तया सम्यक् असंदिग्धतया स्पृष्टम् ; संदिग्धे शुद्धिविधानात् । स्पृष्टं दृष्टघुष्टयोरप्युपलक्षणम् ; "उदक्यास्पृष्टसंघुष्टम्" "संदृष्टं चाप्युदक्यया" इति मनुयोगिस्मरणात् । संघुष्टं मुहुरुच्चरितम् । पतत्रिणा काकेन अवलीढम् आस्वादितम् । शुना संस्पृष्टम् ; असंदिग्धतया स्पृष्टम् ; संदिग्धे शुद्धिविधानात् । गवा गोजातीयेनाघ्रातम् ॥ १७ ॥ बुद्धिपूर्वं पदाहतम् । अवक्षुतं क्षुतविदूषितम् ॥ १८ ॥ मत्तः मद्यादिना । क्रुद्धः नित्यकोपवान् । आतुरः रोगग्रस्तः ॥ १९ ॥ अर्चा गायत्र्या प्रोक्षणादिक्रिया ; तद्रहितम् । वृथा देवातिथ्याद्यर्थं विना साधितं मांसं, प्राणात्ययादिव्यतिरेकेण च । गणान्नमारभ्य वृथामांसान्तानां भक्षणे सप्ताहं पयसा वर्तेतेति । कामादिव्यवस्था तु पूर्वोक्तैव ॥ २० ॥

[1] कर्मारनृशंसिनिषाद—ज, ठ. [2] शास्त्र for शस्त्र—ज, ठ. [3] तैलिक omitted in घ, च.
[4] Sūtra 19, मत्तक्रुद्ध etc., is inserted between Sūtra-s 15 and 16 in घ.
[5] प्रसिद्धः—घ. [6] सं omitted—ठ.

**पाठीनरोहितराजीवसिंहतुण्डशकुलवर्जं[1] सर्वमत्स्यमांसाशने त्रिरात्रमुपवसेत् ॥ २१ ॥ सर्वजलजमांसाशने च ॥ २२ ॥**

मत्स्यभक्षणे प्रायश्चित्तमाह । पाठीनादिपञ्चकवर्जमितरमत्स्यसंबन्धिमांसाशने त्रिरात्रोपवासः । कामतश्चेदम्; "मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्" इति योगिस्मरणात् । अकामतोऽर्धम् । अभ्यासे मासं यावकव्रतं शङ्खोक्तम्; "मत्स्यादांश्च तथा मत्स्यान्" इति । अत्यन्ताभ्यासे षाण्मासिकं तूक्तमेव तत् ॥ २१ ॥ सर्वे जलजाः नक्रशिशुमारादयः । तन्मांसाशने त्रिरात्रोपवासः । व्यवस्थान्तरं च पूर्वोक्तमेव ॥ २२ ॥

**आपः [2]सुराभाण्डस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेत् ॥ २३ ॥ मद्यभाण्डस्थाश्च[3] पञ्चरात्रम् ॥ २४ ॥ सोमपः सुरापस्याघ्राय गन्धमुदकमग्नस्त्रिरघमर्षणं जप्त्वा घृतप्राशनमाचरेत् ॥ २५ ॥**

सुराभाण्डोदकपाने प्रायश्चित्तमाह । सुरा त्रिविधा । तद्भाण्डोदकपाने सप्ताहं शङ्खपुष्पीपक्वं पयः क्षीरं पिबेत् । कामतश्चेदम् । अकामतो बोधायनः—

"[4]सुराधानेषु यो भाण्डेष्वपः पर्युषिताः पिबेत् ।
शङ्खपुष्पीविपक्वं तु क्षीरं स तु पिबेत् त्र्यहम् ॥"

इति । अकामतोऽभ्यासे सुमन्तुः—

"आपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पयः ॥"

इति । कामतोऽभ्यासे यमः—

"सुराभाण्डस्थितं तोयं यदि कश्चित् पिबेद् द्विजः ।
स द्वादशाहं क्षीरेण पिबेद् ब्राह्मीं सुवर्चलाम् ।
गायत्र्यष्टसहस्रं च जप्यं कुर्वीत मानसम् ॥"

इति । सुराभाण्डस्थोदके सुरागन्धरसोपलब्धौ सुरापानप्रायश्चित्तमेव ॥ २३ ॥ मद्यभाण्डोदकपाने आह । मद्यभाण्डोदकपाने पञ्चरात्रं शङ्खपुष्पीपक्वं पयः पिबेत् । कामतश्चेदम् । अकामतो यमः—

"मद्यभाण्डस्थितं तोयं यदि कश्चित् पिबेद् द्विजः ।
कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्तयेत् ॥"

1 सशल्कवर्जं—घ.
2 सुराभाजनस्थाः—ज, ठ.
3 च omitted in ठ.
4 सुरापानस्य—ख.

इति । अकामतोऽभ्यासे शङ्खः—"मद्यभाण्डस्थितं तोयं पीत्वा सप्तरात्रं गोमूत्रयावकं पिबेत्" इति । कामतोऽभ्यासे हारीतः—

"मद्यभाण्डस्थितं तोयं यदि कश्चित् पिबेद् द्विजः ।
द्वादशाहं तु पयसा पिबेद् ब्राह्मीं सुवर्चलाम् ॥"

इति ॥ २४ ॥ सोमपः सुरापमुखगन्धाघ्राणे जलमग्नः त्रिरघमर्षणं जप्त्वा घृतं प्राश्नीयात् । अघमर्षणं प्राणायामोपलक्षणम् "प्राणानप्सु त्रिरायम्य" इति **मानवात्** । कामतो द्विगुणम् । अभ्यासे त्रिगुणम् । असोमपस्य कल्प्यम् ॥ २५ ॥

## खरोष्ट्रकाकमांसाशने चान्द्रायणं कुर्यात् ॥ २६ ॥

खरादिमांसाशन आह । खरादयः प्रसिद्धाः श्वादीनामुपलक्षणम्; "[1]श्वसृगालकाककुक्कुटदंष्ट्रिक्रव्याद-शिशुमारवानरखरोष्ट्रगजवाजिविड्वराहगोमानुषमांसाशने चान्द्रायणं कुर्यात्" इति **प्रचेतःस्मरणात्** । कामतश्चेदम् । अकामतो **याम्य**स्तप्तकृच्छ्रः । कामाकामाभ्यासे सांवत्सरिकषाण्मासिके **शङ्खोक्ते** ॥ २६ ॥

## प्राश्याज्ञातं सूनास्थं शुष्कमांसं च ॥ २७ ॥

भक्ष्याभक्ष्यत्वेनाज्ञातपशुपक्षिसंबन्धि मांसमज्ञातम्; "अज्ञातांश्च मृगद्विजान्" इति **योगिस्मरणात्** । न तु दुष्टसंपर्कादिदोषदूषितत्वेनाज्ञातम्; "अज्ञातं च सदा शुचिः" इति तस्य शुद्धत्वाभिधानात् । यत्र पशवो मार्यन्ते मांसविक्रयार्थं तत् स्थलं सूना; पशुशरीरे शराघातस्थलं वा । तत्रस्थम् । शुष्कम् आतपादिना नीरसम् । चकारात् पृष्ठमांसादि । यथा **ब्राह्मे**—

"पृष्ठमांसं गर्भशय्या शुष्कमांसमथापि वा ।
भूमेरन्तर्गतं कृत्वा मृद्भिश्चाच्छादितं च यत् ।
पक्वमांसमृजीषं च प्रयत्नान्न तु भक्षयेत् ॥"

इति । गर्भशय्या गर्भाशयमांसम् । ऋजीषम् ऊष्मभाण्डं; तत्र पक्वम् । एषां भक्षणे चान्द्रायणम् । इदं च कामतोऽत्यन्ताभ्यासे । अकामतः सकृद्भक्षणे **ब्राह्मे**—

"प्रमादाद्भक्षितैरेभिर्वने वा संवसेदहः ।
द्वितीयेऽहनि शुध्येयुः सोमान् देवान् पितॄंस्तथा ॥"

इति । एभिः पृष्ठमांसादिभिः । पूर्वेद्युर्वने उपोष्य परेद्युः उमासहितदेवपितृश्राद्धं कार्यमित्यर्थः । अकामतोऽभ्यासे **योगीश्वरः**—

[1] सृगाल omitted in ख, ग.

**पाठीनरोहितराजीवसिंहतुण्डशकुलवर्जं[1] सर्वमत्स्यमांसाशने त्रिरात्रमुपवसेत् ॥ २१ ॥ सर्वजलजमांसाशने च ॥ २२ ॥**

मत्स्यभक्षणे प्रायश्चित्तमाह । पाठीनादिपञ्चकवर्जमितरमत्स्यसंबन्धिमांसाशने त्रिरात्रोपवासः । कामतश्चेदम्; "मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्" इति योगिस्मरणात् । अकामतोऽर्धम् । अभ्यासे मासं यावकव्रतं शङ्खोक्तम्; "मत्स्यादांश्च तथा मत्स्यान्" इति । अत्यन्ताभ्यासे षाण्मासिकं तूक्तमेव तत् ॥ २१ ॥ सर्वे जलजाः नक्रशिशुमारादयः । तन्मांसाशने त्रिरात्रोपवासः । व्यवस्थान्तरं च पूर्वोक्तमेव ॥ २२ ॥

**आपः [2]सुराभाण्डस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेत् ॥ २३ ॥ मद्यभाण्डस्थाश्च[3] पञ्चरात्रम् ॥ २४ ॥ सोमपः सुरापस्याघ्राय गन्धमुदकमग्नस्त्रिरघमर्षणं जप्त्वा घृतप्राशनमाचरेत् ॥ २५ ॥**

सुराभाण्डोदकपाने प्रायश्चित्तमाह । सुरा त्रिविधा । तद्भाण्डोदकपाने सप्ताहं शङ्खपुष्पीपक्वं पयः क्षीरं पिबेत् । कामतश्चेदम् । अकामतो **बोधायनः**—

"[4]सुराधानेषु यो भाण्डेष्वपः पर्युषिताः पिबेत् ।
शङ्खपुष्पीविपक्वं तु क्षीरं स तु पिबेत् त्र्यहम् ॥"

इति । अकामतोऽभ्यासे **सुमन्तुः**—

"आपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पयः ॥"

इति । कामतोऽभ्यासे **यमः**—

"सुराभाण्डस्थितं तोयं यदि कश्चित् पिबेद् द्विजः ।
स द्वादशाहं क्षीरेण पिबेद् ब्राह्मीं सुवर्चलाम् ।
गायत्र्यष्टसहस्रं च जप्यं कुर्वीत मानसम् ॥"

इति । सुराभाण्डस्थोदके सुरागन्धरसोपलब्धौ सुरापानप्रायश्चित्तमेव ॥ २३ ॥ मद्यभाण्डोदकपाने आह । मद्यभाण्डोदकपाने पञ्चरात्रं शङ्खपुष्पीपक्वं पयः पिबेत् । कामतश्चेदम् । अकामतो **यमः**—

"मद्यभाण्डस्थितं तोयं यदि कश्चित् पिबेद् द्विजः ।
कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्तयेत् ॥"

1 सशल्कवर्जं—घ.
2 सुराभाजनस्थाः—ज, ठ.
3 च omitted in ठ.
4 सुरापानस्य—ख.

इति । अकामतोऽभ्यासे शङ्खः—"मद्यभाण्डस्थितं तोयं पीत्वा सप्तरात्रं गोमूत्रयावकं पिबेत्" इति । कामतोऽभ्यासे **हारीतः**—

"मद्यभाण्डस्थितं तोयं यदि कश्चित् पिबेद् द्विजः ।
द्वादशाहं तु पयसा पिबेद् ब्राह्मीं सुवर्चलाम् ॥"

इति ॥ २४ ॥ सोमपः सुरापमुखगन्धाघ्राणे जलमग्नः त्रिरघमर्षणं जप्त्वा घृतं प्राश्नीयात् । अघमर्षणं प्राणायामोपलक्षणम् "प्राणानप्सु त्रिरायम्य" इति **मानवात्** । कामतो द्विगुणम् । अभ्यासे त्रिगुणम् । असोमपस्य कल्प्यम् ॥ २५ ॥

## खरोष्ट्रकाकमांसाशने चान्द्रायणं कुर्यात् ॥ २६ ॥

खरादिमांसाशन आह । खरादयः प्रसिद्धाः श्वादीनामुपलक्षणम् ; "[1]श्वसृगालकाककुक्कुटदंष्ट्रिक्रव्याद-शिशुमारवानरखरोष्ट्रगजवाजिविड्वराहगोमानुषमांसाशने चान्द्रायणं कुर्यात्" इति **प्रचेतःस्मरणात्** । कामतश्चेदम् । अकामतो **याम्य**स्तसकृच्छ्रः । कामाकामाभ्यामे सांवत्सरिकषाण्मासिके **शङ्खोक्ते** ॥ २६ ॥

## प्राश्याज्ञातं सूनास्थं शुष्कमांसं च ॥ २७ ॥

भक्ष्याभक्ष्यत्वेनाज्ञातपशुपक्षिसंबन्धि मांसमज्ञातम् ; "अज्ञातांश्च मृगद्विजान्" इति **योगिस्मरणात्** । न तु दुष्टसंपर्कादिदोषदूषितत्वेनाज्ञानम् ; "अज्ञातं च सदा शुचिः" इति तस्य शुद्धत्वाभिधानात् । यत्र पशवो मार्यन्ते मांसविक्रयार्थं तत् स्थलं सूना ; पशुशरीरे शराघातस्थलं वा । तत्रस्थम् । शुष्कम् आतपादिना नीरसम् । चकारात् पृष्ठमांसादि । यथा **ब्राह्मे**—

"पृष्ठमांसं गर्भशय्या शुष्कमांसमथापि वा ।
भूमेरन्तर्गतं कृत्वा मृद्भिश्चाच्छादितं च यत् ।
पक्वमांसमृजीषं च प्रयत्नान्न तु भक्षयेत् ॥"

इति । गर्भशय्या गर्भाशयमांसम् । ऋजीषम् ऊष्मभाण्डं ; तत्र पक्वम् । एषां भक्षणे चान्द्रायणम् । इदं च कामतोऽत्यन्ताभ्यासे । अकामतः सकृद्भक्षणे **ब्राह्मे**—

"प्रमादाद्भक्षितैरेभिर्वने वा संवसेदहः ।
द्वितीयेऽहनि शुध्येयुः सोमान् देवान् पितॄंस्तथा ॥"

इति । एभिः पृष्ठमांसादिभिः । पूर्वेद्युर्वने उपोष्य परेद्युः उमामहितदेवपितृश्राद्धं कार्यमित्यर्थः । अकामतोऽभ्यासे **योगीश्वरः**—

[1] सृगाल omitted in ख, ग.

"चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥"

इति । वल्लूरं शुष्कमांसम् । कामतोऽभ्यासे शङ्खः—

"सूनामांसं शुष्कमांसमात्मार्थं च तथापरम् ।
भुक्त्वा मासं व्रतं कुर्यात् प्रयत्नात् सुसमाहितः ॥"

इति । व्रतं यावकम् ॥ २७ ॥

**क्रव्यादमृगपक्षिमांसाशने तप्तकृच्छ्रम् ॥ २८ ॥**

क्रव्यम् आममांसम्; तद् अदन्तीति क्रव्यादाः । ते च ते मृगपक्षिणश्चेति । मृगा व्याघ्रादयः । पक्षिणः श्येनादयः । तन्मांसाशने तप्तकृच्छ्रम्; अकामतश्चेदम् । कामतः प्राचेतसं चान्द्रायणम् । कामाकामतोऽभ्यासे सांवत्सरिकषाण्मासिके शङ्खोक्ते ॥ २८ ॥

**कलविङ्कप्लवचक्रवाकहंसरज्जुदालसारसदात्यूहशुकसारिका-[1]बकबलाकाकोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत् ॥ २९ ॥**

कलविङ्कः चटकः । प्लवः जलकुक्कुटः । चक्रवाकः चक्राह्वः । हंसः चक्राङ्गः । रज्जुदालः वृक्षकुक्कुटः । सारसः लक्ष्मणः । दात्यूहः कालकण्टकः काकावान्तरजातिः । शुकः कीरः । सारिका सारी । बकः कह्वः । बलाका बिसकण्ठिका । कोकिलः पिकः । खञ्जरीटः खञ्जनः । एषामशने त्रिरात्रोपवासः । कामतश्चेदम् । अकामतः अभक्ष्यपक्षिप्रक्रमे "एकरात्रोपवासो गायत्र्यष्टसहस्रजपः" इति सौमन्तवं योज्यम् । अकामतोऽत्यन्ताभ्यासे "जग्ध्वा मांसमभक्ष्यं च सप्तरात्रं यवान् पिबेत्" इति मानवं ज्ञेयम् । कामतोऽत्यन्ताभ्यासे शङ्खः—

"हंसं मद्गुं च काकोलं स्त्रीशूद्रोच्छिष्टमेव च ।
काकं वा चक्रवाकं वा प्लवं वा खञ्जरीटकम् ॥
मत्स्यादांश्च तथा मत्स्यान् बलाकाः शुकसारिके ।
रज्जुवालं च दात्यूहं मण्डूकं भुजगं तथा ।
मासं तु यावकं कुर्याद् भूयश्चैतन्न भक्षयेत् ॥"

इति ॥ २९ ॥

[1] काकोल for कोकिल—ठ; काकोल added before कोकिल in ज.

**एकशफोभयदन्ताशने च ॥ ३० ॥**

एकशफा अश्वादयः। उभयतोदन्ताः रोहितादयः। एषामशने त्रिरात्रोपवासः। इदं चाकामतः। कामतो **यमः**—"वराहैकशफानां च तप्तकृच्छ्रं विधीयते" इति। अकामतोऽभ्यासे **यमः**—"उपोष्य द्वादशाहं वा कूश्माण्डैर्जुहुयाद् घृतम्" इति। कामतोऽत्यन्ताभ्यासे **शङ्खः**—

"भुक्त्वा चोभयतोदन्तांस्तथा चैकशफानपि।
औष्ट्रं गव्यं तथा भुक्त्वा षण्मासान् व्रतमाचरेत्॥"

इति ॥ ३० ॥

**तित्तिरिकपिञ्जललावकवर्तिकामयूरवर्जं सर्वपक्षिमांसाशने [1]चाहोरात्रम् ॥ ३१ ॥**

तित्तिरिप्रभृतयः प्रसिद्धाः। तान् पञ्च मयूरान्तान् वर्जयित्वा अन्यपक्षिभक्षणे अहोरात्रमुपवासः। अकामतश्चैतत्। कामतो भक्षणे "एकरात्रोपवासो गायत्र्यष्टसहस्रजपः" इति **सौमन्तवं** ज्ञेयम्। अकामतोऽभ्यासे **मानवं** सप्तरात्रं यवागूपानम्। कामतोऽत्यन्ताभ्यासे शङ्खोक्तं मासं यावकव्रतम् ॥ ३१ ॥

**कीटाशने दिनमेकं ब्रह्मसुवर्चलां पिबेत् ॥ ३२ ॥ [2]शुनां मांसाशने च ॥ ३३ ॥**

कीटाः पिपीलिकादयः। तेषां साक्षादशने एकाहं व्रतं ब्रह्मसुवर्चलापानम्। एतच्च कामतः। अकामतः **स्मृत्यन्तरे**—

"केशकीटनखं प्राश्य मत्स्यकण्टकमेव च।
हेमतप्तं घृतं प्राश्य तत्क्षणादेव शुध्यति॥"

इति। अकामतोऽभ्यासे **हारीतः**—"क्रिमिकीटपिपीलिकाजलौकापतङ्गास्थिप्राशने[3] गोमूत्रगोमयाहारस्त्रिरात्रेण शुध्यति" इति। कामतस्त्वेतदेव द्विगुणम्। कीटयुक्तान्नाशने तु **योगीश्वरः**—

"गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते।
सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये॥"

इति। कीटाद्युद्धृत्य जलादिप्रक्षेपः कार्यः। कीटादिभिः सह पक्के तु **प्रचेताः**—"केशकीटावपन्नं च [4]मृत्प्रक्षेपेण शुध्यति" इति। अवपन्नं सह पक्कम्। अकामतोऽभ्यासे **शातातपः**—"केशकीटावपन्नं च

[1] त्वहोरात्रम्—
[2] सूना—ज, ठ.
[3] पतग for पतङ्ग—घ.
[4] पञ्चगव्येन—ख, ग.

रुधिरमांसास्पृश्यस्पृष्टभ्रूणघ्नावेक्षितपतत्र्यवलीढश्वसूकरगवाघ्रातशुष्कपर्युषिततया पक्वदेवान्नहविषां भोजने उपवासः पञ्चगव्याशनं वा[1] " इति । कामतोऽभ्यासे **संवर्तः**—

" केशकीटावपन्नं च नीलीलाक्षोपघातितम् ।
स्नाय्वस्थिचर्मसंस्पृष्टं भुक्त्वा कृच्छ्रं समाचरेत् ॥ "

इति ॥ ३२ ॥

शुनां मांसभक्षणे ब्रह्मसुवर्चलां पिबेत् । चकारात् वक्ष्यमाणं सांतपनं च । अकामतश्चेदम् । कामतः **शङ्खः**—

" शुनो मांसं शुष्कमांसमात्मार्थे[2] च तथा कृतम् ।
भुक्त्वा मासं व्रतं कुर्यात् प्रयतः सुसमाहितः ॥ "

इति । श्वग्रहणं सकलपरिसंख्यातान्यपञ्चनखोपलक्षणम् । तदभ्यासे तु **शङ्खः**—

" नारं शौनं तथा मांसं विड्वराहं खरं तथा ।
गामश्वं कुञ्जरोष्ट्रौ च सर्वपञ्चनखांस्तथा ।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात् संवत्सरं व्रतम् ॥ "

इति ॥ ३३ ॥

## छत्राककवकाशने सांतपनम् ॥ ३४ ॥

छत्राकं सर्पच्छत्रम् । कवकं कुमुदाकारः तस्यैवावान्तरभेदः । तद्भक्षणे सांतपनम् । इदं चाकामतः ; " छत्राकं विड्वराहं च " इत्युपक्रम्य " अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सांतपनं चरेत् " इति **मानवात्** । सांतपनं च द्व्याहिकम् । अकामतोऽभ्यासे **यमः**—

" लशुनं कवकं चैव छत्राकं गृञ्जनं तथा ।
पुनरज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद् द्विजः ॥ "

इति । कामतो **यमः**—

" भूतृणं [3]शिग्रुकं चैव सुखण्डं कवकानि च ।
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद् द्विजः ॥ "

इति । सुखण्डम् ; सुखण्डीति भाषायाम् । कामतोऽभ्यासे **योगीश्वरः**—" छत्राकं ग्रामकुक्कुटम् । जग्ध्वा चान्द्रायणं चरेत् " इति । कामतोऽनवच्छिन्नाभ्यासे पातित्यमेव ; " छत्राकं विड्वराहं च मत्या जग्ध्वा पतेद् द्विजः " इति **मानवात्** ॥ ३४ ॥

[1] च—ग.    [2] आत्मार्थे—घ.    [3] शिष्टकं चैवं सुकन्दं कवकानि च—घ.

**[1]यवगोधूमपयोविकारं स्नेहाक्तं शुक्तं खाण्डवं च वर्जयित्वा यत् पर्युषितं तत् प्राश्योपवसेत्॥ ३५॥**

यवविकारः पोलिकादिः। गोधूमविकारः मण्डकादिः। पयोविकारोऽत्रामिक्षादिः। स्नेहेन घृतादिना अक्तम् ओदनादि। शुक्तम् आमलकादिकाञ्जिकम्। न त्वन्नम्; "शुक्त पर्युषितोच्छिष्टम्" इति निषेधात्। खाण्डवं खण्डविकारः फाणितादिः। एतद्व्यतिरिक्तपर्युषितभक्षणे उपवासः। क्वचित् शुक्तं खाण्डवमिति पदद्वयस्थाने 'चुकुशाभवम्' इति पाठः। तत्र चुकुशा मुषा; तद्भवो व्यञ्जनविशेषः। एतच्चाकामतः। कामतः शङ्खः—

"लोहितान् वृक्षनिर्यासान् [2]व्रश्चनप्रभवांस्तथा।
केवलानि च शुक्तानि तथा पर्युषितानि च।
ऋजीषपक्कं भुक्त्वा च त्रिरात्रं तु व्रती भवेत॥"

इति। अकामतोऽभ्यासे संवर्तः—

"अभोज्यभोजनं कृत्वा ब्रह्मक्षत्रविशां गणः।
गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति॥"

इति। कामतोऽभ्यासे ब्रह्मपुराणम्—

"सगुडं मरिचाक्त च वर्ज्यं पर्युषितं दधि।
दीर्णतक्रमपेयं च नष्टस्वादु च फेनवत्।
प्रमादाद्भक्षितैरेतैर्वने पक्षव्रत चरेत्॥

इति॥ ३५॥

**[3]व्रश्चनामेध्यप्रभवान् लोहितांश्च वृक्षनिर्यासान्॥ ३६॥ शालूकवृथाकृसरसंयावपायसापूपशष्कुलीदेवान्नानि हवींषि च॥ ३७॥**

व्रश्चनं छेदनम्; तत्प्रभवं निर्यासम्। अमेध्यं विष्ठादि; तत्प्रभवाः तण्डुलीपङ्काद्यः। लोहिताः अव्रश्चनजा अपि वृक्षनिर्यासाः। तद्भक्षणे चैकाहोपवासः। कामाकामादिव्यवस्था पूर्वैव॥ ३६॥

[1] यवगोधूमवर्जं—ठ. [2] व्रसन—ग. [3] जना—ट.

शालूकं पद्मकुमुदादिकन्दः। कृसरं तिलैर्मुद्गैर्वा मिश्र ओदनः। संयावः उत्करिका; [1]येरप्येति महाराष्ट्रभाषायाम्। पायसं परमान्नम्। अपूपः मण्डकः। शष्कुली स्नेहपक्वः गोधूमविकारः; सोहारीति मध्यदेशभाषायाम्। देवार्थं कृतमन्नम्। एतानि वृथा देवाद्यनिवेदितानि। हविः होमार्थं कृतमहुतम्। [2]एतेषां चाशने अहोरात्रमुपवासः। व्यवस्था च पूर्वैव। आहिताग्नेस्तु विशेषमाह **लिखितः**—

"वृथा कृसरसंयावपायसापूपशष्कुलीः।
आहिताग्निर्द्विजो भुक्त्वा प्राजापत्यं समाचरेत्॥"

इति॥ ३७॥

## गोऽजामहिषीवर्जं सर्वपयांसि च॥ ३८॥

गवादयः प्रसिद्धाः। तासां त्रयं वर्जयित्वा सर्वेषामश्वोष्ट्रादीनां पयांसि भुक्त्वा एकरात्रमुपवासः[3]; "औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्" इति **योगिस्मरणात्**। पयोनिषेधात् तद्विकाराणां दध्यादीनामपि निषेधात् तद्भक्षणेऽपीदमेव प्रायश्चित्तम्। औष्ट्रादौ तु विकारप्रत्ययात् शकृन्मूत्रादेरपि निषेध एवात्र चकारार्थः। स्त्रीक्षीरपाने पुनःसंस्कारोऽधिकः **चतुर्विंशतिमते**—

"स्त्रीक्षीरं तु द्विजः पीत्वा कथंचित् काममोहितः।
पुनः संस्कृत्य चात्मानं [4]प्राजापत्येन शुध्यति॥"

इति॥ ३८॥

## [5]अनिर्दशाहानि तान्यपि॥ ३९॥ स्यन्दिनीसन्धिनीविवत्साक्षीरं च॥ ४०॥ अमेध्यभुजश्च॥ ४१॥

तानि गोऽजामहिषीक्षीराण्यपि अनिर्गतदशरात्राणि भुक्त्वा एकरात्रमुपवासः; "गोमहिष्यजानामनिर्दशाहानाम्" इति **वसिष्ठस्मरणात्**॥ ३९॥ स्यन्दिनी स्रवत्पयःस्तनी। संधिनी वृषभक्रान्ता। एकस्यां वेलायां दुह्यमाना, परवत्सेन दुह्यमाना वा। विवत्सा मृतवत्सा। चकारात् यमसूश्च। तासां च क्षीरं भुक्त्वा एकाहोपवासः; "स्यन्दिनीयमसूसंधिनीनां च" इति **गौतमस्मरणात्**॥ ४०॥ अमेध्यं विष्ठादि। तद्भुजश्च गोः क्षीरं भुक्त्वा एकाहोपवासः॥ ४१॥

## दधिवर्जं केवलानि च [6]शुक्तानि॥ ४२॥

केवलानि आमलकादिफलरहितानि कालेनाम्लीभूतानि शुक्तानि दधिव्यतिरिक्तानि भुक्त्वा एकाहोपवासः। अत्र केवलग्रहणात् पूर्वं शुक्तपर्युदासे सफलशुक्तविषयत्वं गम्यते। दधिग्रहणं तद्विकाराणामप्युपलक्षणम्;

[1] पेतप्येति—ग. [2] एषां—ख, ग. [3] एकरात्रोपवासः—ग.
[4] प्राजापत्यं समाचरेत्—ख, ग. [5] अनिर्दशाहं—ज, ठ. [6] सर्वशुक्तानि—ज.

"दधि भक्ष्यं तु शुक्तेषु सर्वं च दधिसंभवम् ।
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥"

इति **मानवात्** ॥ ४२ ॥

**ब्रह्मचर्याश्रमी श्राद्धभोजने त्रिरात्रमुपवसेत् ॥४३॥ दिनमेकं चोदके वसेत् ॥ ४४ ॥ मधुमांसाशने प्राजापत्यम् ॥ ४५ ॥**

ब्रह्मचारिणं प्रत्याह । ब्रह्मचर्याश्रमी असमावृत्तः मासिकादिश्राद्धे भुक्त्वा त्रिरात्रमुपवसेत् । यथाह **यमः**—

"मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः ।
त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥"

इति । अकामतश्चेदम् । कामतोऽपि स एव—

"मधु मांसं तु योऽश्नीयाच्छ्राद्धे सूतक एव च ।
प्राजापत्यं चरेत् कृच्छ्रं व्रतशेषं समापयेत् ॥"

इति; "आमश्राद्धे तदर्धं तु प्राजापत्यं तु सर्वदा" इति च । तदर्धं प्राजापत्यार्धम् । अभ्यासे प्राजापत्यम् । आश्रमग्रहणं व्रताद्यङ्गब्रह्मचर्यव्रतो नेदं प्रायश्चित्तमिति बोधयितुम् ॥ ४३ ॥ किंच त्रिरात्रोपवासानन्तरमहोरात्रमुदकवासं कुर्यात् ॥ ४४ ॥ ब्रह्मचारी मधुमांसाशने प्राजापत्यं कुर्यात् श्राद्धे अश्राद्धे च; "ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्" इति **योगिस्मरणात्** ॥ ४५ ॥

**बिडालकाकनकुलाखूच्छिष्टभक्षणे[1] ब्रह्मसुवर्चलां पिबेत् ॥ ४६ ॥**

बिडालः मार्जारः । काकः वायसः । नकुलः बभ्रुः । आखुः मूषकः । एषामुच्छिष्टाशने ब्रह्मसुवर्चलां पिबेत्, आहारान्तरपरित्यागेन । इदं चाकामतः सकृद्भक्षणे । अकामतोऽभ्यासे **शातातपः**—"श्वकाकावलीढशूद्रोच्छेषणभोजने त्वतिकृच्छ्रः" इति । कामतस्तु **विष्णुः**—

"पक्षिश्वापदजग्धस्य रसःआ(?)न्नस्य भूयसः ।
संस्काररहितस्यापि भोजने कृच्छ्रपादकम् ॥"

इति । कामतोऽभ्यासे तु **शङ्खः**—"काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत्" इति ॥ ४६ ॥

[1] भोजने—ठ.

**श्वोच्छिष्टाशने दिनमेकमुपोषितः पञ्चगव्यं पिबेत् ॥ ४७ ॥ पञ्चनखविण्मूत्राशने सप्तरात्रम् ॥ ४८ ॥ आमश्राद्धाशने त्रिरात्रं पयसा वर्तेत ॥ ४९ ॥**

श्वा कुक्कुरः । तदुच्छिष्टाशने अहोरात्रमुपोष्य परेऽहनि पञ्चगव्यं पिबेत् । अकामतश्चेदम् । अकामतोऽभ्यासे **शातातपीयो**ऽतिकृच्छ्रः । कामतो **वैष्णवः** कृच्छ्रपादः । कामतोऽभ्यासे **शङ्खः**—"शुनामुच्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत्" इति ॥ ४७ ॥ मानुषातिरिक्तपञ्चनखविण्मूत्राशने सप्ताहोपोषितः अष्टमेऽह्नि पञ्चगव्यं पिबेत्; मानुषमलभक्षणे चान्द्रायणस्योक्तत्वात् । कामतश्चेदम् । अकामतो **यमः**—

"मांसमूत्रपुरीषाणि प्राश्य गोमांसमेव च ।
श्वगोमायुकपीनां च तप्तकृच्छ्रं विशोधनम् ॥"

इति । यद्वा,

"इच्छयैषाममेध्यानि भक्षयित्वा द्विजातयः ।
कुर्युः सांतपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥"

इति **अङ्गिरो**विहिता व्यवस्था ज्ञेया । अकामतोऽभ्यासे **स एव**—"उपोष्य द्वादशाहं वा कूश्माण्डैर्जुहुयाद् घृतम्" इति । कामतोऽभ्यासे **अङ्गिराः**—

"नरकाकखराश्वानां जग्ध्वा मांसं गजस्य च ।
एषां मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥"

इति ॥ ४८ ॥ ब्रह्मचार्यतिरिक्तस्य आमश्राद्धाशने त्र्यहं पयःपानम् । यद्वा "आमश्राद्धे तथा भुक्त्वा सप्तकृच्छ्रेण शुध्यति" इति **भारद्वाजं** ज्ञेयम् । इदं चाकामतः । कामतः **षट्त्रिंशन्मते**—"आमश्राद्धे तदर्धं तु प्राजापत्यं तु सर्वदा" इति । तदर्धं प्राजापत्यार्धम् । अकामतोऽभ्यासे प्राजापत्यम् । कामतोऽभ्यासे द्वैगुण्यम् ॥ ४९ ॥

**ब्राह्मणः शूद्रोच्छिष्टाशने[1] सप्तरात्रम् ॥ ५० ॥ वैश्योच्छिष्टाशने पञ्चरात्रम् ॥ ५१ ॥ राजन्योच्छिष्टाशने त्रिरात्रम् ॥ ५२ ॥ ब्राह्मणोच्छिष्टाशने त्वेकाहम् ॥ ५३ ॥**

उच्छिष्टाशन आह । विप्रस्य शूद्रोच्छिष्टाशने सप्ताहम् । पयःपानमित्यनुषज्यते । क्वचित्तु 'पञ्चगव्यं पिबेत्' इति साक्षादुपदिष्ट एव पाठः । शूद्रग्रहणं स्त्र्युपलक्षणम्; "शूद्रोच्छिष्टभोजने सप्तरात्रमभोजनं

[1] आचमनं कृत्वा added in ज; वमनं कृत्वा added in ठ.

स्त्रीणां च " इति **आपस्तम्ब**स्मरणात् ॥ ५० ॥ विप्रस्य वैश्योच्छिष्टभोजने पञ्चाहं पयःपञ्चगव्ययोरन्यतरस्य पानम् ॥ ५१ ॥ विप्रस्य क्षत्रियोच्छिष्टाशने त्रिरात्रं पयःपञ्चगव्ययोरन्यतरस्य पानम् ॥ ५२ ॥ विप्रस्य विप्रोच्छिष्टाशने एकाहं पयःपञ्चगव्यान्यतरस्य पानम् । एतच्च कामतः । अकामतस्तु **शङ्खः**—" ब्राह्मणोच्छिष्टाशने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत् । क्षत्रियोच्छिष्टाशने ब्राह्मीरसपर्केन त्र्यहं क्षीरेण वर्तयेत् । वैश्योच्छिष्टाशने त्रिरात्रोपोषितो ब्राह्मीं सुवर्चलां पिबेत् । शूद्रोच्छिष्टाशने षड्रात्रमभोजनम् " इति । वमने तु **आपस्तम्बः**—

" अज्ञानाद्यस्तु भुञ्जीत शूद्रोच्छिष्टं द्विजोत्तमः ।
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ "

इति । एवमन्यत्राप्यर्धं कल्प्यम् । कामतोऽभ्यासे **यमः**—

" भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुध्यति ।
भूभुजा सह भुक्त्वान्नं तप्तकृच्छ्रेण शुध्यति ॥
वैश्येन सह भुक्त्वान्नमतिकृच्छ्रेण शुध्यति ।
शूद्रेण सह भुक्त्वान्नं चान्द्रायणमथाचरेत् ॥ "

इति । [1]अज्ञानात्यन्ताभ्यासे कल्प्यम् ॥ ५३ ॥

**राजन्यः शूद्रोच्छिष्टाशी पञ्चरात्रम् ॥ ५४ ॥ वैश्योच्छिष्टाशी त्रिरात्रम् ॥ ५५ ॥**

क्षत्रियादीनामाह । क्षत्रियः शूद्रोच्छिष्टाशने पञ्चरात्रं पयःपञ्चगव्यान्यतरत् पिबेत् ॥ ५४ ॥ क्षत्रियः वैश्योच्छिष्टाशने त्रिरात्रं पयःपञ्चगव्यान्यतरत् पिबेत् । क्षत्रियस्य क्षत्रियोच्छिष्टाशने एकरात्रमेव ; विप्रस्य विप्रोच्छिष्टाशने तथा दर्शनात् । क्षत्रियस्य विप्रोच्छिष्टाशने तु **आपस्तम्बः**—

" ब्राह्मणस्य यदोच्छिष्टमश्नात्यज्ञानतो द्विजः ।
अहोरात्रं तु गायत्र्या जपं कृत्वा विशुध्यति ॥ "

इति । द्विजः क्षत्रियादिः ॥ ५५ ॥

**वैश्यः शूद्रोच्छिष्टाशी च ॥ ५६ ॥ चण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् ॥ ५७ ॥ [2]सिद्धं भुक्त्वा पराकः ॥ ५८ ॥**

वैश्यः शूद्रोच्छिष्टाशने त्रिरात्रं पयःपञ्चगव्यान्यतरत् पिबेत् । वैश्यस्य विप्रक्षत्रोच्छिष्टाशने अहोरात्रं गायत्रीजपः । वैश्योच्छिष्टाशने एकाहं पयः पञ्चगव्यं वा । शूद्रस्य तु द्विजोच्छिष्टाशने न दोषः ; " द्विजोच्छिष्टं

[1] अज्ञान omitted in घ.

[2] सिद्धान्नं—ठ.

तु भोजनम्" इति विधानात्। एतच्च गुरुं विना; "उच्छिष्टमभोज्यमगुरोः" इति वासिष्ठात्॥ ५६॥ चण्डालाद्यन्नाशन आह।

"चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः॥"

इत्येते चण्डालग्रहणेन गृह्यन्ते। एषामपक्वमन्नं भुक्त्वा त्रिरात्रमुपवसेत्। एतच्च कामतः; अर्धकृच्छ्रप्रत्याम्नायत्वात्। अकामतः पादकृच्छ्रः। तदनुवृत्तौ "एतदेव चण्डालपतितान्नभोजनेषु" इति वासिष्ठस्मरणात्। अभ्यासे तूभयत्रापि कल्प्यम्॥ ५७॥ सिद्धान्नभोजन आह। चण्डालादीनां सिद्धान्नाशने पराकः। अकामतश्चेदम्। कामतः अङ्गिराः—

"अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः।
स तु चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा॥"

इति। कामाकामाभ्यामुभयव्यवस्था। यत्तु "चण्डालान्नं यदा भुक्तं ब्राह्मणाद्यैः प्रमादतः। चान्द्रायणं चरेद्विप्रः" इति आपस्तम्बीयं, तत् अकामतोऽभ्यासे ज्ञेयम्। कामाकामतोऽत्यन्ताभ्यासे सुमन्तुः—

"चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं [1]च गच्छति॥"

इति। पातित्ये द्वादशाब्दम्। साम्ये मरणान्तिकम्; चतुर्विंशतिवार्षिकं वा। सर्वथा प्रायश्चित्ताभावे संसर्गिप्रायश्चित्तव्यवस्था न स्यात्॥ ५८॥

**असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथंचन।**
**मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः॥ ५९॥**

मांसभक्षणविधिनिषेधयोर्विषयमाह। उपाकरणादिमन्त्रसंस्कृतपशुमांसाशनं कार्यम्। नासंस्कृतानां सीतायज्ञादिविशेषाणाम्; यतः शाश्वतं वैदिकं प्रत्यक्षवेदमूलकं विधिमास्थितः। सीतायज्ञादीनां तु यज्ञत्वेऽपि न प्रत्यक्षवेदमूलकत्वम्; सामयाचारिकत्वात्॥ ५९॥

**यावन्ति पशुरोमाणि तावत् कृत्वेह मारणम्।**
**वृथा पशुघ्नः प्राप्नोति प्रेत्य चेह च [2]निष्कृतिम्॥ ६०॥**

वृथा पशुहिंसायामाह। पशुघ्नः इह लोके वृथा श्रौतस्मार्तपशुयागादिमन्तरेण पशुमारणं कृत्वा पशुरोमसमसंख्यानि दिनानीह लोके परलोके च निष्कृतिं दुःखानुभवनरकोपभोगरूपां प्राप्नोति; "दिनानि पशुरोमभिः" इति स्मरणात्॥ ६०॥

[1] तु—ख. [2] दुष्कृतम्—ठ.

**यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।**
**यज्ञो हि भूत्यै सर्वस्य तस्माद्यज्ञे [1]वधोऽवधः ॥ ६१ ॥**

वृथाशब्दव्यावर्त्यमाह । पशुसृष्टिः यज्ञार्थमेव ब्रह्मणा कृता । यतो यज्ञः ऐहिकामुष्मिकसकलकाम्यफलसाधनम्, अतः तदर्थे वधः अवधः अदृष्टदूषणं न हि ॥ ६१ ॥

**न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः ।**
**यादृशं भवति प्रेत्य वृथा मांसानि खादतः ॥ ६२ ॥**

अपेक्षया खादके दोषाधिक्यमाह । मृगहन्तुः एनः तादृगुत्कृष्टं नरकहेतुर्न ; यतोऽसौ अवश्यभरणीयकुटुम्बभरणार्थं धनमपेक्षते ; " अप्यकार्यशतं कृत्वा " इति स्मरणात् । यादृक् वृथा जिह्वास्वादेन मांसभक्षकस्य प्रेत्य नरकहेतुः ॥ ६२ ॥

**ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।**
**यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः[2] पुनः ॥ ६३ ॥**

यज्ञेषु वध्यं स्तौति । ओषध्यः पुरोडाशार्थं व्रीहियवादयः । पशवः वपाद्यर्थं छागादयः । वृक्षाः यूपाद्यर्थं पलाशादयः । तिर्यञ्चः विकर्षणाद्यर्थं मण्डूकादयः । पक्षिणः यागार्थं कपिञ्जलादयः । एते यज्ञार्थं वध्यमाना अप्युत्कृष्टं गन्धर्वादियोनित्वं परलोकं पुनः पुनः प्राप्नुवन्ति ॥ ६३ ॥

**मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।**
**अत्रैव पशवो हिंस्या [3]नान्यत्रैते कथंचन ॥ ६४ ॥**

पशुवधनिमित्तेषु परिसंख्यामाह । मधुपर्कः वरादीनाम् । यज्ञः ज्योतिष्टोमादिः । पितृकर्म श्राद्धम् । दैवतकर्म दुर्गाबलिदानादि । एतेष्वेव पशवो हिंस्याः । अन्यत्र मांसबुभुक्षादिषु कथंचित् प्राणात्ययादिष्वपि न । यत्तु " प्राणात्यये तथा श्राद्धे " इति, तत् सिद्धमांसभक्षणार्थं, न पशुहिंसार्थम् ॥ ६४ ॥

**[4]यज्ञार्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः ।**
**आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम् ॥ ६५ ॥**

यज्ञपशुहिंसकं स्तौति । यः वेदानां तत्त्वमबाधितमर्थं ज्ञात्वा वेदविहितयज्ञार्थं, न तु भक्षणार्थं, पशून् हिनस्ति, स तान् पशून् आत्मानं चोत्तमां गतिं स्वर्गलक्षणां गमयतीत्युक्तोपसंहारः ॥ ६५ ॥

[1] पशोर्वधः—ज, ठ.
[2] उच्छ्रितं—ठ.
[3] नान्यत्र मनुरब्रवीत्—ठ.
[4] एष्वर्थेषु—ज, ठ.

**गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः ।**
**नावेदविहितां हिंसामापद्यपि समाचरेत् ॥ ६६ ॥**

मांसार्थे हिंसानिषेधस्य सर्वाश्रमसाधारण्यमाह । गृहादिवासिनः गृहस्थब्रह्मचारिवानप्रस्थाः, आत्मवान् संन्यासी च । द्विजग्रहणात् शूद्रस्यानिषेधः । एते आपदि प्राणसंशयेऽपि तद्रक्षार्थे मांसार्थे वेदाविहितां हिंसां नाचरेयुः । हिंसानिषेधात् सिद्धोपादानं वेदाविहितनिषेधाच्च यज्ञशिष्टोपादानमनिषिद्धम् ॥ ६६ ॥

**या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।**
**अहिंसामेव तां विद्याद् वेदाद्धर्मो हि निर्बभौ ॥ ६७ ॥**

नित्यां वैदिकहिंसां स्तौति । वैदिकी नित्याग्निषोमीयादिहिंसा अकरणे दोषहेतुत्वात् अहिंसैव; अविहितहिंसावत् न दोषजनिका ; वेदमूलत्वाद्धर्मस्य ॥ ६७ ॥

**योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।**
**स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते ॥ ६८ ॥**

वृथाहिंसास्वरूपमाह । स्वसुखनिमित्तम् अहिंसकानि हिंसार्थमनुद्यतानि भूतानि यः हिनस्ति, स इहामुत्र च सुखभाक् न भवति । अहिंसकानीति विशेषणात् आततायिवधे न दोष इत्युक्तमधस्तात् । व्याघ्रादिहनने तु न दोषः ॥ ६८ ॥

**यो बन्धनवधक्लेशान्[1] प्राणिनां न चिकीर्षति ।**
**स सर्वस्य [2]हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥ ६९ ॥**

कायिकीमहिंसां स्तुत्वा मानसीं स्तौति । यः प्राणिनां वधबन्धादिक्लेशान् न चिकीर्षति, स सर्वेषामपि हितप्रेप्सुत्वादात्यन्तिकसुखभाग्भवति ॥ ६९ ॥

**यद् ध्यायति यत् कुरुते [3]रतिं बध्नाति यत्र च ।**
**[4]तदेवाप्नोत्ययत्नेन यो हिनस्ति न किंचन ॥ ७० ॥**

अहिंसायामैहिकं फलमाह । यत् स्थावरं जङ्गमं वा किंचिदपि भूतं न हिनस्ति, स ज्ञानेच्छाकृतिविषयान् सर्वानपि ऐहिकान् कामान् अयत्नेनैव प्राप्नोति ॥ ७० ॥

[1] परिक्लेशं—ज, ठ.
[2] हितं प्रेप्सु—ठ.
[3] मतिं—ज.
[4] तदवाप्नो—ज.

**नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।**
**न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ ७१ ॥**

उपायनिषेधादपि मांसं निषिद्धमित्याह । हिंसासाध्यं मांसं हिंसानिषेधेनैव निषिद्धमिति तद्भक्षणमपि तद्वदेव नरकहेतुः ॥ ७१ ॥

**समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।**
**प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥ ७२ ॥**

निषिद्धद्रव्यारब्धतयापि तन्निषिद्धमित्याह । "एतत् पाट्कौशिकं शरीरम्, त्रीणि पितृतः, त्रीणि मातृत इति, अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृतः" इति श्रुत्या रजोविकारत्वं मांसस्योक्तम् । रजश्चामेध्यभक्षणनिषेधेन निषिद्धम्,

"मानुषास्थिशवं विष्ठा रेतो मूत्रार्तवं वसा ।
स्वेदाश्रुदूषिकाः श्लेष्मा मद्यं चामेध्यमुच्यते ॥"

इति देवलेन । अतः निषिद्धोपादानकत्वान्निषिद्धवधबन्धोपायकत्वाच्च निषिद्धानिषिद्धसर्वमांसभक्षणान्निवर्तेत ॥७२॥

**न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।**
**स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥ ७३ ॥**

मांसवर्जनस्यैहिकं फलमाह । पिशाचा हि अविधिना मांसं भक्षयन्ति । तद्वत् यो न भक्षयति, स इह लोके सर्वजनप्रियताम् अव्याधितां चाप्नोति ॥ ७३ ॥

**अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।**
**संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥ ७४ ॥**

यदुक्तं पशुघ्न इति तद्भेदानाह । ये हन्यमानमनुमन्यन्ते, हतं वा विशंसन्ति, विशस्तं वा विक्रीणन्ति क्रीणन्ति वा, क्रीतं वा पाकादिना संस्कुर्वन्ति, संस्कृतं चोपहरन्ति,[1] उपहृतं वा खादन्ति, ते सर्वेऽपि हिंसानुबन्धित्वात् घातकाः घातकवदेव दोषभाजः ॥ ७४ ॥

**स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।**
**अनभ्यर्च्य पितॄन् देवान् न ततोऽन्योऽस्त्यपुण्यकृत् ॥ ७५ ॥**

1 उपाहरन्ति—ग.

पुष्ट्यर्थं मांसाशने दोषमाह। यः व्याध्यादिरहितः केवलं पुष्ट्यर्थमेव मांसानि खादति, तस्मात् अन्यः पापकृत् न; परं तु देवपित्रर्चनात् अन्यत्र। देवाद्यर्चनावशिष्टस्य पुष्ट्यर्थमपि भक्षणे न दोषः॥ ७५॥

**वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः।**
**मांसानि च न खादेद्यस्तयोः पुण्यफलं समम्॥ ७६॥**

मांसवर्जनस्यामुष्मिकं फलमाह। प्रत्यब्दं शतवर्षाणि यः अश्वमेधेन यजते, यश्च मांसं न खादति, तावुभावपि तुल्यपुण्यफलौ॥ ७६॥

**[1]फलमूलाशनैर्दिव्यैर्मुन्यन्नानां च भोजनैः।**
**न तत् फलमवाप्नोति यन्मांसपरिवर्जनात्॥ ७७॥**

तपसोऽप्यधिकं मांसवर्जनमित्याह। दिव्यैः स्वर्गसाधनैः फलमूलनीवारादिभोजनैः तादृशी स्वर्गप्राप्तिर्नास्ति[2], यादृशी मांसवर्जनेन॥ ७७॥

**मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्।**
**एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥ ७८॥**

[3]इति श्रीविष्णुस्मृतौ एकपञ्चाशत्तमोऽध्यायः

मांसपदनिरुक्तिमाह। 'इहास्मिन् लोके यस्य मांसम् अहम् अद्मि, अमुत्र परलोके मां स भक्षयिता' इति मांसपदप्रवृत्तिनिमित्तं मनीषिणः प्राहुः। ततोऽपि मांसं त्याज्यमिति॥ ७८॥

[4]इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[5]श्रीरामपण्डितात्मज[5]श्रीनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामेकपञ्चाशत्तमोऽध्यायः

1 मेध्यैः for दिव्यैः—ज, ठ.
2 न—ग.
3 वैष्णवे धर्मशास्त्रे प्रायश्चित्तप्रकरणमेकपञ्चाशम्—ज, ठ.
4 इति विष्णुस्मृतिविवृतौ एकपञ्चाशत्तमोऽध्यायः—घ, च.
5 श्री omitted in ग.

## द्विपञ्चाशत्तमोऽध्यायः

### सुवर्णस्तेयकृद्राज्ञे कर्माचक्षाणो मुसलमर्पयेत् ॥ १ ॥

क्रमप्राप्तं सुवर्णस्तेयप्रायश्चित्तं द्विपञ्चाशत्तमेनाह। अत्र सुवर्णशब्दः जातिवचन इति पञ्चत्रिंशे साधितम्। तत्परिमाणापेक्षायां तु "ऊर्ध्वं प्राणान्तिकम्" इत्यनेन सुवर्णाधिकत्वमुपतिष्ठते। "पञ्चनिष्कप्रमाणं तु" इति भविष्यवचनं तु तत्रैव विशेषसमर्पकम्। निष्कश्चात्र व्यावहारिको दीनार एव; प्रथमोपस्थितत्वात्। तच्च ब्राह्मणस्वामिकमेव; 'ब्राह्मणसुवर्णहरणम्' इत्युपक्रमात्। तस्य स्तेयं शास्त्रपरिगणितस्वत्वहेतुं विनोपादानम्। तद् यः करोति, स कर्म स्वकृतं 'सुवर्णस्तेयं मया कृतम्' इत्याचक्षाणो राज्ञे स्ववधाय मुसलं समर्पयेत्। तेन च मुसलेन राजा तं सकृदेव हन्यात्। अत्र विशेषमाह शङ्खः—"सुवर्णस्तेनः प्रकीर्णकेश आर्द्रवासा आयसं मुसलमादाय राजानमुपतिष्ठेत् 'इदं मया पापं कृतम्, अनेन मुसलेन घातयस्व' इति, स राज्ञा शिष्टः पूतो भवति" इति। मुसलं वधसाधनोपलक्षणम्। यथाह मनुः—

"स्कन्धेनादाय मुसलं लगुडं वापि खादिरम्।
असिं चोभयतस्तीक्ष्णमायसं दण्डमेव वा॥"

इति। हननं च सकृत् कार्यम्; "गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम्" इति मानवात्। राज्ञो हननाशक्तौ तु वसिष्ठः—"स्तेनः प्रकीर्णकेशो राजानमभियाचेत, ततस्तस्मै राजौदुम्बरं शस्त्रं दद्यात्, तेनात्मानं प्रमापयेत्, मरणात् पूतो भवतीति विज्ञायते" इति। उदुम्बरं ताम्रम्। इदं च ब्राह्मणस्याप्यपहर्तुः, न क्षत्रियादेरेव। "सुवर्णस्तेयकृद्विप्रः" इत्युपक्रम्य "सकृद्धन्यात्तु तं स्वयम्" इति सर्वनाम्ना विप्रस्यापि मनुना वधोपदेशात्। यस्तु "न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्" इति वधनिषेधः, स दण्डतया; न प्रायश्चित्ततयेति; "वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव च" इति मानवात्। एवकारश्च वधदण्डाभावप्रतिषेधार्थः। यत्तु,

"यदेतद्वचनं वीर ब्राह्मणस्तपसैव वा।
अत्रैवकारकरणात् ब्राह्मणस्य सुराधिप॥
तप एवेत्यनेनैव प्रतिषेधो वधस्य च।
न दण्डप्रतिषेधोक्तिर्ब्राह्मणस्य कदाचन॥"

इति भविष्यवचनं वधनिषेधकमिति प्रतीयते, तत् अत्रैवकारकरणात् ब्राह्मणस्य वधप्रतिषेधः, तप एवेत्यनेनैव ब्राह्मणस्य दण्डप्रतिषेधोक्तिश्च कदाचन नेति व्याख्येयम्। अन्यथा चकारोक्तसमुच्चयानुपपत्तिः। न च वधदण्डाभावप्रतिषेधकत्वेनास्य व्याख्याने प्रतिषेध्याप्रसिद्धिः; "षड्भिः परिहार्यो राज्ञा अवध्यश्चाबन्ध्यश्चादण्ड्यश्चापरिवाद्यश्चापरिहार्यश्चाबहिष्कार्यश्चेति" इति गौतमीये ब्राह्मणस्य वधदण्डाभावस्मरणेन प्रतिषेध्यप्रसिद्धेः। यदपि,

"वाशब्दग्रहणाद्वीर तपो वा ब्राह्मणस्य [1]च।
दण्डो वा कीर्तितस्तज्ज्ञैर्वधस्तु न कदाचन॥"

इति भविष्यवचनम्, तत् बहुश्रुतब्राह्मणविषयमुक्तगौतमवाक्याद्व्याख्येयम्। तस्मात् सुवर्णस्तेये वधदण्डावपि ब्राह्मणस्येति सिद्धम्। विप्रपदं च सर्ववर्णोपलक्षणम्; "क्षत्रादयस्त्रयो वर्णाः" इति भविष्यवचनात्। वर्णपदं चानुलोमादीनामप्युपलक्षणम्; "प्रायश्चित्तीयते नरः" इति तेषामपि निषेधाधिकारात्। इदं चोभयोः सगुणयोः। सगुणस्वामिकस्य निर्गुणेनापहारे तु विशेषो भविष्ये—

"श्रेष्ठविप्रसुवर्णं तु प्रभूतमपहृत्य च।
सविशेषानुबन्धं च ब्राह्मणो द्यूतवल्लभः॥
प्रायश्चित्तमिदं कुर्यान्निबोध गदतो मम।
निष्कालको घृताभ्यक्त आत्मानं पावके दहेत्॥"

इति। प्रभूतम्; पञ्चनिष्काधिकपरिमाणम्; अधस्तात् प्रायश्चित्तान्तराम्नानात्। विशेषानुबन्धो यागाद्यर्थं कल्पितत्वम्। द्यूतम् [2]असत्कर्मोपलक्षणम्। तेन सगुणस्वामिकं प्रभूतं यागाद्युपकल्पितं वा हृत्वा निर्गुणस्येदं प्रायश्चित्तमित्यर्थः। निर्गुणस्य सगुणेनापहारेऽपि तत्रैव—

"विप्रस्य गुणवान् विप्रो निर्गुणस्यापहृत्य तु।
चतुर्थकाले भुञ्जानस्त्रिभिर्वर्षैर्विशुध्यति॥"

इति। क्षत्रियस्यापहर्तुस्तत्रैव—

"अपहृत्य सुवर्णं तु ब्राह्मणस्य सुराधिप।
पञ्चनिष्कप्रमाणं तु राजानं क्षत्रियो व्रजेत्॥
तस्मादौदुम्बरं शस्त्रं प्राप्यात्मानं हनेद्बुह।
निमीलिताक्षो जठरे स्वशक्त्या मरणाच्छुचिः॥"

इति। इदमुभयोः सगुणत्वे। निर्गुणत्वे तु तत्रैव—

"निर्गुणस्तु यदा विप्रोऽपहर्ता [3]क्षत्रियस्य च।
गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम्॥"

[1] तु—ख.　[2] असत्कार्यो—घ.　[3] क्षत्रियस्तथा—घ.

इति । अस्य पाक्षिकमरणेन निर्गुणविषयत्वात् निश्चितमरणस्य पूर्वस्य सगुणविषयत्वं युक्तम् । तेन च नामधारकब्राह्मणविषयत्वं पतितब्राह्मणविषयत्वं वास्येति निरस्तम् । पाक्षिकमरणत्वं चास्यानुपदं स्पष्टयिष्यामः । [1]सगुणस्वामिकस्य निर्गुणैरपहारेऽपि तत्रैव—

" क्षत्रादयस्त्रयो वर्णा निर्गुणा द्यूततत्पराः ।
गुणाढ्यस्य तु विप्रस्य पञ्चनिष्कान् हरन्ति ये ॥
निष्कालकादिविधिना दग्ध्वात्मानं तु पावके ।
शुध्येयुर्मरणाद्वीर तन्निर्यात्य तु तस्य वै ॥ "

इति । तत् अपहृतं द्रव्यं निर्यात्य स्वामिने दत्त्वेत्यर्थः । अत्र विशेषं वक्ष्यामः । इदं च कामतोऽपहारे ; " कामतस्तु कृतं यत् स्यान्नान्यथा वधमर्हति " इति शातातपस्मरणात् । मरणासंभवे अश्वमेधस्तीर्थानुसरणं चतुर्विंशतिवार्षिकं व्रतं चेत्यादि पूर्ववत् कल्पनीयम् । अकामतस्तु वक्ष्यति । परिमाणभेदेन प्रायश्चित्तभेदः षट्त्रिंशन्मते—

" वालाग्रमात्रेऽपहृते प्राणायामं समाचरेत्
लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः ॥
राजसर्षपमात्रे च प्राणायामचतुष्टयम् ।
गायत्र्यष्टसहस्रं च जपेत् पापविशुद्धये ॥
गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत् ।
यवमात्रे सुवर्णस्य प्रायश्चित्तं दिनद्वयम् ॥
सुवर्णकृष्णलं ह्येवमपहृत्य द्विजोत्तमः ।
कृच्छ्रं सांतपनं कुर्यात् तत्पापस्य विशुद्धये ॥
अपहृत्य सुवर्णस्य माषमात्रं द्विजोत्तमः[2] ।
गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति ॥
सुवर्णस्यापहरणे वत्सरं यावकी भवेत् ।
ऊर्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतम् ॥ "

इति । ऊर्ध्वम् ; पञ्चनिष्कप्रमाणमित्युक्तम् । सार्धद्विनिष्कस्तेये षडब्दम् ;

" षडब्दं वा चरेत् कृच्छ्रं यजेद्वा क्रतुना द्विजः ।
तीर्थानि वा भ्रमन् विद्वांस्ततः स्तेयाद्विमुच्यते ॥ "

[1] सगुणस्यापि—घ.

[2] द्विजाधमः—ग.

इति अत्रिस्मरणात् । क्रतुः स्वर्जिदादिः । तीर्थानि त्रीणि ; बहुवचनात् । पादोनचतुर्निष्कहेमस्तेये नवाब्दम् ; "एतदेव व्रतं स्तेनः पादन्यूनं समाचरेत्" इति व्यासस्मरणात् । यदा तु स्तेयानन्तरमेव जातानुतापः प्रत्यर्पयति, तदा त्रैवार्षिकम् । यथाह अङ्गिराः—"महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः" इति । इदं च कामतः । अकामतस्तु वार्षिकमेव ; "स्तेयं कृत्वा सुरां पीत्वा कृच्छ्रं संवत्सरं चरेत्" इति आपस्तम्बीयात् । मानसापहारे तु सुमन्तुः—"सुवर्णस्तेयी द्वादशरात्रं वायुभक्षः पूतो भवति" इति । रसवेधाद्यागादित-सुवर्णभावस्य ताम्रादेः स्तेये न महापातकम् ; मुख्यजातिसमवायाभावादिति प्राञ्चः । असुवर्णं सुवर्ण-भ्रमेणापहरतोऽपि न महापातकम् ; अपहारकर्मणोऽसुवर्णत्वात् । पारदोपलिप्तसुवर्णं रजतबुद्ध्या अपहरतस्तु भवत्येव महापातकम् ; वास्तवसुवर्णापहारत्वात् । सुवर्णसंसृष्टताम्रादिहरणेऽपि सुवर्णस्तेयमेव ; पृषदाज्य इवाज्यत्वस्य संसृष्टेऽपि सुवर्णत्वानपायादित्याद्यूह्यम् । क्षत्रियादिसुवर्णस्तेयस्योपपातकत्वात् तत्प्रायश्चित्तं तत्रैव वक्ष्यामः ॥ १ ॥

**वधात् त्यागाद्वा प्रयतो भवति ॥ २ ॥ महाव्रतं द्वादशाब्दानि वा कुर्यात् ॥ ३ ॥**

मुसलार्पणस्य प्रयोजनमाह । वधात् राजकृतमुसलप्रहारजन्यात् प्राणवियोगात् पूतो भवति । अथ तेन प्रहारेण न म्रियते, तथापि शुध्यत्येव ;

"निःशङ्केनापि चेद्राज्ञा हतो न म्रियते गुह ।
पूयत्येव न संदेहो यदि जीवति स द्विजः ॥"

इति भविष्यस्मरणात् ; "मृतकल्पः प्रहारार्तो जीवन्नपि विशुध्यति" इति योगिस्मरणाच्च । यदि पुनरुत्पन्नकरुणेन राज्ञा 'पुनरेवं मा कार्षीः' इत्यनुशिष्याहत एव त्यज्येत, तदापि शुध्यति ; "हतः शुद्धिमवाप्नोति राज्ञासौ मुक्त एव वा" इति शातातपस्मरणात् । "शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते" इति मानवाच्च । न चाकारणिकशुद्ध्यापातः ; राजवचनस्यैवाशौच इवात्रापि शोधकत्वात् । यत्तु "अघ्नन्नेनस्वी राजा" इति गौतमीयं, तद्राज्ञ एवाहनने प्रत्यवायं बोधयति, न राजमुक्तस्य शुद्ध्यभावमपीति ॥ २ ॥

अकामतः सुवर्णस्तेये आह । 'वने पर्णकुटीं कृत्वा' इत्याद्युक्तं महाव्रतम् । तदकामत उक्तपरिमाणसुवर्णस्तेये द्वादशाब्दानि कुर्यात् । वाशब्दो व्यवस्थितविकल्पार्थः ; "ऊर्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतम्" इति षट्त्रिंशन्मतात् ;

"अनिवेद्य नृपे शुध्येत् सुरापव्रतमाचरन् ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् ॥"

इति योगिस्मरणाच्च ब्रह्महसुरापव्रतयोर्विकल्पः । स्वतुल्यसुवर्णदानमतिधनिकविषयम् ॥ ३ ॥

**निक्षेपापहारी च ॥ ४ ॥ [1]धान्यधनापहारी च कृच्छ्र-मब्दम् ॥ ५ ॥**

सुवर्णस्तेयसमे प्रायश्चित्तमाह । निक्षेपः सुवर्णातिरिक्तस्य; तस्याकामतोऽपहारी च । चकारात् अश्वरत्नादिहारी च द्वादशाब्दं महाव्रतं कुर्यात् । कामतः प्रागुक्तमश्वमेधादि ज्ञेयम् ॥ ४ ॥ उपपातकस्तेये आह । धान्यं व्रीहियवादि । धनं वक्ष्यमाणं ताम्ररजतादि । परिमाणविशेषार्थमत्रोपादानम्[2] । चकारात् सिद्धान्नं च । ब्राह्मणस्वमेतदपहृत्याब्दं कृच्छ्रं चरेत् । एतच्च कामतः । यथाह **मनुः**—

" धान्यान्नधनचौर्याणि कृत्वा कामाद् द्विजोत्तमः ।
सजातीयगृहादेव कृच्छ्राब्देन विशुध्यति ॥ "

इति । धान्यं दशकुम्भपरिमितम्; अधिके वधस्मरणेन प्रायश्चित्तगौरवात्; " धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः " इति **मानवात्** । कुम्भपरिमाणं त्वाह **कात्यायनः**—" दशद्रोणा भवेत् खारी कुम्भोऽपि द्रोणविंशतिः " इति । सिद्धान्नमपि तावदेव । धनं तन्मूल्यपर्याप्तम्; न्यूनाधिकभावेन प्रायश्चित्ततारतम्यात् । अकामतः **शङ्खः**—

" तिलधान्यान्नवस्त्राणां शय्यानामामिषस्य च ।
संवत्सरार्धं कुर्वीत व्रतमेतत् समाहितः ॥ "

इति । क्षत्रियादिस्वामिकापहारे तु पादपादहान्या कल्प्यम् । मूल्यशब्देन वक्तव्ये यद्धनशब्दोपादानं तत् ब्राह्मणव्यतिरिक्तस्वामिकसुवर्णापहारेऽपीदमेव प्रायश्चित्तमिति बोधयितुम् । तच्च निर्गुणक्षत्रियादिस्वामिकसुवर्णस्य गुणवता ब्राह्मणेनापहारे वार्षिकं मूलोक्तम्;

" अधमस्यापहरणे मणीनां रजतस्य च ।
धनापहरणे चैव कुर्यात् संवत्सरं व्रतम् ॥ "

इति **मानवात्** । अधमः ब्राह्मणापेक्षया क्षत्रियः; द्विजोत्तमसजातीयस्य प्रागभिधानात् । धनं सुवर्णम्; रजतादुत्कृष्टत्वात्; " रजतं ताम्रम् " इत्युक्तत्वात् । निर्गुणस्वामिकस्य निर्गुणेनापहारे **भविष्योक्तम्**—

" यदा च निर्गुणः स्वामी क्षत्रियो वैश्य एव वा ।
हर्ता च ब्राह्मणस्तद्वत् तदापस्तम्बभाषितम् ॥
चतुर्थकाले भुञ्जानस्त्रिकालं स्नानमाचरेत् ।
स्थानासनाभ्यां विहरंस्त्रिभिर्वर्षैर्विशुध्यति ॥ "

[1] धान्यान्न—ज, ठ.

[2] मात्रोपादानम्—ख, ग.

इति। वाशब्दात् शूद्रोपादानम्। इदं च पञ्चनिष्कापहारे। न्यूनापहारे तु गुणवतो निर्गुणेनैतदेव कार्यम्;

"क्षत्रादीनां गुणवतामल्पे त्वपहृते गृह ॥
अल्पानुबन्धे च तथा एतदेव भवेद्विभो ॥"

इति **भविष्यात्**। अल्पानुबन्धे लौकिककर्मोपयोगिनि। एतत् त्रैवार्षिकम् ॥ ५ ॥

## [1]मनुष्यस्त्रीकूपक्षेत्रवापीनामपहारे[2] चान्द्रायणम् ॥ ६ ॥

मनुष्यादिस्तेये आह। मनुष्यः दासः। स्त्री दासी। शेषं प्रसिद्धम्। एषां क्षत्रियादिस्वामिकानामपकृष्टजातीयानामपहारे चान्द्रायणम्। ब्राह्मणस्वामिकापहारे[3] "उत्कृष्टजातीयापहारे महापातकसमम्" इत्युक्तम्।

"पुरुषाणां कुलीनानां नारीणां च विशेषतः।
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥"

इति **मानवे** महापातकीयदण्डस्मरणात्। वापीकूपयोः न स्वरूपेण हरणम्; शुष्कयोरपि तयोरपहारे प्रायश्चित्तप्रसङ्गात्। किंतु जलवतामेव; "वापीकूपजलानां च शुद्धिश्चान्द्रायणं स्मृतम्" इति **मानवात्**। वाप्यादिना जलविशेषणात् वाप्यादिपरिमितत्वं गम्यते; न कुम्भादिपरिमितत्वम्। तेन न तत्रेदं प्रायश्चित्तम्; किं त्वन्यदेव। इदमप्यनुत्सृष्टजलविषयम्। उत्सृष्टे तु सर्वसाधारणस्वत्वान्न दोषः। क्षेत्रम्; बीजोत्पत्तियोग्या भूः निवर्तनपरिमाणा। तदपहारे चान्द्रायणम्। तन्न्यूनाधिकापहारे प्रायश्चित्तान्तरं कल्प्यम् ॥ ६ ॥

## द्रव्याणामल्पसाराणां सांतपनम् ॥ ७ ॥

सीसादिस्तेये आह। अल्पसाराणि अल्पमूल्यानि त्रपुसीसकादीनि। तृणकाष्ठादीनां पृथगभिधानात्। तादृशद्रव्यापहारे सांतपनं द्व्यहसाध्यम्। पञ्चविंशतिपणलभ्यविषयमेतत्। अधिकमूल्यविषयेऽधिकम्; "कांस्यायस्ताम्रसीसानामर्धं कृच्छ्रार्धमेव च" इति **जाबालिस्मरणात्**। अर्धं पादकृच्छ्रः। ततोऽप्यधिकमूल्ये अर्धकृच्छ्रः ॥ ७ ॥

## भक्ष्यभोज्ययानशय्यासनपुष्पमूलफलानां पञ्चगव्यपानम् ॥ ८ ॥

भक्ष्यादिस्तेये आह। भक्ष्यं मोदकादि। भोज्यम् ओदनादि। पानं दुग्धादि। शय्या प्रसिद्धा। आसनं पीठादि। पुष्पं मल्लिकादि। मूलम् आर्द्रकादि। फलम् आम्रादि। एषामेकवारतृप्तिदभोजनपर्याप्तानां च हरणे भोजनपरिहारेण पञ्चगव्याशनम्। द्विवारभोजनपर्याप्तहरणे त्रिरात्रम्। यथाह **पैठीनसिः**—

[1] मनुष्यस्त्रीक्षेत्र—ठ; वापिकानाम् for वापीनाम्—च.
[2] अपहरणे—ठ.
[3] स्वामिकानाम्—च.

"भक्ष्यभोज्यस्यान्नस्योदरपूरणमात्रस्य हरणे एकरात्रम्, द्विवारोदरपूरणमात्रस्य त्रिरात्रं पञ्चगव्याहारता" इति । एकरात्रशयनार्थशय्यापहारे चैवम् । बहुमूल्यायाः "अत्यन्तार्घापहारे तु शय्यानामामिषस्य च । संवत्सरार्धं कुर्वीत" इति शङ्खोक्तं ज्ञेयम् । आसनेऽप्येषैव व्यवस्था । पुष्पादीनामप्येकरात्रोपभोग्यानां हरणे पञ्चगव्याशनम् । त्रिरात्रषड्रात्रोपभोग्यापहारे तु पादार्धकृच्छ्रौ ।

"पक्वान्नमौषधं तैलं शय्या वास उपानहौ ।
उदके फलमूलेषु पुष्पपर्णसुगन्धिषु ।
मृद्भाण्डमथ मांसेषु अर्धं कृच्छ्रार्धमाचरेत् ॥"

इति जाबालोक्तं ज्ञेयम् । बहुमूल्यानां चिरमपहारे तु "मूलानां कुसुमस्य च । मासार्धं तु व्रतं कुर्यात्" इति शङ्खोक्तं ज्ञेयम् ॥ ८ ॥

**तृणकाष्ठद्रुमशुष्कान्नगुडवस्त्रचर्मामिषाणां त्रिरात्रमुपवसेत् ॥ ९ ॥**

तृणादिस्तेये आह । तृणं द्व्यहाहारो गवादेः । काष्ठं द्व्यहपाकोपयोगि । द्रुमः अनुपभोग्यफलपुष्पः । शुष्कान्नं तण्डुलादि । गुडश्च द्व्यहाहारः । वस्त्रं कौपीनाच्छादनयोग्यम् । आमिषं द्व्यहभक्ष्यम् । एषां स्तेये त्रिरात्रमुपवसेत् । दशाहपर्याप्तापहारे **मनुः**—

"लवणानां गुडानां च मूलानां कुसुमस्य च ।
मासार्धं तु व्रतं कुर्यादेतदेव समाहितः ॥"

इति । विंशतिरात्रपर्याप्तापहारे मासम् ;

"तृणेक्षुकाष्ठतक्राणां रसानामपहारकः ।
मासमेतद्व्रतं कुर्याद्दन्तानां सर्पिषां तथा ॥"

इति **मानवात्** । अस्यापवादमाह **शङ्खः**—

"अस्तेयमग्नये काष्ठमस्तेयं च तृणं गवे ।
कन्याहरणमस्तेयं यो हरत्यनलंकृताम् ॥"

इति । अग्नये श्रौतस्मार्ताय । **योगीश्वरोऽपि**—"द्विजस्तृणैधपुष्पाणि सर्वतः स्ववदाहरेत्" इति । तदुभयमप्येकाहपर्याप्तस्तेये ॥ ९ ॥

**मणिमुक्ताप्रवालताम्ररजतायःकांस्यानां[1] द्वादशाहं कणानश्नीयात् ॥ १० ॥**

1 कांस्यापहरणे—ज.

[1]मण्यादिस्तेय आह । मण्यादयः प्रसिद्धाः । तेषामेकाहभक्ष्यद्वादशगुणमूल्यलभ्यानां स्तेये द्वादशाहं कणानश्नीयात् । कामतश्चेदम् । अकामतोऽर्धम्; "कांस्यायस्ताम्रसीसानामर्धं कृच्छ्रार्धमेव च" इति स्मरणात् । अर्धं पादकृच्छ्रः । स तूक्तपरिमाणात् न्यूनपरिमाणे मूल्ये । गद्याणदशकन्यूनमूल्यस्तेये चतुर्विंशतिमते—"रत्नानां हरणे विप्रश्चरेच्चान्द्रायणं व्रतम्" इति । गद्याणसहस्रन्यूनमूल्यस्तेये मनुः—

"अधमस्यापहरणे मणीनां रजतस्य च ।
धनापहरणे चैव कुर्यात् संवत्सरं व्रतम् ॥"

इति । गद्याणसहस्राधिकमूल्यरत्नाद्यपहारे तु महापातकसाम्यम्;

"निक्षेपस्यापहरणं नराश्वरजतस्य च ।
भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम्;
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥"

इति मानवात् । तच्च स्पष्टमुक्तं चतुर्विंशतिमते—

"रूप्यं हृत्वा द्विजो मोहाच्चरेच्चान्द्रायणं व्रतम् ।
गद्याणदशकादूर्ध्वमा शताद् द्विगुणं चरेत् ।
आ सहस्राच्च त्रिगुणमूर्ध्वं हेमविधिः स्मृतः ॥"

इति ॥ १० ॥

**कार्पासकीटजोर्णाद्यपहरणे त्रिरात्रं पयसा वर्तेत ॥ ११ ॥**

कार्पासादिस्तेये आह । कार्पासं तूलम् । कीटजं तसरीपट्टादि । ऊर्णा मेषादिलोम । आदिशब्दात् क्षुमादितन्तवः । एषां स्तेये त्रिरात्रं पयसा वर्तेत । इदं च पादकृच्छ्रतुल्यत्वात् अकामतः । कामतोऽर्धकृच्छ्रः; "गुडकार्पासधान्यानि कृच्छ्रं कृच्छ्रार्धमेव च" इति जाबालिस्मरणात् । तूलादिग्रहणात् तत्प्रकृतिकानां वस्त्रादीनामप्येतदेव प्रायश्चित्तं दर्शितं तेनैव—"शय्या वास उपानहौ" इति । एतच्च द्विर्भोजनार्हभक्ष्यमूल्यतूलादिविषयम्; अधिके "तिलधान्यान्नवस्त्राणां संवत्सरार्धं कुर्वीत" इति प्रायश्चित्ताधिक्यदर्शनात् ॥ ११ ॥

**द्विशफैकशफापहरणे द्विरात्रमुपवसेत् ॥ १२ ॥ [2]पक्षिगन्धौषधिरज्जुवैदलानामपहरणे दिनमुपवसेत् ॥ १३ ॥**

द्विशफादिस्तेये आह । द्विशफाः अजादयः । एकशफाः खरादयः । एषां स्तेये त्रिरात्रमुपवसेत् । इदमपि द्विर्भोजनार्हभक्ष्यमूल्यलभ्याजादिविषयम् । अधिकेऽधिकं कल्प्यम् । गवाश्वादिषु तु,

[1] From here up to कणान् missing in ख.

[2] This Sūtra omitted in ज.

"हिरण्यरत्नकौशेयस्त्रीपुंगोगजवाजिनः ।
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ॥"

इत्युत्तमत्वेनोत्तमसाहसविधानात् सुवर्णस्तेयसमत्वाच्च तत्प्रायश्चित्तमेव ज्ञेयम् ॥ १२ ॥

पक्ष्यादिस्तेये आह । पक्षिणः शुकादयः । गन्धः कर्पूरादिः । ओषधयः गुडूच्यादयः । रज्जुः मुञ्जादिमयी वरत्रा । वैदलं वैणवशूर्पादि । एषां स्तेये एकाहमुपवासः । एतच्चैकवारभक्ष्यमूल्यलघुपक्ष्यादिस्तेयविषयम् । मूल्याधिक्येऽधिकम्; "[1]मासमेकं व्रतं कुर्याद् गन्धानां सर्पिषां तथा ।" इति शङ्खस्मरणात् ॥ १३ ॥

**दत्त्वैवापहृतं द्रव्यं धनिकस्याप्युपायतः ।**
**प्रायश्चित्तं ततः कुर्यात् कल्मषस्यापनुत्तये ॥ १४ ॥**

स्तेयप्रायश्चित्तविधिशेषमाह । धनस्वामिनोऽपहृतं द्रव्यं साक्षादेव दत्त्वा, लज्जादिना साक्षाद्दानाशक्तावुपायान्तरेण यौतकादिमिषेणापि दत्त्वैव प्रायश्चित्तं कार्यम्; द्रव्यदानस्यापि प्रायश्चित्तवदेव पापक्षयहेतुत्वात् । न च विकल्पः; दत्त्वेति क्त्वाप्रत्ययेन दानस्य पूर्वाङ्गताबोधनात् । तच्चैकादशगुणं देयम्;

"स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः ।
स्वामिनोऽपहृतं देयं हर्त्रा त्वेकादशाधिकम् ॥"

इति **स्मरणात्** । तदशक्तौ चतुर्गुणं देयम्; "हृत्वा चतुर्गुणं दत्त्वा प्रायश्चित्तं समाचरेत्" इति **चतुर्विंशतिमतात्** । तदशक्तौ सममपि; "यदस्यापहृतं द्रव्यं तत्तस्यैव विनिर्दिशेत्" इति **भविष्यात्** । तन्नाशे तत्प्रतिरूपम्;

"प्रमापणे प्राणभृतां दद्यात् तत्प्रतिरूपकम् ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः[2] ॥"

इति **पाराशर्यात्** । तस्याप्यसंभवे चतुर्गुणं व्रतं कार्यम्; "अभावे काञ्चनस्य स्याद् व्रतमेतच्चतुर्गुणम्" इति **वैष्णवात्** । तत्राप्यशक्तौ तत्तुष्टिमेवोत्पादयेत्;

"यो यस्य हिंस्याद् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत् तुष्टिं राज्ञे दद्याच्च तत्समम् ॥"

इति **स्मरणात्** । दण्डदाने च विशेषो भविष्ये—

"आनीयते बलाद्यस्तु स्तेनो वै पार्थिवं प्रति ।
प्रायश्चित्तं तु तस्योक्तं दण्डश्च सुरसत्तम ॥
स्वयं गमनपक्षे तु ब्राह्मणस्य नृपं प्रति ।

[1] मासमेतत्—ग. [2] यमः—घ.

दण्डदानस्य चाशक्तौ विज्ञेयं तु तपो गुह ।
तपः कर्तुमशक्तश्चेद् दण्डेनैव विशुध्यति ॥"

इति ॥ १४ ॥

**यद्यत् परेभ्यस्त्वादद्यात् पुरुषस्तु निरङ्कुशः ।**
**[1]तेन तेन विहीनः स्याद्यत्र यत्राभिजायते ॥ १५ ॥**

स्तेयस्यैहिकं फलमाह । रागाभिभवेन निषेधमतिक्रम्य यद्यत् द्रव्यमपहरति, तेन तेनैव विहीनः तत्तत्कर्मारब्धासु तासु तासु योनिषु जायते ; स्तेयप्रायश्चित्तानां निषेधातिक्रमनिमित्तत्वेन तत्सापेक्षत्वात् ॥१५॥

**जीवितं धर्मकामौ च धने यस्मात् प्रतिष्ठितौ[2] ।**
**तस्मात् सर्वप्रयत्नेन धनहिंसां विवर्जयेत् ॥ १६ ॥**

तमेवाह । यतो जीवितं प्राणधारणमाहारादिसाधनतया, धर्मः दानादिकर्मतया, कामश्चोपभोगविषयतया धनेनैव साध्यन्ते, अतः धनापहारे परकीयप्राणधर्मकामनाशात् सर्वेण कायवाङ्मनोजन्येन व्यापारेण धनस्य हिंसां स्तेयं वर्जयेत् ॥ १६ ॥

**प्राणिहिंसापरो यस्तु धनहिंसापरस्तथा ।**
**महद् दुःखमवाप्नोति धनहिंसापरस्तयोः ॥ १७ ॥**

**इति [3]श्रीविष्णुस्मृतौ द्विपञ्चाशत्तमोऽध्यायः**

प्राणिधनहिंसकयोर्धनहिंसकाधिक्यमाह । यतः प्राणिहिंसायां प्राणमात्रस्यैव नाशः, धनहिंसायां तु प्राणधर्मकामानां त्रयाणां नाशः, अतः प्राणहिंसकात् धनहिंसको गरीयान् ॥ १७ ॥

**इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[5]श्रीरामपण्डितात्मज[5]श्रीनन्द-पण्डितापरनामधेयविनायकपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां द्विपञ्चाशत्तमोऽध्यायः**

[1] तेन तेनैव हीनः स्यात्—ठ. [2] प्रतिष्ठितम्—ङ.
[3] वैष्णवे धर्मशास्त्रे प्रायश्चित्तप्रकरणं द्विपञ्चाशम्—ज ; वैष्णवे धर्मशास्त्रे प्रायश्चित्तप्रकरणं द्वापञ्चाशम्—ठ.
[4] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां द्विपञ्चाशत्तमोऽध्यायः—घ, च. [5] श्री omitted in ग.

## त्रिपञ्चाशत्तमोऽध्यायः

**अथागम्यागमने महाव्रतविधानेनाब्दं चीरवासा वने प्राजापत्यं कुर्यात् ॥ १ ॥**

क्रमप्राप्तं गुरुतल्पप्रायश्चित्तं त्रिपञ्चाशत्तमेनाह । यद्यपि स्वपत्नीव्यतिरिक्ताः सर्वा अपि स्त्रियोऽगम्या एव, तथाप्यत्र क्रमेण गुरुतल्पपरत्वमगम्याशब्दस्याध्यवसीयते । तत्र मातृगमनस्यातिपातकत्वात् तत्प्रायश्चित्तं प्रागेव निरूपितम् । इदानीं तत्सपत्नीगमनस्य महापातकत्वात् तत्प्रायश्चित्तमाह[1] । तत्र अगम्या शूद्रा पितृभार्या । तस्यामकामतो गमने पूर्वोक्तमहाव्रतविधानेन वनं वसन् अब्दं प्राजापत्यमुक्तव्रतं कुर्यात् । यथाह **मनुः**—

" खट्वाङ्गी चीरवासा वा श्मश्रुलो [2]निर्जने वने ।
प्राजापत्यं चरेत् कृच्छ्रमब्दमेकं समाहितः ॥ "

इति । कामतस्तद्गमने **याज्ञवल्क्यः**—" प्राजापत्यं चरेत् कृच्छ्रं समा वा गुरुतल्पगः " इति । समाः वर्षत्रयम् । इदमेव वैश्यायामकामतो गमने ;

" गमने गुरुभार्यायाः पितृभार्यागमे तथा ।
अब्दत्रयमकामात्तु कृच्छ्रं नित्यं समाचरेत् ॥ "

इति **वृद्धमनुस्मरणात्** । कामतो वैश्यागमने षड्वार्षिकम् ; " ब्राह्मणीपुत्रस्य वैश्यायां षड्वार्षिकम् " इति **पुलस्त्यस्मरणात्** । इदमेव क्षत्रियायामकामतो गमने ; कामतो गमने द्वादशवार्षिकविधानात् । यथाह **शङ्खः**—

" अधःशायी जटाधारी पर्णमूलफलाशनः ।
एककालं समश्नन् वै वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे ॥ "

1 उच्यते—ख.

2 विजने—ख, ग.

इति । एतदेवाकामतो ब्राह्मणीगमने । [1]कामतो मरणान्तिकम् ;

" पितृभार्यां तु विज्ञाय सवर्णां योऽधिगच्छति ।
जननीं चाप्यविज्ञाय नामृतः शुद्धिमाप्नुयात् ॥ "

इति **षट्त्रिंशन्मतात्** । मरणप्रकारं त्वाह **योगीश्वरः**—" तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत् " इति । स्वापश्च स्वकर्म विख्याप्य कार्यः ; " गुरुतल्प्यभिभाष्यैनः " इति **मानवात्** । एतच्चोभयेच्छातः प्रवृत्तौ । स्त्रीच्छया तु **गौतमः**—" तप्ते लोहशयने गुरुतल्पगः शयीत ; सूर्मीं वाश्लिष्येज्ज्वलन्तीम् " इति । अत्रेच्छया विकल्पः । सूर्मी लौही शैली मृन्मयी वा स्त्रीप्रतिमा ; " गुरुतल्पगो मृन्मयीमायसीं वा स्त्रीप्रतिकृतिम् " इति **हारीतस्मरणात्** ; " गुरुतल्पी शिलां तप्ताम् " इति **अङ्गिरःस्मरणात्** । आलिङ्गनं चोत्सन्नलोमकेशेन घृताभ्यक्तेन कार्यम् ; " निष्कालको घृताभ्यक्तस्तप्तां सूर्मीं परिष्वज्य मरणात् पूतो भवति " इति **वासिष्ठात्** । स्वेच्छया प्रवृत्तावपि स एव—" लिङ्गं वा सवृषणमुत्कृत्याञ्जलावाधाय दक्षिणां प्रतीचीं व्रजेत् अजिह्ममाशरीरपातम्[2] " इति । दक्षिणां प्रतीचीं वेत्यर्थः ; " गुरुतल्पगो दक्षिणाप्रतीच्योरन्यन्तरेण गच्छेत् " इति **बोधायनस्मरणात्** । नैर्ऋतीमिति वा ; " नैर्ऋत्यां चोत्सृजेत् तनुम् " इति **स्मरणात्** । उत्तरां वा ; " उत्कृत्य वृषणौ वापि प्रविशेद्दिशमुत्तराम् " इति **अङ्गिरःस्मरणात्** । लिङ्गादिच्छेदश्च स्वयं कार्यः ; " स्वयं वा शिश्नवृषणौ " इति **मानवात्** । गच्छेच्चानीक्षमाणः ; " अनीक्षमाणो गच्छेत् " इति **शङ्खस्मरणात्** । धावन् गच्छन् कूपादिं न परिहरेत् ; " यत्रैव प्रतिहतस्तत्रैव तिष्ठेदा प्रलयात्[3] " इति **वासिष्ठात्** । यदि स्वयं न करोति, तदा राज्ञा कार्यम् ; " शिश्नस्योत्कर्तनात् तत्र नान्यो दण्डो विधीयते " इति **नारदस्मरणात्** । तावता विशुध्यति ; " दण्डेनैव विशुध्यति " इति **भविष्यात्** । धनदण्डे प्रायश्चित्तं पृथक् कार्यम् ; " प्रायश्चित्तं तु तस्योक्तं दण्डश्च सुरसत्तम " इति **भविष्यात्** । इदमेव क्षत्रियायां कामतोऽभ्यासे अण्डरहितशिश्नोत्कर्तनम् ;

" मत्या गत्वा पुनर्भार्यां गुरोः क्षत्रसुतां द्विजः ।
अण्डाभ्यां रहितं लिङ्गमुत्कृत्य स मृतः शुचिः ॥ "

इति **कण्वस्मरणात्** । अकामतोऽभ्यासेऽण्डमात्रच्छेदः[4] ;

" गुरोः क्षत्रसुतां भार्यां पुनर्गत्वा त्वकामतः ।
अण्डमात्रं समुत्कृत्य शुध्येज्जीवन् मृतोऽपि वा ॥ "

[1] कामतस्तु—ग.
[2] निपातात्—ख, ग.
[3] आ मरणात्—ख, ग.
[4] अभ्यासे omitted in घ ; मात्र omitted in ख.

इति जातूकर्ण्यस्मरणात्। वैश्यायां कामतोऽभ्यासे लिङ्गाग्रच्छेदः ;

" गुरोर्भार्यां तु यो वैश्यां गत्वा गच्छेत् पुनः पुनः ।
लिङ्गाग्रं छेदयित्वा तु ततः शुध्येत् स किल्बिषात् ॥ "

इति लौगाक्षिस्मरणात्। अकामतो [1]मरणान्तिकं ब्रह्मचर्यम् ;

" अभ्यस्य विप्रो वैश्यायां गुरोरज्ञानमोहतः ।
षडङ्गं ब्रह्मचर्यं च स चरेद्यावदायुषम् ॥ "

इति हारीतस्मरणात्। शूद्रायां कामतोऽभ्यासे द्वादशवार्षिकम् ;

" पुनः शूद्रां द्विजो गत्वा बुद्ध्या विप्रः समाहितः ।
ब्रह्मचर्यमदुष्टात्मा चरेद् द्वादशवार्षिकम् ॥ "

इति उपमन्युस्मरणात्। अकामतोऽभ्यासे षडब्दम्। प्रातिलोम्येन व्यवाये योगीश्वरः—" प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् " इति। वधप्रकारश्च वासिष्ठो ज्ञेयः। स यथा—शूद्रादीनां ब्राह्मणीगमने वीरणलोहितदर्भशरपत्रैर्यथाक्रमं वेष्टयित्वाग्नौ प्रासनं ब्राह्मण्या वपनं सर्पिषाभ्यञ्जनं कृष्णगौरश्वेतखरारोपणं महापथप्रव्राजनं चेति। एवं वैश्यस्य राजन्यायां शूद्रस्य राजन्यवैश्ययोः क्षत्रियावैश्याशूद्राणां चेति। कामतः प्रवृत्तस्य रेतःसेकादर्वाक् निवृत्तौ पुलस्त्यः—" ब्राह्मणीपुत्रस्य क्षत्रियायां मातरि गमने पादहान्या द्वादशवार्षिकम् ; एवमन्यवर्णासु " इति। अयमर्थः—यस्यां कामतो गमने यदुक्तं, तदेव तत्र रेतःसेकादर्वाक् पादोनम्। ततश्च कामतो [2]ब्राह्मणस्य ब्राह्मण्यामष्टादशाब्दिकम् ; मरणवैकल्पिकचतुर्विंशतिवार्षिकस्य पादन्यूनत्वात्। एवं क्षत्रियायां नवाब्दम्। वैश्यायां सार्धचतुर्वार्षिकम्। शूद्रायां सपादद्विवार्षिकमिति। एवमेवाकामतोऽपि प्रवृत्तस्य रेतःसेकादर्वाक् निवृत्तौ ज्ञेयमित्याद्यूह्यम्।

सर्वं चैतत् प्रायश्चित्तजातं सद्वृत्तागमनविषयम्। दुर्वृत्तागमने तु विशेषः। तत्र गुरुपत्न्यां सवर्णायां दुर्वृत्तायामकामतः सकृद्गमने याज्ञवल्क्यः—" चान्द्रायणं वा त्रीन् मासानभ्यस्यन् वेदसंहिताम् " इति। अभ्यासे द्विगुणम्। तत्रैव कामतः सकृद्गमने उशना—" गुरुतल्पाभिगामी संवत्सरं ब्रह्महव्रतं षण्मासान् वा तप्तकृच्छ्रं चरेत् " इति। तत्र सकृद्गमने षण्मासाः, अभ्यासेऽब्दमिति ज्ञेयम्। तादृश्यामेव क्षत्रियायां [3]कामतः सकृद्गमने व्याघ्रः—

" कृच्छ्रं चैवातिकृच्छ्रं च तथा कृच्छ्रातिकृच्छ्रकम् ।
चरेन्मासत्रयं विप्रः क्षत्रियागमने गुरोः ॥ "

[1] मरणान्तं—ग.    [2] ब्राह्मणस्य omitted in ख.    [3] कामतः omitted in घ.

इति। तत्रारोहणो मासं कृच्छ्रः। रेतःसेकादर्वाक् निवृत्तौ मासद्वयमतिकृच्छ्रः। संपूर्णक्रियानिर्वृत्तौ मासत्रयं कृच्छ्रातिकृच्छ्रः। तत्रैवाकामतः सकृद्गमने **कण्वः**—

" चान्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैव च।
सकृद्गत्वा गुरोर्भार्यामज्ञानात् क्षत्रियां द्विजः॥"

इति। तत्रारोहणार्वाङ्निवृत्तिसंपूर्णक्रियानिर्वृत्तिषु तप्तकृच्छ्रातिकृच्छ्रचान्द्रायणानि। तादृश्यामेव वैश्यायां कामतः सकृद्गमने **स एव**—

" तप्तकृच्छ्रं पराकं च तथा सांतपनं गुरोः।
भार्यां वैश्यां सकृद्गत्वा बुद्ध्या मासं चरेद् द्विजः॥"

इति। अत्रापि आरोहणमात्रे तप्तकृच्छ्रः। अर्वाङ्निवृत्तौ पराकः। प्रधाननिर्वृत्तौ मासं सांतपनम्। तत्रैवाकामतः सकृद्गमने **प्रजापतिः**—

" पञ्चरात्रं तु नाश्नीयात् सप्ताष्टौ वा तथैव च।
वैश्यां भार्यां गुरोर्गत्वा सकृदज्ञानतो द्विजः॥"

इति। अत्राप्यारोहणार्वाङ्निवृत्तिप्रधाननिर्वृत्तिषु पञ्चसप्ताष्टरात्रमनशनम्। तादृश्यामेव शूद्रायां कामतः सकृद्गमने **जाबालिः**—

" अतिकृच्छ्रं तप्तकृच्छ्रं पराकं च तथैव च।
गुरोः शूद्रां सकृद्गत्वा बुद्ध्या विप्रः समाचरेत्॥"

इति। अत्राप्यारोहणार्वाङ्निवृत्तिप्रधाननिर्वृत्तिषु तप्तकृच्छ्रातिकृच्छ्रपराकाः क्रमेण ज्ञेयाः। तत्रैवाकामतः सकृद्गमने **दीर्घतमाः**—

" प्राजापत्यं सांतपनं सप्तरात्रोपवासकम्।
गुरोः शूद्रां सकृद्गत्वा चरेद्विप्रः समाहितः॥"

इति। अत्राप्यारोहणार्वाङ्निवृत्तिप्रधाननिर्वृत्तिषु क्रमेण सांतपनप्राजापत्यसप्तरात्रोपवासा ज्ञेयाः। स्त्रीणामप्यत्रैतदेव प्रायश्चित्तम्;

" एष दोषश्च शुद्धिश्च पतितानामुदाहृता।
स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः॥"

इति **कात्यायनस्मरणात्**। [1]एष इति कामतो मरणम्। अकामतो द्वादशाब्दम्।

[1] From here up to योगिमनुस्मरणात् omitted in ख.

"छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ।
एतदेव व्रतं कार्यं योषित्सु पतितास्त्विति ॥"

इति [1]**योगिमनुस्मरणात्**। एतदेवार्धक्लृप्त्या ब्रह्महत्यादिषु त्रिषु; "स्त्रीणामर्धं प्रदातव्यम्" इति **स्मरणात्**। व्यभिचारे तु नार्धक्लृप्तिः; "यत् पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्" इति नियमात्। साधारणस्त्रिया न गुरुतल्पत्वम्;

"जात्युक्तं पारदार्यं च कन्यादूषणमेव च ।
साधारणस्त्रियो नास्ति गुरुतल्पत्वमेव च ॥"

इति **व्याघ्रस्मरणात्**।

अगम्येति सामान्योपादानमनुपातकेष्वप्येतदेव प्रायश्चित्तमिति बोधयितुम्। तत्र वर्णभेदेनोक्तमेव प्रायश्चित्तमुक्तव्यवस्थया व्यवस्थाप्यम्।

"रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च ।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥"

इति **यमः**। **योगीश्वरोऽपि**—

"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि ॥"

इति। **नारदः**—

"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनात् तत्र नान्यो दण्डो विधीयते ॥"

इति। मातात्र असवर्णसपत्नमाता। एतच्च कामतः। अकामतस्तु द्वादशाब्दम्। यथाह **जातूकर्ण्यः**— "आचार्यादिस्तु भार्यासु गुरुतल्पव्रतं चरेत्" इति। **संवर्तोऽपि**—

[1] योगिस्मरणात्—ग.

" पितृव्यदारगमने भ्रातृभार्यागमे तथा ।
गुरुतल्पव्रतं कुर्यान्नान्यथा निष्कृतिर्भवेत् ॥ "

इति । [1]मनुरपि—

" गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥ "

इति । व्याघ्रोऽपि—

" आश्रितस्यापि विदुष आहिताग्नेश्च योगिनः ।
आचार्यस्य च गोप्तुश्च भार्यां प्रव्रजितां तथा ॥
धात्रीं पुत्रीं च पौत्रीं च सखीं मातुस्तथैव च ।
पितुः सखीं तथा गत्वा गुरुतल्पव्रतं चरेत् ॥ "

इति । एतास्वेव कामतो रेतःसेकादर्वाक् चान्द्रायणम् ;

" गुरोर्दुहितरं गत्वा स्वसुतां पितुरेव च ।
तस्या दुहितरं चैव चरेच्चान्द्रायणं व्रतम् ॥ "

इति संवर्तस्मरणात् । अकामतस्तु पराकः ।

" सनाभिनीं मातुलानीं स्नुषां मातुः सनाभिनीम् ।
गच्छन्नेताः स्त्रियो मोहात् पराकेण विशुध्यति ॥ "

इति । अत्रोभयत्रापि गुरुतल्पसमानानामुपलक्षणम् । सर्वासां पराकः । यथाह पराशरः—

" [2]कृत्वा स प्राकृतं कृच्छ्रं पादं कुर्यात् ततः पुनः ।
कुमारीगमने विप्रश्चरंश्चान्द्रायणं व्रतम् ॥ "

इति । [3]एतान्यपि वचनान्युक्तविषय एव संबन्धतारतम्येन व्यवस्थाप्यानि ॥ १ ॥

**परदारगमने च ॥ २ ॥**

उपपातके पारदार्यमाह । गुरुतल्पतत्समव्यतिरिक्तस्वस्वजातिपरदारगमनेऽपि संवत्सरं प्राजापत्यं कार्यम्; स्वजातिप्रक्रमे " ब्राह्मणादीनां संवत्सरं ब्रह्मचर्यम् " इति बोधायनीयात् । गुणदोषहीनब्राह्मणीगमने नारदः—" मातुराप्तां भ्रातृजां च प्राजापत्यत्रयं चरेत् " इति । चतुर्विंशतिमतेऽपि—

" मातुश्च स्वस्रियां गत्वा पितृव्यतनयां तथा ।
तप्तकृच्छ्रं प्रकुर्वीत षड्रात्रं तत्सुतासु च ॥

[1] मनुस्तु—घ. [2] स कृत्वा—घ. [3] ख omits this sentence.

भागिनेयीं द्विजो गत्वा चरेच्चान्द्रायणं व्रतम् ।
मातुलस्य सुतां गत्वा पितुश्च स्वस्रियां तथा ॥
प्राजापत्यं प्रकुर्वीत हारीतवचनं यथा ।
मातुश्च स्वस्रियां चैव भार्यां गत्वा तु कामतः ॥
पितृव्यतनयस्यैव सपादं कृच्छ्रमाचरेत् ।
दौहित्रीं पुत्रतनयां चरेच्चान्द्रायणं व्रतम् ॥
तत्सुतां च स्नुषां गत्वा पराकं तु समाचरेत् ।
संबन्धिनः स्त्रियो गत्वा सपादं कृच्छ्रमाचरेत् ॥
विधवागमने कृच्छ्रमहोरात्रसमन्वितम् ।
सखिभार्याः समारुह्य ज्ञातिस्वजनयोनिषु[1] ॥"

इति । ब्राह्मणस्येदम् । अग्निहोत्रिण्यादिब्राह्मणीगमने द्विवार्षिकम्; "द्वे परदारे" इति **गौतमीयात्** । तादृग्विधश्रोत्रियपत्नीगमने त्र्यब्दम्; "त्रीणि श्रोत्रियभार्यायाम्" इति **गौतमीयात्** । वर्णभेदेन चैषां व्यवस्था; "वैश्यायामवकीर्णः संवत्सरं ब्रह्मचर्यं त्रिषवणं चानुतिष्ठेत् । क्षत्रियायां द्वे वर्षे । त्रीणि ब्राह्मण्याम् । वैश्यावच्च शूद्रायां ब्राह्मणपरिणीतायाम्" इति **शङ्खस्मरणात्** । ब्राह्मणपरिणयः शूद्राया एव विशेषणम्, न वैश्यादीनाम्; ब्राह्मण्या व्यवधानात् । [2]तद्विशेषणत्वे च व्यवच्छेद्याभावेन वैयर्थ्यात् । ततश्चानेनैवोत्कर्षेण कामात् 'वैश्यावत्' इत्यतिदेशोपपत्तिः । एतच्च कामतः । अकामतस्त्वर्धम्[3] । अभ्यासे द्वैगुण्यादि । एतच्च ब्राह्मणस्यैव । क्षत्रियस्य तु क्षत्रियावैश्याशूद्रासु द्विवार्षिकवार्षिकषाण्मासिकानि । वैश्यस्य वैश्याशूद्रयोर्वार्षिकषाण्मासिके । शूद्रस्य शूद्रयां षाण्मासिकम् । यथाह **प्रजापतिः**—

"विप्रो नृपस्य भार्यायां यत् करोति समागमे ।
तदेव क्षत्रियेणापि कार्यमत्रैव संगमे ॥"

इति । ईषद्व्यभिचरितासु तु **व्याघ्रः**—

"ब्राह्मणो ब्राह्मणीं गच्छेदकामां यदि कामतः ।
कृच्छ्रचान्द्रायणे कुर्यादर्धमेव प्रमादतः ॥
अर्धमेव सकामायां नक्तकृच्छ्रं सकृद्व्रतौ ।
अर्धमेव नृपादीनां दारेषु ब्राह्मणश्चरेत् ॥
एतद्व्रतं चरेत् सार्धं श्रोत्रियस्य परिग्रहे[4] ।
अश्रोत्रियश्चेद् द्विगुणमगुप्तामर्धमेव च ॥"

[1] योषितः—घ.
[2] तद्विशेषणे च—ख.
[3] तु omitted in घ.
[4] परिग्रहम्—घ.

इति। अत्र सकृदिति विशेषणात् पूर्वमसकृद्विषये इति गम्यते। अकामतश्चेदम्। कामतोऽपि स एव—

" विप्रेणैव निविष्टाश्च चातुर्वर्ण्यप्रसूतयः।
क्रमेण पादशो हीनं व्रतं तासु गतश्चरेत्॥"

इति। ब्राह्मणोपभुक्तासु चातुर्वर्ण्यस्त्रीषु ब्राह्मणो यदि गच्छेत्, तदा संवत्सरव्रतमेव पादपादहीनं क्रमेण कुर्यात्। अकामतः [1]प्रातिलोम्येन गमने तु प्रचेताः—

" शूद्रस्य ब्राह्मणीं मोहात् गच्छतः शुद्धिमिच्छतः।
पूर्णमेव व्रतं देयं माता यस्माद्धि तस्य सा।
पादहान्यान्यवर्णासु गच्छतः सार्ववर्णिकम्॥"

इति। पूर्णं द्वादशाब्दं ब्राह्मण्यां सर्वेषाम्। अन्यासु पादहानिः। कामतो वधः; "प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम्" इति स्मरणात्। स्वैरिणीगमने तु शङ्खः—"स्वैरिण्यां वृषल्यामवकीर्णः सचैलं स्नात्वा उदकुम्भं दद्यात्। वैश्यायां[2] चतुर्थकालाहारो ब्राह्मणान् भोजयेत्। क्षत्रियायां त्रिरात्रोपोषितः यवाढकं दद्यात्। ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यात्" इति। बन्धकीगमने षट्त्रिंशन्मतम्—

" ब्राह्मणीं बन्धकीं गत्वा किंचिद्दद्याद् द्विजातये।
राजन्यां तु धनुर्दद्याद् वैश्यां गत्वा तु चैलकम्।
शूद्रां गत्वा तु वै विप्र उदकुम्भं द्विजातये॥"

इति। तल्लक्षणं च स्मृत्यन्तरे—"चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी भवेत्" इति। एतास्वेव प्रातिलोम्येन गमने संवर्तः—

" कथंचिद् ब्राह्मणीं गच्छेत् क्षत्रियो वैश्य एव च।
कृच्छ्रं सांतपनं वा स्यात् प्रायश्चित्तं विशुद्धये॥
शूद्रस्तु ब्राह्मणीं गच्छेत् कथंचित् काममोहितः।
गोमूत्रयावकाहारो मासेनैकेन शुध्यति॥"

इति। गर्भोत्पत्तौ तु तत्तदेव द्विगुणम्; "गमने तु व्रतं यत् स्याद् गर्भे तद् द्विगुणं भवेत्" इति औशनसात्। शूद्र्यां तु चतुर्विंशतिमते—"वृषल्यामभिजातस्तु त्रिभिर्वर्षैर्विशुध्यति" इति॥ २॥

## गोव्रतं गोगमने च॥ ३॥

गोगमने प्रायश्चित्तमाह। गोगमने पूर्वोक्तं 'मासमेकं कृतवापनः' इत्यादि गोवधोक्तं[3] व्रतं कुर्यात्। कामतश्चेदम्। अकामतः प्राजापत्यम्; "गोष्ववकीर्णः प्राजापत्यं चरेत्" इति शङ्खस्मरणात्। अभ्यासे

[1] प्रातिलोम्यगमने—घ. [2] वैश्यायामपि—घ. [3] गोवधोक्त—घ.

**चतुर्विंशतिमते**—" नरो गोगमनं कृत्वा चरेच्चान्द्रायणं व्रतम् " इति। अत्यन्ताभ्यासे तु **गौतमः**—" गवि च गुरुतल्पसमम् " इति। चकारात् वैश्यागमनेऽपि गोव्रतम्। तच्चाग्रे वक्ष्यते ॥ ३ ॥

**पुंस्ययोनावाकाशेऽप्सु दिवा गोयाने च सवासाः स्नानमाचरेत् ॥ ४ ॥**

पुरुषादिगमन आह। पुंसो गुदद्वारे, स्त्रीणां चायोनौ मुखमेहनयोः, आकाशेऽन्तरिक्षे करव्यापारादिना, अप्सु जलमध्ये, दिवा दिवसे, गोयाने गोयुक्ते शकटे च मैथुनं कृत्वा सचैलं स्नानं कुर्यात्। चकारात् खरादियाने च। इदं च नैमित्तिकं स्नानं वान्तादिष्विव। न प्रायश्चित्तम्; पुंसि मैथुनस्य जातिभ्रंशकरत्वमुक्त्वा,

" जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया।
चरेत् सांतपनं कृच्छ्रं [1]प्राजापत्यमनिच्छया ॥ "

इति पृथक् प्रायश्चित्तस्मरणात्। पुंग्रहणं षण्ढागमने " षण्ढायामवकीर्णः पलालभारं सीसकमाषकं च दद्यात् " इति **शङ्खोक्त**प्रायश्चित्तान्तरकल्पनाय[2]। अयोनिगमने प्रायश्चित्तमाह **बोधायनः**—" अथ कूश्माण्डैर्जुहुयात् योऽपूत इवात्मानं मन्येत यथा भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चति " इति। अत्रैव **औशनसो** विशेषः—" यस्तु पुनर्ब्राह्मणोऽधर्मात् [3]मुखमैथुनं सेवते स दुष्यति प्राजापत्येन शुध्यति " इति। आकाशे रेतःस्कन्दने **योगीश्वरः**—

" यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत्।
स्तनान्तरे भ्रुवोर्मध्ये तेनानामिकया स्पृ न ॥ "

इति। अकामतश्चेदम्। कामतो **यमः**—

" गृहस्थः कामतः कुर्याद्रेतसः स्कन्दनं भुवि।
सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह ॥ "

इति। अप्सु मैथुने **शङ्खलिखितौ**—" रेतोमूत्रपुरीषाण्युदके कृत्वा त्रिरात्रोपोषित इदमापः प्रवहतेति जपेत् " इति। कामतश्चेदम्। अकामतो **मनुः**—

" मैथुनं तु समासेव्य गोयानेऽप्सु दिवापि वा।
स्नात्वा ऋचो [4]जपित्वाप्याः प्राणायामेन शुध्यति ॥ "

[1] प्रायश्चित्त—…।.
[2] ख्यापनाय—ग.
[3] पत्नीमुख—ख, ग.
[4] जपित्वाप:—घ.

इति । दिवा मैथुने तु शङ्खः—

“ दिवा च मैथुनं गत्वा नग्नः स्नात्वा तथाम्भसि ।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत् ॥ ”

इति । दिवाग्रहणात् संध्याया अपि निषेधः; [1]रवेर्मण्डलोपलब्ध्या दिवसावान्तरभेदत्वात्;

“ चत्वार्येतानि कर्माणि [2]संध्यायां परिवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥ ”

इति निषेधाच्च[3] । तत्प्रायश्चित्तमाह कश्यपः—“ उदयास्तमययोः स्कन्दित्वा अक्षिस्पन्दने नेत्रकर्णक्रोशने चित्यारोहणे पूयसंस्पर्शने च सचैलं स्नात्वा पुनर्मामिति जपेत् महाव्याहृतिभिश्च सप्ताज्याहुतीर्जुहुयात् ” इति । कामतो गोयाने मैथुनकरणे यमः—

“ यदि गोभिः समायुक्तं यानमारुह्य वै द्विजः ।
मैथुनं कुरुते तत्र मनुः स्वायंभुवोऽब्रवीत् ॥
त्रिरात्रं क्षपणं कृत्वा सचैलं स्नानमाचरेत् ।
गोभ्यो यवाढकं दद्याद् घृतं प्राश्य विशुध्यति ॥ ”

इति ॥ ४ ॥

**चण्डालीगमने[4] तत्साम्यमाप्नुयात् ॥ ५ ॥ अज्ञानतश्चान्द्रायणद्वयं कुर्यात् ॥ ६ ॥**

कामतश्चण्डालीगमने आह । अत्र चण्डालीशब्दः स्वसमानधर्माणां श्वपचादीनामप्युपलक्षणार्थः;

“ चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥ ”

इति अङ्गिरःस्मरणात् । एतासां प्रत्येकं गमने तत्साम्यं तत्समानधर्मत्वं भवति । गमनं च भोजनप्रतिग्रहोपलक्षणम् । एतच्च ज्ञानतः । अज्ञानतस्तु पातित्यम्[5];

“ चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥ ”

इति मनुस्मरणात् । पातित्ये द्वादशाब्दम् । साम्ये मरणान्तिकम्;

[1] खण्ड—ग. [2] संध्याकाले विवर्जयेत्—ख. [3] निषेधाच्च omitted in ख.
[4] गमनेन—ठ. [5] पातित्यम् omitted in ख.

"रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च ।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥"

इति **यमस्मरणात्** । इदं चात्यन्तानवच्छिन्नाभ्यासे । एकरात्राभ्यासे तु वक्ष्यति ॥ ५ ॥

अकामतस्तत्रैवाह । अज्ञानतश्चण्डाल्यादिगमने चान्द्रायणद्वयं कुर्यात् । इदं च चतुरभ्यासे । कामतश्चतुरभ्यासे तु कृच्छ्राब्दम् ;

"चण्डालपुल्कसानां तु गत्वा भुक्त्वा च योषितः ।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥"

इति **यमस्मरणात्** । अकामतो द्विरभ्यासे चान्द्रायणम् ; "चण्डालीं पुल्कसीं म्लेच्छीं गत्वा चान्द्रायणं चरेत्" इति **यमस्मरणात्** । अकामतः सकृद्गमने तु **आपस्तम्बः**—

"चण्डालमेदश्वपचकापालव्रतचारिणाम् ।
अकामतः स्त्रियो गत्वा पराकव्रतमाचरेत् ॥"

इति । गर्भोत्पत्तौ **तूशना**—"चण्डाल्यां गर्भमारोप्य गुरुतल्पव्रतं चरेत्" इति । व्रतं द्वादशाब्दम् । एतच्चाकामतः । कामतो मरणान्तिकम् ; "अन्त्यजायां प्रसूतस्य निष्कृतिर्न विधीयते" इत्युक्तेः । निष्कृतिर्व्रतरूपा । अन्त्यजागमने तु **संवर्तः** —

"रजकव्याधशैलूषवेणुचर्मोपजीविनाम् ।
एतास्तु ब्राह्मणो गत्वा चरेच्चान्द्रायणद्वयम् ॥"

इति । अन्त्यजांस्त्वाह **आपस्तम्बः**—

"रजकश्चर्मकारश्च [1]नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः ॥"

इति । कामतश्चेदम् । अकामतः **संवर्तः**—

"रजकव्याधशैलूषवेणुचर्मोपजीविनाम् ।
स्त्रियो विप्रो यदा गच्छेत् कृच्छ्रं चान्द्रायणं चरेत् ॥"

इति । अकामतोऽभ्यासे द्वादशाब्दम् । कामतो मरणान्तिकम् । गर्भोत्पत्तौ तु पूर्वोक्तमेव । कापालिकस्त्रीगमने **तूशना**—

"कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा ।
ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम् ॥"

[1] From here up to अन्त्यजाः स्मृताः missing in घ.

इति । म्लेच्छीगमने तु **आपस्तम्बः**—

"म्लेच्छी नटी चर्मकारी रजकी बुरुडी तथा ।
एतासु गमनं कृत्वा चरेच्चान्द्रायणद्वयम् ॥"

इति । कामतश्चेदम् । अकामतोऽर्धम् ॥ ६ ॥

**पशुवेश्यागमने [1]च प्राजापत्यम् ॥ ७ ॥**

पशुवेश्यागमने आह । पशवः अश्वादयः । वेश्या ; वेशो भृतिः, तद्वृत्तिः ; "वेश्यास्त्या पञ्चमी जातिः पञ्चचूडासमुद्भवा" इति **स्मरणाच्च** । पशुगमने **पराशरः**—

"पशुवेश्याभिगमने महिष्युष्ट्रीकपीस्तथा ।
खरीं च सूकरीं गत्वा प्राजापत्यं समाचरेत् ॥"

इति । कामतश्चेदम् । अकामतो **जाबालः**—"इतरेषां पशूनां तु कृच्छ्रपादो विधीयते" इति । शुनीगमने **चतुर्विंशतिमते**—"शुनीं चैव द्विजो गत्वा अतिकृच्छ्रं समाचरेत्" इति । अजादिगमने तु **शङ्खः**—"तिर्यग्योनिषु गोवर्जं सचैलं स्नातो यवसभारं गोभ्यो दद्यात्" इति । वैदिकस्यात्र कूश्माण्डहोमः ; "अमानुषीषु गोवर्जं स्त्रीकृते कूश्माण्डैर्घृतहोमः" इति **स्मरणात्** । वेश्यागमने **यमः**—

"वेश्यागमनजं पापं व्यपोहन्ति द्विजातयः ।
पीत्वा सकृत् सकृत्तप्तं सप्तरात्रं कुशोदकम् ॥"

इति । अकामतश्चेदम् । कामतः प्राजापत्यम् । अत्यन्ताभ्यासे तु **लौगाक्षिः**—

"अभ्यासेऽहर्गुणा वृद्धिर्मासादर्वाग्विधीयते ।
ततो मासगुणा वृद्धिर्यावत् संवत्सरं पिवेत् ।
ततः संवत्सरगुणा यावत्पापं समाचरेत् ॥"

इति । अनेन वचनेन प्रतिनिमित्तनैमित्तिकन्यायमपोद्य अहर्मासंसंवत्सरावृत्तौ नैमित्तिकी वृद्धिर्विधीयते । तेन चैकस्मिन् दिवसेऽनेकावृत्तावप्येकमेव प्रायश्चित्तम् । एवमेकस्मिन् मासे एकस्मिन् संवत्सरे च द्रष्टव्यम् । कामतश्चेदम् । अकामतश्च**तुर्विंशतिमते**—

"सकृत् कृते तु यत् प्रोक्तं त्रिगुणं तत् त्रिभिर्दिनैः ।
मासात् पञ्चगुणं प्रोक्तं षण्मासाद् दशधा भवेत् ॥
संवत्सरात् पञ्चदश त्र्यब्दाद् विंशद्गुणं भवेत् ।
ततोऽप्येवं प्रकल्प्यं स्याच्छातातपवचो यथा ॥"

[1] च omitted in ठ.

इति । मासादित्यादावाङ्लोपश्छान्दसः । तेन आ मासादित्यादि ज्ञेयम् । अनुक्ताभ्यासे तूपपातकेऽप्ययमेव न्यायः । यावज्जीवाभ्यासे गुरुतल्पव्रतम् ;

" गुरुतल्पव्रतं केचित् केचिच्चान्द्रायणव्रतम् ।
गोघ्नस्येच्छन्ति केचिच्च केचिदेवावकीर्णिनः ॥ "

इति 'यमस्मरणात् । अत्र यद्यपि वेश्यायां सामान्येन प्राजापत्यमुक्तम्, तथाप्यनवरुद्धास्विदं द्रष्टव्यम् । अवरुद्धासु तु परदारवदेव दोषः । यथाह **नारदः**—

" स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी तथा ।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥
आस्वेव तु भुजिष्यासु दोषः स्यात् परदारवत् ।
गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहाः ॥ "

इति । निष्कासिनी अनवरुद्धा । गम्यत्वं च दण्डाभावमभिप्रेत्य ; न तु प्रायश्चित्ताभावम् ; तस्यां पातित्यस्योक्तत्वात् । भुजिष्याः नियतपुरुषगृहीताः । इदमपि गर्भानुत्पादे । तत्र तु **कण्वः**—

" प्रसूतो यस्तु वेश्यायां भैक्ष्यभुङ् नियतेन्द्रियः ।
शतं सहस्रमभ्यस्य सावित्रीमेति शुद्धताम् ॥ "

इति । रजस्वलागमने **संवर्तः**—

" रजस्वलां तु यो गच्छेद् गर्भिणीं पतितां तथा ।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रो विशोधनः ॥ "

इति । तत्रैव दिनविशेषः **चतुर्विंशतिमते**—

" रजस्वलां द्विजो गत्वा पराकं तु समाचरेत् ।
सांतपनं द्वितीयेऽह्नि प्राजापत्यं परेऽहनि ॥ "

इति । गर्भिण्यां विशेषमाह **अत्रिः**—

" षण्मासान् कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि ।
आ दन्तजननादूर्ध्वमेवं धर्मो न हीयते ॥ "

इति । गर्भिणीं षण्मासानेव गच्छेत् । नातः परम् । ऊर्ध्वं प्रसूतेः । आ दन्तजननात् ; बालस्य दन्तजननमारभ्य ; न प्रागित्यर्थः ॥ ७ ॥

**सकृद् दुष्टा [1]च स्त्री यत् पुरुषस्य परदारे तद्व्रतं कुर्यात् ॥ ८ ॥**

[1] च omitted in ठ.

स्त्रीणां व्यभिचारे आह । सकृदेकवारं व्यभिचरिता स्त्री पुरुषपारदार्योक्तमेव व्रतं कुर्यात् । सवर्णगमने चेदम्;

" यत् पुंसः परदारेषु समानेषु व्रतं स्मृतम् ।
व्यभिचाराच्च भर्तुः स्त्री तदशेषं समाचरेत् ॥ "

इति बार्हस्पत्यात् । समानेषु सवर्णेषु । सकृदिति [1]वचनादभ्यासे अहर्गुणा वृद्धिरिति कल्प्यम् । बलाद्गमने तु ऋष्यशृङ्गः—

" बलेन कामिता नारी सवर्णेन कथंचन ।
प्रायश्चित्तं त्रिरात्रं वै तस्याः शुद्ध्यर्थमादिशेत् ॥ "

इति । बन्दीकृतायाः द्विरभ्यासे चण्डालादिसंपर्के पराशरः—

" बन्दीग्राहेण भुक्ता या हत्वा बद्ध्वा बलाच्च यत् ।
कृत्वा सांतपनं कृच्छ्रं शुध्येत् पाराशरोऽब्रवीत् ॥ "

इति । सकृत् संपर्केऽपि स एव—

" सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः ।
प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन च ॥ "

इति । सगर्भायां विशेषमाह स एव—

" अन्तर्वत्नी तु या नारी समेताक्रम्य कामिता ।
प्रायश्चित्तं न सा कुर्याद्यावद्गर्भो न निःसृतः ॥
जाते गर्भे व्रतं [2]कुर्यात् पश्चान्मासं तु यावकम् ।
न गर्भदोषस्तत्रास्ति संस्कार्यः स यथाविधि ॥ "

इति । प्रातिलोम्यगमने तु प्रचेताः—

" विप्रा शूद्रेण संपृक्ता न चेत् तस्मात् प्रसूयते ।
प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रं चान्द्रायणत्रयम् ॥
चान्द्रायणे द्वे कृच्छ्रश्च विप्राया वैश्यसंगमे ।
कृच्छ्रचान्द्रायणे स्यातां तस्याः क्षत्रियसंगमे ॥
क्षत्रिया शूद्रसंपर्के कृच्छ्रं चान्द्रायणद्वयम् ।
चान्द्रायणं सकृच्छ्रं तु चरेद्वैश्येन संगता ॥

[1] एकवारवचनात्—च, छ.

[2] पश्चात्कुर्यान्मासं—ग.

शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम् ।
आनुलोम्येन कुर्वीत कृच्छ्रं पादावरोपितम् ॥"

इति । अकामतश्चेदम् । कामतो महापातकोक्तं **वासिष्ठं** ब्राह्मण्यादीनां शूद्रादिगमने नग्नीकरणं वापनं कृष्णादिखरारोहणं सर्पिषाभ्यञ्जनं महापथप्रव्राजनं चेत्यादि । कामतः आनुलोम्येन व्यवाये तु पादपादन्यूनं कृच्छ्रम् । यथा क्षत्रियाया विप्रगमने त्रिपादकृच्छ्रम् । वैश्याया विप्रक्षत्रियगमने अर्धत्रिपादकृच्छ्रौ । शूद्राया विप्रक्षत्रियविड्गमने पादार्धत्रिपादकृच्छ्रा इति । अकामतः **षट्त्रिंशन्मतोक्तम्**—"क्षत्रिययोषितां ब्राह्मणसेवायां कृच्छ्रार्धम् । वैश्ययोषितां ब्राह्मणराजन्यसेवायां कृच्छ्रपादकृच्छ्रार्धम् । शूद्रयोषितां ब्राह्मणराजन्यवैश्यसेवायां ह्यहोरात्रं त्रिरात्रं कृच्छ्रार्धम्" इति । एतेन स्त्रीणामपि सवर्णानुलोमव्यवाये पुरुषोक्तमेवेति निरस्तम् । प्रातिलोम्येन बलादुपभोगे तु **संवर्तः**—

"बलात् प्रमथ्य भुक्ता चेद् दह्यमानेन चेतसा ।
प्राजापत्येन शुद्धिः स्यात् तत् तस्याः पावनं परम् ॥"

इति । ब्राह्मणगर्भोत्पत्तौ **चतुर्विंशतिमते**—

"विप्रगर्भे पराकः स्यात् क्षत्रियस्य तथैन्दवम् ।
ऐन्दवं च पराकश्च वैश्यस्याकामकारतः ॥
शूद्रगर्भे भवेत् त्यागश्चण्डालो जायते यतः ।
गर्भस्रावे धातुदोषैश्चरेच्चान्द्रायणव्रतम्[1] ॥"

इति । एवं क्षत्रियावैश्ययोः विप्रादिचतुष्टयगर्भक्रमेण पराकादयस्त्यागान्ताश्चत्वारः । एवं शूद्रायास्त्रैवर्णिकगर्भे पराकादयस्त्रयः । शूद्रगर्भे तु पराक एवेति ज्ञेयम् । अकामवचनात् कामतो द्विगुणं द्विजातिस्त्रीणाम् । शूद्रगर्भप्रसवे तु प्रायश्चित्ताभावः;

"ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥"

इति **वसिष्ठस्मरणात्** । चण्डालाद्यन्त्यावसायिगमने तु **स्मृत्यन्तरे**—

"चण्डालं पुल्कसं म्लेच्छं श्वपाकं पतितं तथा ।
ब्राह्मण्यकामतो गत्वा चान्द्रायणचतुष्टयम् ॥"

इति । कामतस्तु **ऋष्यशृङ्गः**—"संपृक्ता स्यादथान्त्यैर्या सा कृच्छ्राब्दं समाचरेत्" इति । रजकाद्यन्त्यजगमनेऽपि **स्मृत्यन्तरे**—

[1] चान्द्रायणत्रयम्—ग.

" रजकव्याधशैलूषवेणुचर्मोपजीविनाम् ।
ब्राह्मण्येतान्यदा गच्छेदकामादैन्दवद्वयम् ॥ "

इति । कामतो द्विगुणम् । कामतोऽत्यन्ताभ्यासे तु मरणम् ;

" अन्त्यजेन तु संपर्के गमने मैथुने कृते ।
प्रविशेत् संप्रदीप्तेऽग्नौ मृत्युना सा विशुध्यति ॥ "

इति **उशनः**स्मरणात् । अकामतो द्वादशाब्दम् । गर्भेऽप्येतदेव । कामतो गर्भे मरणमेव । सगर्भाया व्यभिचारे तु **ऋष्यशृङ्गः**—

" अन्तर्वत्नी तु युवतिः संपृक्ता यान्त्ययोनिना ।
प्रायश्चित्तं न सा कुर्याद्यावद्गर्भो न निःसृतः ॥
न प्रचारं गृहे कुर्यान्न चाङ्गेषु प्रसाधनम् ।
न शयीत समं भर्त्रा न वा भुञ्जीत बान्धवैः ॥
प्रायश्चित्तं गते गर्भे विधिं कृच्छ्राब्दिकं चरेत् ।
हिरण्यमथवा धेनुं दद्याद्विप्राय दक्षिणाम् ॥ "

इति ॥ ८ ॥

**यत् करोत्येकरात्रेण वृषलीसेवनाद् द्विजः ।**
**तद्भैक्ष्यभुग्जपन्[1] नित्यं त्रिभिर्वर्षैर्व्यपोहति[2] ॥ ९ ॥**

## इति [3]श्रीविष्णुस्मृतौ त्रिपञ्चाशत्तमोऽध्यायः

एकरात्राभ्यासे चण्डालीगमने आह । वृषली चण्डाली ;

" चण्डाली बन्धकी वेश्या रजस्था या च कन्यका ।
ऊढा या च सगोत्रा स्याद् वृषल्यः पञ्च कीर्तिताः ॥ "

इति **स्मरणात्** । नन्वेवं नानार्थे वृषलीशब्दे कथं चण्डाल्येवात्रोच्यते ? सत्यम् ; अन्यासां गमनस्याल्पप्रायश्चित्तत्वेनैतत्प्रायश्चित्तविषयत्वासंभवात्[4] । तच्च तत्र तत्रैवावधेयम् । तद्गमनात् यदेकरात्रेणापुण्यमर्जयति तद्भैक्षं

[1] जपेत्—घ. [2] विशुध्यति—घ.
[3] वैष्णवे धर्मशास्त्रे परदारप्रकरणं त्रिपञ्चाशम्—ज, ठ.
[4] अल्पप्रायश्चित्त for एतत्प्रायश्चित्त—ख.

भुञ्जानो गायत्रीं जपन् त्रिभिर्वर्षैः पापं नुदति । इदं चैकरात्रं गमनाभ्यासे ; 'एकरात्रेण' इत्यत्यन्तसंयोगापवर्गवाचितृतीयादर्शनात् । अत्यन्तसंयोगश्चाष्टवाराभ्यासेन ; अष्टयामव्याप्तेः ॥ ९ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-[2]
श्रीनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ[3] विष्णुस्मृतिविवृतौ
श्रीमत्यां वैजयन्त्यां त्रिपञ्चाशत्तमोऽध्यायः

1 From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.

2 श्री omitted in ग.

3 श्रीनन्दपण्डितकृतौ—ख.

## चतुष्पञ्चाशत्तमोऽध्यायः

**यः पापात्मा[1] येन सह संयुज्यते स तस्यैव प्रायश्चित्तं कुर्यात् ॥ १ ॥**

क्रमप्राप्तं संसर्गप्रायश्चित्तं चतुष्पञ्चाशत्तमेनाह । उद्दिष्टेषु अतिपातकादिप्रकीर्णकान्तेषु पातकेषु आत्मा देहो यस्य सः ; तथाभूतः यो येनाशुद्धेन संवत्सरं संसृज्यते, स संसृष्टः तस्यैव पापात्मनः प्रायश्चित्तं कुर्यात् ; तत्पापभागित्वात् । अत एव **मनुः**—"एनस्विभिरनिर्णिक्तैर्नार्थं कंचित् समाचरेत्" इति । सामान्येनैवैनस्विमात्रसंसर्गो निषिध्यते ;

"यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात् तत्संसर्गविशुद्धये ॥"

इत्युक्तत्वात् । 'पापात्मना' इति तृतीयान्तो वा पाठः । प्रायश्चित्तपदेन व्रतं मरणं चोच्यते । तत्र कामतोऽकामतश्चातिपातकिसंसर्गे मरणमेव ; 'स तस्यैव प्रायश्चित्तं कुर्यात्' इत्यभिधानात् ; कामतोऽकामतश्चातिपातकिनां मरणस्यैवाभिधानाच्च । महापातकिनामकामतः संसर्गे द्वादशाब्दं व्रतम् ; "स तस्यैव व्रतं कुर्यात्" इति **मानवात्** । तस्य महापातकिनो व्रतं द्वादशाब्दम्,

"अधःशायी जटाधारी पर्णमूलफलाशनः ।
एककालं तु भुञ्जानो वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे ॥"

इति **शङ्खोक्तम्** । कामतः संसर्गे तु मरणमेव ; "तीर्थे पुण्यतमे यथावद्देहन्यासात् ब्राह्मणो महापातकान्मुच्यते" इति **देवलेन** सामान्याभिधानात् ;

"ब्रह्महत्यां सुरापानं स्तेयं गुर्वङ्गनागमम् ।
कृत्वा तैश्चापि संसर्गं ब्राह्मणः कामकारतः ॥

[1] पापात्मना—ठ.

कुर्यादनशनं विप्रः पुण्यतीर्थे समाहितः ।
ज्वलन्तं वा विशेदग्निं ध्यात्वा देवं कपर्दिनम् ॥"

इति **कूर्मपुराणे** विशेषाभिधानाच्च । एतेन द्वादशाब्दस्य कामतो महापातकिनः संसर्गविषयत्वं परास्तम्; कामतः संसर्गे **छागलेयेन**—

"ज्ञात्वा करोति संसर्गं निष्कृतिर्न विधीयते ।
प्रायश्चित्तमकामानां कामावाप्तौ न विद्यते ॥"

इति व्रतरूपनिष्कृत्यभावाभिधानात् । एतच्च साक्षात् पतितसंसर्गिणः । संसर्गिसंसर्गिणस्तु पादोनम् । यथाह **व्यासः**[1]—

"यो येन संवसेद्वर्षं सोऽपि तत्समतामियात् ।
पादहीनं चरेत् सोऽपि तस्य तस्य व्रतं द्विजः ॥"

इति । एवं चतुर्थस्य षडब्दं, पञ्चमस्य [2]त्र्यब्दमिति ज्ञेयम् । न षष्ठादेः; पतितस्य पञ्चमपर्यन्तमेव शुद्धिविधानात् । यथाहतुः **गौतमदेवलौ**—"पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचैलस्नातः शुध्येत्",

"उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति ॥"

इति । तृतीयोऽत्र पतितापेक्षया चतुर्थः । तत्स्पर्शी पञ्चमः । तस्याचमनात् । ऊर्ध्वं तु तस्याप्यभाव इति । एतेन,

"ये तदन्नाशिनो विप्राः कृच्छ्रं तेषां विधीयते ।
तद्भोजिनोऽर्धकृच्छ्रेण तदन्नादाश्च पादतः ॥"

इति चण्डालसंकरप्रकरणे व्यासवाक्यस्थलिङ्गदर्शनात् संसर्गित्रितयपर्यन्तमेव प्रायश्चित्तमिति **प्राच्यप्रलपित**मपास्तम्; [3]आपञ्चमं शुद्धिदर्शनात् । अकामतश्चेदम् । कामतो मरणवैकल्पिकं चतुर्विंशतिवार्षिकं पादोनेत्यादिकल्पनया योज्यम् । अकामतो वर्षन्यूनसंसर्गे तु **पराशरः**—

"संसर्गमाचरन् विप्रः पतितादिष्वकामतः ।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥
मासार्धं मासमेकं वा मासत्रयमथापि वा ।
अब्दार्धमब्दमेकं वा भवेदूर्ध्वं तु तत्समः ॥

[1] मनुः—ख. [2] अब्द—ख, ग. [3] आपञ्चमशुद्धि—घ.

त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् ।
चरेत् सांतपनं कृच्छ्रं तृतीये पक्ष एव तु ॥
चतुर्थे दशरात्रं स्यात् पराकः पञ्चमे ततः ।
षष्ठे चान्द्रायणं कुर्यात् सप्तमे त्वैन्दवद्वयम् ।
अष्टमे च तथा पक्षे षण्मासान् कृच्छ्रमाचरेत् ॥"

इति । कामतः संसर्गे स्मृत्यन्तरम्[1]—

"पञ्चाहे तु चरेत् कृच्छ्रं दशाहे तप्तकृच्छ्रकम् ।
पराकस्त्वर्धमासे स्यान्मासे चान्द्रायणं चरेत् ॥
मासत्रये तु कुर्वीत कृच्छ्रं चान्द्रायणोत्तरम् ।
षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्धमाचरेत् ।
संसर्गे त्वाब्दिके कुर्यादब्दं चान्द्रायणं नरः ॥"

इति । आ ईषन्न्यूनोऽब्द आब्दः । तत्र भवः आब्दिकः । किंचिन्न्यूनाब्दिक इत्यर्थो वाच्यः; अन्यथा वर्षेण पातित्ये न्यूनप्रायश्चित्तानुपपत्तेः । एवमनुपातकिसंसर्गिणामप्येषैव दिक्—अकामतो द्वादशाब्दं कामतो मरणमिति । तथोपपातकादिसंसर्गेऽपि कामाकामाभ्यां तत्तद्व्रतमेव ज्ञेयम् । इदं च तत्तद्व्रतविधानं समानपातकविषय एव; यथा कामतो महापातकिनः कामतः संसर्गे मरणम्; कामकृतत्वेन [2]पातकिसमानपातकोत्पत्तेः । कामतो महापातकिनोऽकामतः संसर्गे तु न तद्व्रतम्; अकामकृतत्वेन तावत्पातकाभावात् । किं त्वकामविहितं द्वादशाब्दमेव । तथा अकामतो महापातकिनोऽकामतश्च संसर्गे न द्वादशाब्दम्; अकामकृतत्वेन तावत्पातकाभावात् । किं त्वकामविहितं षडब्दमेव । एवमन्यपातकेष्वप्यूह्यम् । स्त्रीणामकामतः पतितसंसर्गे पतितप्रायश्चित्तार्धम् । एवं बालवृद्धातुराणामपि कामतोऽर्धम्; अकामतः पादः । अनुपतितानां कामतः पादोनम्; अकामतोऽर्धपाद इत्याद्यूह्यम् । पतितयौनसंसर्गप्रतिषेधस्य प्रतिप्रसवमाह याज्ञवल्क्यः—"कन्यां समुद्वहेदेषां सोपवासामकिंचनाम्" इति । एषां पतितानां कन्यां पतितावस्थोत्पन्नां सोपवासां कृततत्संसर्गोचितप्रायश्चित्ताम् अकिंचनाम् अगृहीतपितृवस्त्रालंकारादिधनामुद्वहेत् । उद्वहेदिति वरव्यापारदर्शनात् दातृव्यापारो निवर्त्यते । तदाह हारीतः—"पतितस्य कुमारीं विवस्त्रामहोरात्रोषितां प्रातः शुक्लेनाहतेन वाससाच्छादितां 'नाहमेतेषां, न ममैते' इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेत्" इति । एतेषामिति बहुवचनात् अपतितानामपि पतितभ्रात्रादीनां कन्यादानाधिकाराभावो गम्यते । कन्योपादानात् पुंनपुंसकापत्ययोरव्यवहार्यत्वं गमयति । यथाह वसिष्ठः—"पतितोत्पन्नः पतितो भवति, अन्यत्र स्त्रियाः; सा हि परगामिनी; तामरिक्थामुपेयात्" इति । विशेषान्तरमुपरिष्टात् वक्ष्यामः ॥ १ ॥

[1] स्मृत्यन्तरे—ग.
[2] पातकेन—ख.

**मृतपञ्चनखात् कूपादत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेत् ॥ २ ॥ द्व्यहं राजन्यः ॥ ३ ॥ एकाहं वैश्यः ॥ ४ ॥ शूद्रो नक्तम् ॥ ५ ॥ सर्वे चान्ते व्रतस्य पञ्चगव्यं पिबेयुः ॥ ६ ॥**

निषिद्धजलपाने प्रायश्चित्तमाह । मृताः पञ्चनखाः [1]नरकुक्कुरादयः यस्मिन् तथा । तस्मादत्यन्तोपहताच्च रेतोमूत्रपुरीषादिमलदूषितात् कूपात् जलं पीत्वा विप्रस्त्र्यहमुपवसेत् ॥ २ ॥ क्षत्रियस्तत्र द्व्यहमुपवसेत् ॥ ३ ॥ वैश्यस्तत्रैकाहमुपवसेत् ॥ ४ ॥ शूद्रस्तत्र नक्तं कुर्यात् ॥ ५ ॥ व्रतोत्तराङ्गमाह । सर्वे त्रैवर्णिकाः उक्तव्रतान्ते पञ्चगव्यं पिबेयुः । न शूद्रः; वक्ष्यमाणतन्निषेधात् । मृतपदोपादानादनुच्छूनादिशवविषयमेतत् । उच्छूने तु तस्मिन् हारीतः—

" क्लिन्ने भिन्ने शवे तोयं तत्रस्थं यदि तत् पिबेत् ।
शुद्ध्यै चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा ॥ "

इति । कामाकामाभ्यामुभयव्यवस्था ।

" यदि कश्चित् ततः स्नायात् प्रमादेन द्विजोत्तमः ।
जपंस्त्रिषवणस्नायी अहोरात्रेण शुध्यति ॥ "

इति । मानुषशवविषयमेतत् । अमानुषे तु देवलः—

" क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते ।
पयः पिबेत् त्रिरात्रं तु मानुषे द्विगुणं स्मृतम् ॥ "

इति । अत्यन्तोपघातश्चण्डालादिकूपस्याप्युपलक्षणम् । यथा आपस्तम्बः—

" चण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते ॥
चरेत् सांतपनं विप्रः प्राजापत्यं तु भूमिपः ।
तदर्धं तु चरेद् वैश्यः शूद्रे पादं विनिर्दिशेत् ॥ "

इति । अकामतस्तु,

" यस्तु चण्डालभाण्डस्थमज्ञानादुदकं पिबेत् ।
स तु त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुध्यति ॥ "

इति देवलोक्तम् । कूपः वाप्युपलक्षणम् ;

" जलाशयेष्वथाल्पेषु स्थावरेषु महीतले ।
कूपवत् कथिता शुद्धिर्महत्सु तु न दूषणम् ॥ "

[1] नरमार्जारादयः—ख.

इति विष्णुस्मरणात्। न दूषणम्; तथेति शेषः;

" म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा।
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम्॥
तत् तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा।
अकामान्नक्तभोजी स्यादहोरात्रं तु कामतः॥"

इति आपस्तम्बस्मरणात्॥ ६॥

**[1]पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत्।**
**उभौ तौ नरकं यातो महारौरवसंज्ञितम्॥ ७॥**

सर्वशब्दसंकोचे निमित्तमाह। यथा ब्राह्मणस्य सुरापाने रौरवनरकपातः, तथा शूद्रस्य पञ्चगव्यपान इति तात्पर्यार्थः। शूद्रः स्त्रिया अप्युपलक्षणम्; "स्त्रीणां होमो न दातव्यः पञ्चगव्यं तथैव च" इति निषेधात्। पञ्चगव्यं जपहोमयोरप्युपलक्षणम्;

" [2]तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम्।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्॥"

इति अत्रिस्मरणात्॥ ७॥

**पर्वानारोग्यवर्जमृतावगच्छन् पत्नीं त्रिरात्रमुपवसेत्॥ ८॥**

स्त्रीषु ऋतावगमने आह। पर्वाणि

" चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥"

इत्युक्तानि। अनारोग्यम् अकल्यता। तदुभयव्यतिरेकेण ऋतुकाले पत्नीमगच्छन् त्रिरात्रमुपवसेत्। तथाच **बृहस्पतिः**—" ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत्" इति। अकामतश्चेदम्। कामतो द्विगुणम्। अगच्छन्नित्युद्देश्यगतलिङ्गाविवक्षया स्त्रीणामपि प्रायश्चित्तं सिध्यति। अत एव **पराशरः**—

" ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति।
सा मृता नरकं याति विधवा च पुनः पुनः॥"

[1] This verse omitted in ठ.

[2] This verse omitted in ग.

इति स्त्रीणामपि प्रत्यवायमाह। तच्चार्धम्; "अर्धं स्त्रीणां प्रदातव्यम्" इति वचनात्। पर्वादिपर्युदासश्च दोषश्रवणात्। तथाच **विष्णुपुराणम्**—

"तैलस्त्रीमांससंभोगी पर्वस्वेतेषु यो नरः।
विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते॥"

इति। तत्र प्रायश्चित्तं **स्मृत्यन्तरे**—

"अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम्।
कृत्वा सचैलः स्नात्वा च वारुणीभिश्च मार्जयेत्॥"

इति। अकामतश्चेदम्। कामतस्तु "शेषेषूपवसेदहः" इत्युपवासः। अकल्यपर्युदासस्तु "ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति[1]" इति स्वस्थस्यैव विधानात्॥ ८॥

## कूटसाक्षी ब्रह्महत्याव्रतं चरेत्॥ ९॥

कौटसाक्ष्ये आह। यो मिथ्यासाक्ष्यं ददाति, स ब्रह्महत्याव्रतं द्वादशाब्दं कुर्यात्। कूटसाक्षित्वं महापातकसमानानामनुपातकसंज्ञानां सर्वेषामुपलक्षणम्; 'अश्वमेधेन शुध्यन्ति' इत्यादिसमानप्रायश्चित्तदर्शनात्; द्वादशाब्दप्रक्रमे,

"कौटसाक्ष्यं तथा कृत्वा निक्षेपमपहृत्य च।
एतदेव व्रतं कुर्याद्धत्वा च शरणागतम्॥"

इति **शङ्खस्मरणात्**। कौटसाक्ष्यं चात्र ब्राह्मणादिवधसंपादकं मिथ्यावचनम्; तद्वधनिवारणाय मिथ्यावचनस्याभ्यनुज्ञानात्। तथाच **मनुः**—

"शूद्रविट्क्षत्रविप्राणां यत्रोक्तौ तु भवेद्वधः।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते॥"

इति॥ ९॥

## अनुदकमूत्रपुरीषकरणे[2] [3]सचैलं स्नानं [4]महाव्याहृतिहोमश्च[5]॥ १०॥

प्रकीर्णकेष्वाह। यः शौचार्थं जलमनपेक्ष्यैव मूत्रपुरीषे करोति, स सचैलं स्नातः महाव्याहृतिभिः सप्तभिराज्यं जुहुयात्। चकारात् गवालम्भः;

[1] नोपसर्पति—ग. [2] पुरीष omitted in ज. [3] सचैलस्नानं—ठ.
[4] महाव्याहृतिभिः—च. [5] च omitted in ख, ग.

" विनाद्भिरप्सु वाप्यार्तः शारीरं संनिषेव्य च ।
सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति ॥ "

इति **मानवात्** । शारीरं मूत्रपुरीषादि । आलभ्य स्पृष्ट्वा । अकामतश्चेदम् । कामतो **यमः**—

" आपद्गतो विना तोयं शारीरं यो निषेव्यते ।
एकाहं क्षपणं कृत्वा सचैलं स्नानमाचरेत् ॥ "

इति । अनुदकत्वम् अभ्यक्तस्यास्नातत्वोपलक्षणम् । तत्र **आपस्तम्बः**—

" तैलाभ्यक्तस्तथास्नातः श्मश्रुकर्मणि मैथुने ।
मूत्रोच्चारं यदा कुर्यादहोरात्रेण शुध्यति ॥ "

इति । अभ्यङ्गलक्षणम् **आयुर्वेदे**—

" मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसंगतम् ।
स्रोतांसि तर्पयेद्बाह्य अभ्यङ्गः स उदाहृतः ॥ "

इति । तथा अनुदकत्वमयज्ञोपवीतित्वस्याप्युपलक्षणम् । तथाच **स्मृत्यन्तरे**—

" विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद् द्विजः ।
प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा ॥ "

इति । ऊर्ध्वाधरोच्छिष्टभेदात् भक्षणपानादावुपवासः, मूत्रपुरीषादौ गायत्रीजप इति भेदः । कामतश्चेदम् । अकामतः **तत्रैव**—

" पिबतो मेहतश्चैव भुञ्जतोऽनुपवीतिनः ।
प्राणायामत्रिकं षट्कं नक्तं च त्रितयं क्रमात् ॥ "

इति । आपोऽशनं विना भोजने **स्मृत्यन्तरे**—

" आपोऽशनमकृत्वा तु यो भुङ्क्तेऽनापदि द्विजः ।
भुञ्जानस्तु तथा ब्रूयाद्गायत्र्यष्टशतं जपेत् ॥ "

इति । उत्तरापोऽशनं विनोत्थानेऽपि **तत्रैव**—

" यद्युच्छिष्टस्त्वनाचान्तो भुक्तवानासनं ततः ।
सद्यः स्नानं प्रकुर्वीत सोऽन्यथाप्रयतो भवेत् ॥ "

इति ॥ १० ॥

**सूर्याभ्युदितनिर्मुक्तः सचैलस्नातः सावित्र्यष्टशतमावर्तयेत् ॥ ११ ॥**

किंच यस्मिन् सुप्ते सूर्योऽभ्युदेति स सूर्याभ्युदितः; यस्मिंश्च सुप्तेऽस्तमेति स सूर्याभिनिर्मुक्तः;

" सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथाक्रमम् ॥ "

इति **त्रिकाण्डीस्मरणात्** । तावुभौ सचैलं स्नात्वा अष्टाधिकशतसंख्यया गायत्रीं जपेताम् । [1]प्रत्यादित्यमेहनादौ **यमः**—

" प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वा सूर्यं निरीक्षेत ब्राह्मणं गामथापि वा ॥ "

इति । सूर्यदर्शनं चात्रोदयादिव्यतिरेकेण ।

" नेक्षेतोद्यन्तमादित्यं नास्तं [2]यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥ "

इत्यत्र तु " स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम् " इति ज्ञेयम् । इदमेव च प्रायश्चित्तम्

" सूर्येन्दुतारका दृष्टा यैरुच्छिष्टैस्तु कामतः ।
तेषां याम्यैर्नरैरक्षिण्यस्तो वह्निः समिध्यते ॥ "

इति **मार्कण्डेयोक्तनिषेधातिक्रमेऽपि** ज्ञेयम्; " नाशुची राहुतारकाः " इति स्नातकव्रतत्वात् ॥ ११ ॥

**[3]श्वसृगालविड्वराहखरवानरवायसपुंश्चलीभिर्दष्टः स्रवन्तीमासाद्य षोडश[4] प्राणायामान् कुर्यात् ॥ १२ ॥**

श्वादिदंशेष्वाह । श्वादयः प्रसिद्धाः । तैः दष्टः पुमान् समुद्रगां नदीं गत्वा तत्र स्नात्वा जले षोडश प्राणायामान् कुर्यात् । घृतं च पिबेत् । अत्र चाङ्गभेदेन प्रायश्चित्तभेदो व्यवस्थाप्यः । स यथा पाददंशे **मनुः**—

" श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
[5]नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥ "

इति । तदूर्ध्वमाजानु दंशे **सुमन्तुः**—" श्वसृगालमहिषाजाविखरकरभनकुलमार्जारमूषिकाप्लवकाकपुरुषदष्टानामापोहिष्ठादिभिः स्नानं प्राणायामत्रयं च " इति । जानूर्ध्वमानाभि दंशे **अङ्गिराः**—

" ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
गृहस्थश्चेद् द्विरात्रं तु एकाहं योऽग्निहोत्रवान् ॥ "

[1] संमुखा—घ. [2] यान्तं—घ. [3] श्वसृगालबिडाल—ज, ठ.
[4] षोडश omitted in च. [5] खरा—ग.

इति। मूलोक्तं चाग्निहोत्रिविषयमेवावतिष्ठते ; षोडशप्राणायामानामेकाहपयोभक्षणस्य च कृच्छ्रद्वादशांशत्वात् ; प्राणायामशतद्वयस्य कृच्छ्रप्रत्याम्नायत्वात्। नाभेरूर्ध्वदंशे तु स एव—

" नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत्।
स्यादेतत् त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणम्॥ "

इति। यत्तु वासिष्ठम्,

" ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति॥ "

इति, तत् नाभेरधो दंश एव ज्ञेयम् ; त्रिरात्रोपवासप्राणायामशतयोरर्धकृच्छ्रप्रत्याम्नायत्वात्। शूद्रस्याप्याह अङ्गिराः—

" शूद्राणां चोपवासेन शुद्धिर्दानेन वा पुनः।
गां च दत्त्वा वृषं चैकं ब्राह्मणाय विशुध्यति॥ "

इति। स्त्रीणां दंशे त्वाह पराशरः—

" ब्राह्मणी तु शुना दष्टा जम्बूकेन वृकेण वा।
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत्॥ "

इति। व्रतस्थायां विशेषः तत्रैव—

" त्रिरात्रमेवोपवसेच्छुना दष्टा तु सव्रता।
सघृतं यावकं भुक्त्वा व्रतशेषं समापयेत्॥ "

इति। रजस्वलायां पौलस्त्यो विशेषः—

" रजस्वला यदा दष्टा शुना जम्बुकरासभैः।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति॥
ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा।
चतुर्गुणं स्मृतं मूर्ध्नि [1]दष्टेऽन्यत्राप्लुतिर्भवेत्॥ "

इति। अन्यत्र ; अरजस्वलायाम्। श्वाघ्राणे तु शातातपः—

" शुनाघ्रातावलीढस्य [2]नखैर्विलिखितस्य च।
अद्भिः प्रक्षालनं शौचमग्निना चोपचूलनम्॥ "

इति। उपचूलनं तापनम्। तत्रैव व्रणे क्रिम्युत्पादे मनुः—

" ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे।
क्रिमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत्॥

[1] दष्टेऽन्यत्रा—घ.

[2] नखैर्लिखितस्य—ग.

गवां मूत्रपुरीषेण त्रिसंध्यं स्नानमाचरेत् ।
त्रिरात्रं पञ्चगव्याशी त्वधो नाभ्या विशुध्यति ॥
नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते क्रिमिः ।
[1]षड्रात्रं तु तदा प्रोक्तं प्राजापत्यं विशोधनम् ॥"

इति । कण्ठादूर्ध्वं प्राजापत्यं ज्ञेयम् ॥ १२ ॥

**वेदाग्न्युत्सादी त्रिषवणस्नाय्यधःशायी संवत्सरं सकृद्भैक्ष्येण वर्तेत ॥ १३ ॥**

वेदाग्नित्यागे आह । वेदोत्सादी अधीतवेदविस्मर्ता । अग्न्युत्सादी आहितानामग्नीनां श्रौतस्मार्तानां त्यक्ता । स प्रत्येकं त्रिषवणस्नायी अधःशायी खट्वादिपरिहारेण शयानः भैक्ष्येण सकृद्भुक्तेन संवत्सरं वर्तेत । तत्र वेदोत्सादो द्विविधः—अनुपातकम् उपपातकं चेति । तत्रानुपातके कामतोऽश्वमेधादि; अकामतो द्वादशाब्दमित्युक्तं कौटसाक्ष्ये । उत्सादो निन्दोपलक्षणम्; "ब्रह्मोज्झता वेदनिन्दा" इति प्रागभिधानात् । सा च त्रिविधा । बौद्धादिशास्त्राभिनिवेशेनाप्रामाण्यबुद्धिरेका; प्रामाण्यबुद्धावपि हैतुकशास्त्राभिनिवेशेनावज्ञानं द्वितीया । अत एव **मनुः**—

"योऽवमन्येत ते तूभे हेतुशास्त्रार्थवादतः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥"

इति । वैदिककर्मफलेषु अश्रद्धा तृतीया । तत्राद्यमनुपातकम् । तत्र प्रायश्चित्तं कामतोऽश्वमेधादि; अकामतो द्वादशाब्दमिति सर्वत्रानुपातके ज्ञेयम् । अपरे द्वे तूपपातके तत्रोपपातके तु निमित्तकालभेदेन प्रायश्चित्ततारतम्यं वाच्यम् । तच्चाग्निसाहचर्यात् तत्त्यागोक्तमेव । तत्र **वासिष्ठः**—"ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्यात्" इति । एतच्च नास्तिक्येन त्यागे; "योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यं चरेद् द्विजः" इत्यग्नित्यागे नास्तिक्यश्रवणात् । इदं च मासद्वयत्यागे । मासद्वये प्राजापत्यम् । मासचतुष्टयेऽतिकृच्छ्रः । षण्मासे पराकः । अब्दे मासं पयोव्रतम् । अब्दादनन्तरं त्रैमासिकमिति नास्तिक्ये । प्रामादिकत्यागे तु प्राणायामशतम् आत्रिरात्रम् । तदूर्ध्वमेकोपवासः आविंशतिदिनम् । तदूर्ध्वम् आमासद्वयं त्रिरात्रोपवासः । तदूर्ध्वमाब्दं प्राजापत्यम् । मासचतुष्टयेऽतिकृच्छ्रः । षण्मासे पराकः । तदूर्ध्वं यथान्यायमूह्यमिति । आलस्येन त्यागे आद्वादशाहं त्रिरात्रोपवासः । तदूर्ध्वमामासं द्वादशाहम् । तदूर्ध्वमावर्षं मासोपवासः, पयोभक्षणं वा । तदूर्ध्वम् आद्विवर्षं चान्द्रायणम् । तदूर्ध्वम् आत्र्यब्दं चान्द्रायणं सोमायनं च । तदूर्ध्वं त्वब्दकृच्छ्रो धनिनो गोदानं चेति संक्षेपः ।

[1] षड्रात्रे—ग.

तमेतमखिलमर्थं स्मरणसौकर्याय संजग्राह **संग्रहकारः**—

" कृच्छ्रो मासद्वयं चेत् त्यजति हुतवहं तच्चतुष्केऽतिकृच्छ्र-
स्तत्षट्के स्यात् पराकस्तत उपरि पयो मासमाब्दात् त्रिमासम् ।
नास्तिक्ये तत्प्रमादेऽप्यसुनियमशतं प्राक् त्रिरात्रात् परं च
कुर्यादेकोपवासं त्रिदिनमुपवसेद्विंशतेरूर्ध्वमब्दम् ॥
षष्टेरूर्ध्वं तु कृच्छ्रः शरद उपरि चेद्ब्रह्मचालस्यतोऽग्नि-
स्त्यक्तश्चेद् द्वादशाहे त्रिदिनमुपवसेद् द्वादशाहं तु मासे ।
मासं चाब्देऽथ चान्द्रं तदपि भवति सोमायनं चाब्दयुग्मे
स्यादूर्ध्वं [1]त्वब्दकृच्छ्रो यदि भवति धनी गां च दद्याद् द्विजाय ॥ "

इति । तदेवं मूलोक्तमब्दकृच्छ्रं त्र्यब्दादूर्ध्वं वेदितव्यम् । इदमेव चाग्नित्यागे ; समानयोगक्षेमतया निर्देशात् । तथाच **जाबालः**—

" यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥ "

इति ; दौर्ब्राह्मण्यपरिहारार्थमाश्विनपशुविधानस्य च तुल्यत्वात् । एतन्मूलवाक्यानि **भारद्वाजगृह्यात्** अवगन्तव्यानि ; विस्तरभयान्नेहोदाहृतानि[2] । इदं चौपासनाग्नित्यागे । त्रेताग्नित्यागे तु **मनुः**—

" अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् ॥
अग्निहोत्र्यपविध्याग्नीन् मासादूर्ध्वं तु कामतः ।
कृच्छ्रं चान्द्रायणं चैव कुर्यादेवाविचारयन् ॥ "

इति । इदं च कामतः । अकामतो **हारीतः**—" संवत्सरोत्सन्नेऽग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्यात् । द्विवर्षोत्सन्ने सोमायनं चान्द्रायणं कुर्यात् । त्रिवर्षोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यात् " इति । ऊर्ध्वं तु कल्प्यम् । यथोक्तप्रायश्चित्तानन्तरमन्तरितहोमद्रव्यं दत्त्वा पुनरादध्यात् । यथाह **जातूकर्ण्यः**—

" अतीतकालं जुहुयादग्नौ विप्राय वा स्वयम् ।
गतेऽग्नौ विधिवद् दद्यात् दत्त्वादध्यात् पुनर्द्विजः ॥ "

इति । स्मार्ताग्नित्याग एवेदमित्येके । त्यागः अनध्ययनानाधानयोरप्युपलक्षणम् । तथाच **स्मृत्यन्तरे**—

" योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ "

[1] ह्यब्द—घ.  [2] न्नोदाहृतानि—ग

इति । तत्र प्रायश्चित्तमाह **गौतमः**—"अभ्युत्सादिनिराकृत्युपपातकेषु चैवम्" इति । अभ्युत्सादी व्याख्यातः । निराकृतिः शक्तावपि वेदाध्ययनशून्यः । स [1]संवत्सरं ब्रह्मचर्यं कुर्यादिति । प्रतिषिद्धानामध्यापने तेभ्योऽध्ययने तैः सहाध्ययने च **स** एवाह—"प्रतिषिद्धमन्त्रसंयोगे सहस्रवाकश्चेत्" इति । प्रतिषिद्धाः पतितादयः । तैः सह मन्त्रसंयोगः अध्ययनाध्यापनसहाध्ययनयाजनादिसंबन्धः । तत्र [2]संवत्सरं प्राकृतं ब्रह्मचर्यम् । स चेन्मन्त्रसंयोगः सहस्रपदयुक्तो भवति । अर्वाक् तु कल्प्यम् । अकामतश्चेदं माससंयोगे ; षाण्मासिके षडब्दाभिधानात्, संवत्सरे द्वादशाब्दाभिधानात्, कामतः पातित्याच्चेति । पतितादिश्रावणे तु **वसिष्ठः**—"पतितचण्डालशवसूतकिश्रावणे तु त्रिरात्रं वाग्यता आसीरन् सहस्रपरमं वा तदभ्यस्यन्तः[3] पूता भवन्तीति विज्ञायते । [4]एतेनैव गर्हिताध्यापकयाजका व्याख्याताः, दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायते" इति । एवमन्तरा गमनेऽनध्यायाध्ययनेऽपि **गौतमः**—"अन्तरा गमने पुनरुपसदनम् । श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्च । प्राणायामा घृतप्राशनं चेतरेषाम् । श्मशानाभ्यध्ययने चैवम्" इति । श्मशानमित्यनध्यायमात्रोपलक्षणम् ; "श्मशानपतितान्तिके" इति **स्मरणात्** । अनाहिताग्नित्वे तु **कार्ष्णाजिनिः**—

"काले त्वाधाय कर्माणि कुर्याद्विप्रो विधानतः ।
तदकुर्वंस्त्रिरात्रेण मासि मासि विशुध्यति ॥"

इति ।

"अनाहिताग्नौ पित्रादौ यक्ष्यमाणः सुतो यदि ।
स हि व्रात्येन पशुना यजेत् तन्निष्क्रयाय तु ॥"

इति । एवं त्रेतानाधाने वर्षं षट् प्राजापत्याः, प्रतिवर्षं चान्द्रायणम् । आवसथ्यानाधानेऽपि **स** एव—

"कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम् ।
चान्द्रायणं चरेद् वर्षं प्रतिमासमहोऽपि वा ॥"

इति । कृतदारो ज्येष्ठ इत्यनेनाधानाधिकारे सतीत्युक्तम् । यावद्वर्षं प्रतिमासमेकोपवासः । तदूर्ध्वं प्रतिवर्षं चान्द्रायणमिति । सत्यग्नौ तत्राहोमे मनो ज्योतिषा आज्याहुतिराद्वादशाहम् । नष्टे पुनरस्मिन् आद्वादशाहम् अयाश्चेत्यनेनाहुतिः । तदूर्ध्वं स्थालीपाकत्रये वातिक्रान्तेऽग्निनाशः । ततो यथास्वगृह्यमुद्वाहरीत्या पुनः संधानम् । अत्राप्याह सकलमर्थं **संग्रहकारः**—

"तत्रायाश्चेति वह्निर्भवति पुनरहोहाद्वादशाहं तथाग्नौ
होमश्चेन्नास्ति तस्मिन् स हि भवति मनो ज्योतिषा द्वादशाहे ।

[1] संवत्सरे—ग.
[2] संवत्सरं omitted in ग.
[3] अभ्यस्येतः—ग.
[4] From एतेनैव up to विज्ञायते omitted in ख.

याते त्विष्टित्रये वा स्मृतमथ पुनराधानमुद्गाहरीत्या
यद्वायाश्चेति तत् स्याच्छ्रुतिसमभिहिताधानसंभारलाभे ॥ "

इति । स्थालीपाकातिक्रमादौ तु **आश्वलायनः**—

" स्थालीपाके [1]त्वथापन्ने ह्यन्याग्नौ तु स्वयं यजेत् ।
स्वाग्नावन्यो यजेद्यद्वा कार्यः पथिकृतश्चरुः ॥ "

इति । श्रौते तु पुनराधानम् । पर्वणि होमलोपे **मरीचिः**—

" होमलोपे ह्यमावास्यां पर्वस्वाग्रयणादिषु ।
कुर्यादिष्टिं पावमानीं शुचिस्तां तु यथाविधि ॥ "

इति । पर्वोपस्थानलोपे **बृहस्पतिः**—

" आहिताग्निरुपस्थानं न कुर्याद्यदि पर्वणि ।
ऋतौ न गच्छेद्भार्यां यः सोऽपि कृच्छ्रार्धमाचरेत् ॥ "

इति । अग्निमुत्सृज्य प्रवासे **हारीतः**—" उत्सृज्याग्निं प्रवसन् वैश्वानर्या यजेत " इति । प्रवासोऽत्र तीर्थाद्यर्थम् ; न [2]धनाद्यर्थम् ;

" धनान्यर्जयितुं युक्तः प्रवासो ह्यग्निहोत्रिणः ।
धनैरिज्यादिकार्याणि तीर्थाद्यर्थं न तु व्रजेत् ॥ "

इति **स्मरणात्** । सांवत्सरिकपशुसोमाद्यकरणेऽपि **स एव**—" सांवत्सरिकाणां पशुसोमानामिज्यानामसंभवे च " इति । **मनुरपि**—

" इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे ॥ "

इति । कृतसंकल्पस्यायजने **हारीतः**—" यो यक्ष्य इत्युक्त्वा न यजेत् महान्तं क्रतुमभिसमीक्ष्याल्पेनेष्ट्वा न सर्वं प्रयुनक्ति, तत्र त्रैधातव्या प्रायश्चित्तिः " इति । संकल्पितस्य व्रतादेरन्यथाकरणाकरणयोरपि **स एव**— " यस्तूपेत्य यथार्थं तपस्यन्यथा वा चरत्यसमाप्तिः को वा तस्याग्नेयो हविश्चान्द्रायणं वा " इति । वेदाग्नित्यागयोरेकयोगनिर्दिष्टत्वात् पितृमातृसुतदारबान्धवत्यागेष्वप्येतदेव सामान्यप्रायश्चित्तेन सह जातिशक्ति-सकृदभ्यासाद्यपेक्षया योज्यम् । अन्यान्यपि श्रौतप्रायश्चित्तानि तत्तद्ग्रन्थेभ्य एवावगन्तव्यानि[3] ॥ १३ ॥

[1] त्वतिक्रान्ते यदन्याग्नौ—ख, ग. [2] धनार्थम्—ख, ग. [3] अवधेयानि—ख, ग.

**समुत्कर्षानृते गुरोश्चालीकनिर्बन्धे [1]तदाक्षेपणे च मासं पयसा वर्तेत ॥ १४ ॥ नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नश्चैते [2]संवत्सरं भैक्ष्येण वर्तेरन् ॥ १५ ॥**

उत्कर्षानृतवादिष्वाह । उद्देश एव पदद्वयार्थो व्याख्यातः । तदाक्षेपणं गुरुतिरस्कारः । तद्द्वैविध्यं च प्रागुक्तम् । तत्रानुपातकेष्वेतेषु कामतोऽश्वमेधादि । अकामतो द्वादशवार्षिकमित्युक्तम् । उपपातकेषु पुनः मासं पयःपानम् । गुर्वनभिमतानुष्ठाने तु "प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति" इति योग्युक्तं ज्ञेयम् । प्रसादनानन्तरं चोपवासः;

"गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः ।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद् दिनम् ॥"

इति तस्यैव स्मरणात् ॥ १४ ॥

नास्तिकादिष्वाह । नास्तिको व्याख्यातः । नास्तिकवृत्तिः बाह्याचारोपजीवी । नास्तिकेभ्यो वृत्तिर्जीवनं यस्येति वा ; कृतमुपकारं द्वेषेण नाशयतीति कृतघ्नः । कूटव्यवहारी ; कूटेन कपटेन तुलामानादिकृतेन क्रयविक्रयकर्ता । ब्राह्मणवृत्तिघ्नः राजादिदत्तशासनाद्यपहर्ता । चकारात् मिथ्याभिशंसीत्येते संवत्सरं भैक्ष्येण वर्तेरन् । यथाह शङ्खः—"नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसी चेत्येते पञ्च ब्राह्मणगृहेषु संवत्सरं भैक्षं चरेयुः" इति । इदं चाभ्यासेन । सकृत्करणे तु वसिष्ठः—"नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यात् नास्तिकवृत्तिस्त्वतिकृच्छ्रम्" इति । संवत्सरं वृत्त्यपहारप्रायश्चित्तमल्पवृत्त्यपहारे । कुटुम्बपोषणपर्याप्तवृत्त्यपहारे तु तत्तद्वर्णवधोक्तमेव । तथाच शङ्खः—

"यस्य यस्य तु वर्णस्य वृत्तिच्छेदं समाचरेत् ।
तस्य तस्य वधे प्रोक्तं प्रायश्चित्तं समाचरेत् ॥
अपहृत्य च वर्णानां विप्रो भूमिं प्रमादतः ।
प्रायश्चित्तं वधप्रोक्तं ब्राह्मणानुमतश्चरेत् ॥"

इति ॥ १५ ॥

**परिवित्तिः परिवेत्ता च यया च परिविद्यते [3]दाता याजकश्च चान्द्रायणं कुर्यात्[4] ॥ १६ ॥**

परिवित्त्यादिष्वाह । परिवित्त्यादयः पञ्चापि चान्द्रायणं कुर्युः । पञ्चानामपि कामतः प्रवृत्ताविदम् । अकामतस्तु वसिष्ठः—"परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत तां चैवोपयच्छेत्"

[1] तदाक्षारणे—ड.
[2] पञ्चसंवत्सरान्—ठ.
[3] तद्दाता—ठ.
[4] कुर्युः—ज, ठ.

इति । परि विवेदेत्यसौ परिविविदानः । लिटि कानच् । परिवेत्तेति यावत् । असौ कृच्छ्रातिकृच्छ्रौ कृत्वा तां स्त्रोढां ज्येष्ठाय निवेद्य पुनस्तामेव ज्येष्ठानुज्ञातामुद्वहेदित्यर्थः । यथा **हारीतः**—" तां कन्यां ज्येष्ठायोपपादयेयुः स तामनुमान्यान्यया निविशेतैवं धर्मो न लुप्यते " इति । स ज्येष्ठः तां कनिष्ठोपनीताम् अनुमान्य कनिष्ठायाभ्यनुज्ञाय अन्यां स्वयं परिणयेत् ; न कनिष्ठोपनीतामिति । अत्रैव विषये **यमः**—

" कृच्छ्रो द्वयोः परिवेद्य कन्यायाः कृच्छ्र एव च ।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत् ॥ "

इति । होता याजकः । अभ्यासे तु **शङ्खः**—" परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षं चरेयाताम् " इति । ननु

" अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् ।
न कुर्याज्जनके ज्येष्ठे सोदरे चाप्यकुर्वति ॥ "

इति **स्मरणात्** प्रथमविवाहादेरेव परिवेदनादिनिमित्तत्वावगमेन द्वितीयादिविवाहाद्यनिषेधादभ्यासोऽनुपपन्न इति चेत्; मैवम्; तात्पर्यानवगमात् । तथाहि—न ह्यत्र प्रथमाग्निहोत्रविवाहयोः प्रतिषेधः, येन द्वितीयाद्यनिषेधः स्यात् । किंतु प्रथमविवाहाद्यकुर्वति ज्येष्ठे कनिष्ठस्य विवाहनिषेधः । स च प्रथमद्वितीयादिसाधारण इति तदतिक्रमावृत्तौ परिवेदनाद्यभ्यासोपपत्तेः । अन्वयश्चायमित्थमेव । अन्यथा द्वितीयादिविवाहमकुर्वत्यपि ज्येष्ठे कनिष्ठस्य परिवेदनापत्तेः । तस्मात् ब्रह्महत्यादिनिषेधातिक्रमाभ्यासे ब्रह्महत्याद्यभ्यास इवात्राप्यभ्यासो नानुपपन्नः । न चैवम् " ज्येष्ठेऽनिविष्टे कनीयान्निविशमानः परिवेत्ता भवति । परिवित्तो ज्येष्ठः । परिवेदिनी कन्या । परिदायी दाता । परियष्टा याजकः । ते सर्वे पतिताः संवत्सरं प्राजापत्येन कृच्छ्रेण पावयेयुः " इति **हारीतवाक्ये** कन्यायाः परिवेदिनीत्वाभ्यासासंभवात् संवत्सरप्रायश्चित्तानुपपत्तिरिति वाच्यम् ;

" नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ "

इत्याद्यभ्यनुज्ञातपुनर्विवाहायाः तदभ्याससंभवात् । तस्मात् संवत्सरं कृच्छ्रं परिवेत्तृत्वाद्यभ्यासविषयम् । पर्याहितादिष्वप्येतदेव । यथाह **गौतमः**—" परिवित्तिपरिवेत्तृपर्याहितपर्याधात्रग्रेदिधिषूपतिदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्यम् " इति । अकृताधाने ज्येष्ठे कनिष्ठेनाधाने ज्येष्ठः पर्याहितः, कनिष्ठः पर्याधाता । अग्रेदिधिष्वादिलक्षणं **स्मृत्यन्तरे**—

" ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
या साग्रेदिधिषूः प्रोक्ता पूर्वा तु दिधिषूः स्मृता ॥ "

इति । तत्राह **वसिष्ठः**—" अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चैवोपयच्छेत् । दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत् " इति । अग्रेदिधिषूपतिः कनिष्ठापतिः

कृच्छ्रं कृत्वा तां ज्येष्ठाम् अन्योढां स्वयमुद्वहेत्। दिधिषूपतिर्ज्येष्ठापतिः स्वोढां ज्येष्ठां कनिष्ठापतये दत्त्वा स्वयमन्यामुद्वहेदिति ॥ १६ ॥

**प्राणिभूपुण्यसोमविक्रयी तप्तकृच्छ्रम् ॥१७॥ [1]आर्द्रौषधिगन्धपुष्पफलमूलचर्मवेत्रविदलतुषकपालकेशभस्मास्थिगोरसपिण्याकतिलतैलविक्रयी प्राजापत्यम् ॥ १८ ॥**

अविक्रेयविक्रयेष्वाह। प्राणिनः गोमहिष्यादयः। भूः गृहक्षेत्रादिका[2]। पुण्यं यागादिजन्यो धर्मः। सोमः सोमलता। [3]एतेषां विक्रेता तप्तकृच्छ्रं कुर्यात् ॥ १७ ॥ किंच आर्द्रम् आर्द्रकम्। ओषधयः यवव्रीह्यादयः। गन्धाः चन्दनादयः। पुष्पाणि मल्लिकादीनि। फलम् आम्रादि। मूलं मूलकादि। चर्म अजिनादि। वेत्रं वञ्जुलः। विदलं वंशत्वङ्निर्मितं शूर्पव्यजनादि। तुषं यवादीनाम्। कपालं घटादेर्मण्डकादिसाधनम्। केशाः चमरादीनाम्। भस्म शुष्कादेः मुद्रादिरक्षणसाधनम्। अस्थि कूर्मादेः कङ्कणादिसाधनम्। गोरसः दधिक्षीरादिः। पिण्याकं खलिः। तिलाः श्वेताः श्यामाश्च। तैलं तिलादिस्नेहः। एषां प्रत्येकं विक्रयी प्राजापत्यं कुर्यात् ॥ १८ ॥

**श्लैष्मजतुमधूच्छिष्टशङ्खशुक्तित्रपुसीसकृष्णलोहौदुम्बरखड्गपात्रविक्रयी [4]चान्द्रायणं [5]कुर्यात् ॥ १९ ॥ रक्तवस्त्ररङ्गरत्नगन्धगुडमधुरसोर्णाविक्रयी त्रिरात्रमुपवसेत् ॥ २० ॥**

किंच श्लेष्मण इमानि श्लैष्माणि श्लेष्मातकफलानि। जतु लाक्षा। मधूच्छिष्टं सिक्थकः। शङ्खशुक्ती प्रसिद्धे। त्रपुसीसे धातुविशेषौ। कृष्णलोहमायसम्। औदुम्बरं ताम्रम्। खड्गपात्रं खड्गशृङ्गमयं पात्रं पितृतर्पणसाधनम्[6]। एषां प्रत्येकं विक्रयी चान्द्रायणं कुर्यात् ॥ १९ ॥ किंच रक्तवस्त्रं मञ्जिष्ठादिरञ्जितम्। रङ्गं धातुविशेषः। रत्नं पद्मरागादि। गन्धाः कर्पूरादयः। गुडः प्रसिद्धः। मधु क्षौद्रम्। रसाः गुडलवणादिव्यतिरिक्ताः तिक्तकटुकादयः। ऊर्णा मेषादिलोम, तन्निर्मितं कम्बलादि च। तेषां विक्रयी त्रिरात्रमुपवसेत्। अकामतश्चेदम्। कामतः **पैठीनसिः**—“ अथाविक्रेयाणि ब्राह्मणस्य लवणं पक्वान्नमधुक्षीरदधिघृतमुदकं सर्वगन्धलाक्षारसवासो गुडतैलं ग्राम्यपशूनामेकशफाः केशिनः सर्वे चारण्याः पशवो विद्या पूर्तमिष्टं गावः शङ्खश्चोर्णा चेति विक्रयणे तेषामेकैकस्मिन् प्राजापत्यं चरेत् ” इति ॥ २० ॥

[1] आर्द्रौषधिमूल—ज; आर्द्रौषधिपुष्पमूल—ठ; वेणु for वेत्र—ज, ठ.
[2] क्षेत्रादिः—घ.
[3] एषां—घ.
[4] महासांतपनं—ज, ठ.
[5] कुर्यात् omitted in ठ.
[6] साध्यम्—घ.

**मांसलवणलाक्षाक्षीरविक्रयी चान्द्रायणं कुर्यात् ॥ २१ ॥ तं च[1] भूयश्चोपनयेत् ॥ २२ ॥ उष्ट्रेण खरेण वा गत्वा नग्नः स्नात्वा [2]सुप्त्वा भुक्त्वा प्राणायामत्रयं कुर्यात् ॥ २३ ॥**

किंच मांसं भक्ष्यमपि। लवणं शम्भलादि। लाक्षा जतु। क्षीरं माहिषादि; गोरसानां प्रागभिधानात्। एषां विक्रये चान्द्रायणं कुर्यात्। मांसं सुरोपलक्षणम्;

"आममांससुरासोमलाक्षालवणसर्पिषाम्।
विक्रये सर्वपण्यानां द्विजश्चान्द्रायणं चरेत् ॥"

इति **शातातपस्मरणात्** ॥ २१ ॥ अपण्यविक्रये नैमित्तिकं पुनरुपनयनमाह। तं प्राण्याद्यपण्यविक्रयिणं भूयः पुनरुपनयेत्। चकारात् वक्ष्यमाणखरोष्ट्रादियानेष्वपि;

"रासभं महिषं मेषं बलीवर्दं क्रमेलकम्।
आरुह्य ब्राह्मणो मोहात् पुनः संस्कारमर्हति ॥"

इति **हारीतस्मरणात्**। पुनश्चकारः प्रायश्चित्तसमुच्चयार्थः; प्रायश्चित्तस्य पापक्षयार्थतया पुनरुपनयनस्य च विच्छिन्नसंस्कारसंधानार्थतया भिन्नकार्यत्वात् ॥ २२ ॥ निषिद्धयानादिष्वाह। खरोष्ट्राद्यारुह्य गमने नग्नस्य स्नानशयनभोजनेषु च सचैलस्नानानन्तरं प्राणायामत्रयं कुर्यात्;

"प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ॥"

इति **योगिस्मरणात्**। इदं च कामतः। अकामतस्तु स्नानमेव। पुनरुपनयनं तूभयत्रापि। वाशब्दो गवादिसंग्रहार्थः; "गवां च यानं पृष्ठेन सर्वथैव विगर्हितम्" इति **मानवात्**। पृष्ठेन सर्वथैवेति वचनात् तद्युक्तरथादियानमपि विगर्हितमेव। अत एव **मनुः**—

"उष्ट्रयानं समारुह्य खरयानं च कामतः।
सवासा जलमाप्लुत्य प्राणायामेन शुध्यति ॥"

इत्येकमेव प्राणायामं तद्युक्तयाने अभिहितवान्। यत्तु "गोयुक्तं रथमुपसंयम्य" इत्यादि वचनं, तत् समावर्तनादिकर्मविधिशेषतयेति न विरोधः। **यमोऽपि**—

"रासभं महिषं मेषं बलीवर्दं क्रमेलकम्।
आरुह्य ब्राह्मणो मोहात् पुनः संस्कारमर्हति ॥"

इति ॥ २३ ॥

[1] च omitted in ठ.

[2] भुक्त्वा सुप्त्वा वा—ङ.

**जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ।**
**मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ २४ ॥**

असत्प्रतिग्रहेष्वाह[1] । प्रतिग्रहासत्त्वं दातृदेशकालदेयद्रव्यासत्त्वात् । तत्र दात्रसत्त्वं जात्या कर्मणा च ; यथा चण्डालादेः । देशकालासत्त्वं यथा कुरुक्षेत्रोपरागादेः । द्रव्यासत्त्वं यथा मेषीकृष्णाजिनादेः । तत्राह **वृद्धहारीतः**—

" राज्ञां प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत् ।
षष्ठे काले पयोभक्षः पूर्णे मासे प्रमुच्यते ॥
तर्पयित्वा द्विजान् कामैः सततं नियतव्रतः ।
तपसा चेज्यया चैव राजपापात् प्रमुच्यते ॥ "

इति । एतच्च उच्छास्त्रवर्तिराजपरम् ; " न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः " इति तस्यैव निषेधात् । न्यायवर्तिनस्तु न दोषः ;

" धर्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन् ।
मेध्यमेव धनं प्राहुस्तीक्ष्णस्यापि महीपतेः ॥ "

इति **देवलस्मरणात्** । **सुमन्तुरपि**—" सौकरिकव्याधनिषादरजकबुरुडचर्मकारा अभोज्यान्ना अप्रतिग्रहयोग्याश्च, चान्द्रायणं चरेत् " इति । सौकरिकः सूकरपालकः । **यमोऽपि**—

" रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः ॥
एतेषां च स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥ "

इति । साम्यमव्यवहार्यत्वम् । **मनुरपि**—

" चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा ॥ "

इति । **व्यासः**—

" द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः ।
अपि वा क्षत्रियाद्वैश्याच्च तु शूद्रात् कदाचन ॥ "

[1] प्रतिग्रहे आह—ग.

इति । तत्रापि चान्द्रायणम् ; अपात्रीकरणत्वात् । द्वितीये **मत्स्यपुराणम्**—

" तस्मात् तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च ।
निमित्तेषु च सर्वेषु न प्रमत्तो भवेद् द्विजः ॥ "

इति । निमित्तमुपरागादि । तृतीये **यमः**—

" तिलधेनुर्गजो वाजी प्रेतान्नमजिनं मणिः ।
सुरभिः सूयमाना च घोराः सप्त प्रतिग्रहाः ॥ "

इति । [1]एतेषु द्वयोः द्वयोः समवाये मासं गोष्ठे वसन् पयोमात्राहारः प्रत्यहं त्रीणि त्रीणि सहस्राणि गायत्र्या जपन् असत्प्रतिग्रहान्मुच्यते । प्रत्येकनिमित्ते चान्द्रायणविधानात् द्वयोः समवाय इदम् ; नवतिसहस्रगायत्रीजपस्याधिकत्वात्[2] । एवं त्रयाणामपि समवायेऽधिकं कल्प्यम् । न्यूने आहिताग्नेश्चान्द्रायणवैकल्पिकीष्टिः । यथा **चतुर्विंशतिमते**—

" पवित्रेष्ट्या विशुध्यन्ति सर्वे घोराः प्रतिग्रहाः ।
ऐन्दवेन मृगारेष्ट्या कदाचिन्मित्रविन्दया ।
देव्या लक्षजपेनैव शुध्यन्ते दुष्परिग्रहाः ॥ "

इति । देवी गायत्री । महादानप्रतिग्रहे तु **अरुणस्मृतौ**—

" गायत्र्या दशलक्षाणि प्राणायामैः सहस्रशः ।
नश्यन्ति पापसंघाताः महादानप्रतिग्रहात् ॥ "

इत्याद्युन्नेयमसत्कृतात् **स्मृतिसिन्धोः** । सर्वत्र द्रव्यत्यागपूर्वकं प्रायश्चित्तम् ;

" यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसा तथा ॥ "

इति वक्ष्यमाणत्वात् । इदं त्वतिधनवतः । दरिद्रस्य तु[3] चतुर्थांशदानम् ,

" प्रतिग्रहचतुर्थांशं वणिग्लाभतृतीयकम् ।
कृषेः षष्ठं च विप्रेभ्यो दत्त्वा पापात् प्रमुच्यते ॥ "

इति **पाराशर्यात्** । अतिदरिद्रस्य षष्ठांशदानम् ; " प्रतिग्रहेषु सर्वेषु षष्ठांशं परिकल्पयेत् " इति **चतुर्विंशतिमतात्** । [4]ऋणशोधनार्थे प्रतिग्रहे तदभोग एव । यथाह **हारीतः**—" पतितदुष्कृतेभ्यः प्रतिगृहीतमस्वर्ग्यमयज्ञियं न तेन पुण्यार्थानाप्नोति ; आदेशवादाभ्यामात्मार्थे ब्राह्मणमभिजित्य तामसम् ; अन्यस्मै

[1] एषु—च.
[2] अधिकारत्वात्—ख, ग.
[3] तु omitted in घ.
[4] ऋणपरिशोधनार्थं—ख.

प्रतिगृह्णानः तस्य दुष्कृतमाप्नोति; आनृण्यार्थे प्रतिगृह्य तस्योपभोगात् स्तैन्यम्; एते प्रतिग्रहोपसर्गाः यैः प्रतिगृह्णन् निरयाय कल्पते" इति। आदेशः, अभिचारः वशीकरणादिः॥ २४॥

**अयाज्ययाजनं कृत्वा परेषामन्त्यकर्म च।**
**अभिचारमहीनं च त्रिभिः [1]कृच्छ्रैर्व्यपोहति॥ २५॥**

अयाज्ययाजनादिष्वाह। अयाज्या याजनानर्हाः। ते द्विविधाः—जात्या शूद्रप्रतिलोमादयः; कर्मणा पातित्योपपातकादियुक्ताः। तेषां याजनम्। परेषाम् असपिण्डादीनाम्। अन्त्यं प्रेतकर्म। अभिचारः परमारणाद्यर्थे दृष्टोपायः श्येनयागादिः। अहीनः अनेकसुत्याको यागः द्विरात्रादिद्वादशाहान्तः। एषामन्यतमं कृत्वा त्रिभिः कृच्छ्रैः शुध्यति। तत्र **सुमन्तुः**—"शूद्रयाजकः सर्वद्रव्यपरित्यागात् पूतो भवति प्राणायामसहस्रेषु दशधाभ्यस्तेषु" इति। सर्वं शूद्रयाजनलब्धम्। सहस्राणां त्रयाणां दशधाभ्यासः त्रिंशत्सहस्रसंख्यासंपादनम्। तस्य "कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम्" इति न्यायेन सार्धशतं कृच्छ्रा भवन्ति। तच्च कामतः तुलापुरुषाद्याचार्यत्वे ज्ञेयम्; गुरुत्वात्। शूद्रपौरोहित्ये तु[2] **यमः**—

"पुरोधाः शूद्रवर्गस्य ब्राह्मणो यः प्रवर्तते।
स्नेहादर्थप्रसङ्गाद्वा तस्य कृच्छ्रं विशोधनम्॥"

इति। कामतः सकृत् पञ्चमहायज्ञादाविदम्। अभ्यासे तु **यमः**—

"एतेषामेव सर्वेषां प्रत्यापत्तिं तु मार्गताम्।
भैक्ष्यान्नमुपयुञ्जानो द्विजश्चान्द्रायणं चरन्॥
धनं नागह्रदे तोये भावयेदविभावितम्[3]।
अत्रोत्सर्गेण मन्त्रान्ते तस्मात् पापात् प्रमुच्यते॥
अक्षारलवणां रूक्षां पिबेद् ब्राह्मीं सुवर्चलाम्।
तस्योपनयनं कृत्वा व्यवहार्यस्तदा भवेत्॥"

इति। नागह्रदे; गजमज्जनयोग्ये ह्रदे[4]। अविभावितम् अन्यानुपलक्षितं त्यजेत्। उत्सर्गानन्तरं चान्द्रायणान्ते ब्राह्मीं पिबेत्। मधुपर्काङ्गके चण्डालादियाजनेऽज्ञानात् पातित्यम्; ज्ञानतः साम्यम्; भोजनयाजनयोस्तुल्यत्वस्मरणात्। अन्यत्र कल्प्यम्। पतितादियाजने तु पातित्यप्रायश्चित्तानन्तरं चान्द्रायणमधिकम्; "पतितानां गृहं गत्वा भुक्त्वा च" इति **स्मरणात्**। उपपातक्यादियाजने तु [5]पातित्यप्रायश्चित्तानन्तरं

[1] वर्षैः—ज. [2] तु omitted in घ. [3] अविभाविते—ग.
[4] ह्रदे omitted in घ. [5] पातित्यप्रायश्चित्तानन्तरं omitted in घ.

**बोधायनः**—"बहु अप्रतिग्राह्यस्य वा प्रतिगृह्य अयाज्यं वा याजयित्वा अनाद्यस्य वान्नमशित्वा तरत्समन्दीयं जपेत्" इति। "अनादेशे शतम्" इति परिभाषणात् शतवारम्। ब्राह्मणस्य सकृद्याजने **योगीश्वरः**—"त्रीन् कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि" इति। असपिण्डान्त्यकर्मणि प्रेतविशेषेण विशेषः। तत्र ब्राह्मणस्य सवर्णान्त्यकर्मणि कृच्छ्रत्रयम्। क्षत्रियान्त्यकर्मणि षट्। वैश्यान्त्यकर्मणि नव। शूद्रान्त्यकर्मणि द्वादश। ब्राह्मणेन ब्राह्मणादीनामन्त्यकर्मकरणे दाहमात्रे कल्प्यम्। प्रेतालंकारमात्रे **शङ्खः**—

"कृच्छ्रपादोऽसपिण्डस्य प्रेतालंकरणे कृते।
अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते॥"

इति। स्पर्शेऽपि **सुमन्तुः**—"प्रेतस्पर्शिनामसंबन्धिनां कृच्छ्रपादः" इति। रोदने **वसिष्ठः**—

"दाहादिस्नानपर्यन्तं रुदन् कृच्छ्रं विधीयते।
पादहीनं सपिण्डस्य वर्णानुगमनेऽपि च॥"

इति। निर्हरणे **मनुः**—

"असपिण्डं द्विजं प्रेतं विप्रं निर्हृत्य बन्धुवत्।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥"

इति। बन्धुवत् स्नेहादिना। धर्मार्थमनाथप्रेतनिर्हरणे तु **अङ्गिराः**—

"यः कश्चिन्निर्हरेत् प्रेतमसपिण्डः कथंचन।
स्नात्वा सचैलं स्पृष्ट्वाग्निं तस्मिन्नेवाह्नि शुध्यति॥"

इति। दुर्मृतान्त्यकर्मणि **पराशरः**—

"गोभिर्हतं तथोद्बद्धं ब्राह्मणेन च घातितम्।
संस्पृशन्ति च ये विप्रा वोढारश्चाग्निदाश्च ये॥
ये चान्येऽप्यनुगच्छन्ति ये चान्ये पाशभेदकाः।
सर्वे ते पापकर्माणस्तेषां वक्ष्यामि निष्कृतिम्॥
तप्तकृच्छ्रेण शुध्यन्ति कुर्युर्ब्राह्मणभोजनम्।
अनुडुत्सहितां गां च दद्युर्विप्राय दक्षिणाम्॥"

इति। दहनादिसमुच्चये इदम्। प्रत्येककरणे तु तप्तकृच्छ्रमात्रम्। तथाच स एव—

"एषामन्यतमं प्रेतं यो वहेत दहेत वा।
कटोदकक्रियां कृत्वा तप्तकृच्छ्रं समाचरेत्॥"

इति। कटः प्रेतशिबिका। आत्मघातिनि **वसिष्ठः**—

"य आत्मघातिनः कुर्यात् स्नेहात् प्रेतक्रियां द्विजः।
स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम्॥"

इति। शवानुगमने **याज्ञवल्क्यः**—

"ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित्।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः॥"

इति। ननु,

"श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यभिचारयन्।
वाक् शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः॥"

इति **मनुना** अभिचारस्याप्यनुज्ञानात् कथमभिचारे प्रायश्चित्ताभिधानमिति चेत्; सत्यम्। फलांशे विध्यस्पर्शेन निषेधस्पर्शात् फलतो निषिद्धत्वेन प्रायश्चित्तोपपत्तेः। अस्त्वेवमभिचारे; अहीने तु कथम्? "द्वादशाहेन प्रजाकामं याजयेत्" इत्यादिफलतोऽप्यनिषेधादिति चेत्; मैवम्। कृत्वेति कृतिमात्रयोगिताया निमित्तत्वावगमात् तस्याश्च ऋत्विङ्मात्रनिष्ठत्वेन प्रायश्चित्तस्यापि तन्मात्रविषयत्वात्। अत एव "न्यस्तमार्त्विज्यमकार्यम्, अहीनस्य नीचदक्षिणस्य व्याधितस्यातुरस्य" इत्यार्त्विज्यनिषेधस्तान् प्रत्येव। तथा सोमप्रवाकं प्रति "कच्चिद्ब्राह्मी न" इति प्रश्नोऽपि तेषामेवेति॥ २५॥

**येषां द्विजानां सावित्री नानूच्येत यथाविधि।**
**तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥ २६॥**

व्रात्यान् प्रत्याह। द्विजाः द्विर्जननयोग्याः त्रैवर्णिकाः मूर्धावसिक्तादयोऽनुलोमजाश्च। तेषां यथाविधि देशकालकर्तृशाखासूत्राद्यनतिक्रमेण चेत् सावित्री नानूच्येत नानुवाचनविषयीक्रियेत, तान् त्रीन् प्राजापत्यांश्चारयित्वा यथाविध्युपनाययेत्। गायत्र्युपदेशरूपोपनयनप्रवर्तकाधीहि भो सावित्रीं भो अनुब्रूहीति प्रैषप्रवक्तॄन् कुर्यादाचार्यादिः। णिजन्तात् णिज्विवक्षयैतत्। अन्यथा उपनेयव्यापारमात्रविवक्षायां तांश्चारयित्वेति कृच्छ्रोपनायनयोः समानकर्तृत्वासिद्धेः। यत्किंचिदुपनयनाङ्गहानेऽप्येतदेव; 'नानूच्येत यथाविधि' इति सामान्येनाभिधानात्। न चेदं पुनरुपनयनम्; विधिवैगुण्येनाद्यसंस्कारस्यैवानुपपत्तेः। ततश्चात्र कालाद्यनादरो न। अत एव व्रात्याधिकारे **हारीतः**—"तेषां प्रायश्चित्तं मासं पयोभक्षं गामनुगच्छेत् यश्चीर्णप्रायश्चित्तः तं विशिष्टव्रतैरुपनयेयुः यथा ऋतुच्छन्दोऽविशेषात्" इति। ऋतुः वसन्तादिः। छन्दः स्वशाखा। तयोः अविशेषाद्विशेषामभिधानात् प्रकृत्यैवोपनयेत्। इदं चाष्टमवर्षादिमुख्यकालातिक्रमे। गौणकालातिक्रमे तु **याज्ञवल्क्यः**—

" आ षोडशाद्वा द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ "

इति । अत्र आङभिविधौ, न मर्यादायामित्युक्तम् । तत्रैव वैकल्पिकमाह वसिष्ठः—" पतितसावित्रीक उद्दालकव्रतं चरेत् । द्वौ मासौ यावकेन वर्तयेत् । मासं पयसार्धमासमामिक्षयाष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथं वा गच्छेत् व्रात्यस्तोमेन वा यजेत " इति ॥ २६ ॥

**प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः ।**
**ब्राह्मण्याच्च परित्यक्तास्तेषामप्येतदादिशेत् ॥ २७ ॥**

क्षत्रियादिवृत्त्युपजीवने आह । विपरिवृत्तं कर्म विकर्म ; ब्राह्मणादेः क्षत्रियादिवृत्तिः । तत्र तिष्ठन्तीति तत्स्थाः, तत्कारिणः । तेषाम् [1]आपद्विगमेनानुतापेन वा प्रायश्चित्तचिकीर्षायामेतदेव कृच्छ्रत्रयमादिशेत् । एतच्च संवत्सराभ्यन्तरे । तदूर्ध्वं तु प्रचेताः—" ब्राह्मणस्यापत्काले क्षत्रोपनिवेशः । तत्र संवत्सरमनुप्राप्तौ चान्द्रायणं चरेत्[2] वत्सराभ्यन्तरे[3] । तदूर्ध्वं [4]तु अर्धार्धं वा आपद्विगमे कल्प्यम् " इति । तदनन्तरं स्ववृत्त्यैव जीवेत् ; न पुनस्तथैव ;

" क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ।
निस्तीर्य तामथात्मानं पावयित्वा न्यसेत् पथि ॥ "

इति योगिस्मरणात् । वैश्यवृत्तावप्येतदेव ; याज्ञवल्कीये साहचर्याश्रयणात् । परं तु बृहस्पत्युक्तमत्राधिकम्—

" वणिक् कुसीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम् ।
कृषीवलोऽन्नपानानि यानशय्यासनानि च ॥
पण्येभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतम् ।
वणिक् कुसीद्यदोषः स्याद् ब्राह्मणानां च पूजनात् ॥ "

इति । आपदि इतस्ततो भोजने याज्ञवल्क्यः—

" आपद्गतः संप्रगृह्णन् भुञ्जानोऽपि यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥ "

[1] आपद्विगमनेन—ग.
[2] कुर्यात्—घ.
[3] वत्सरान्तरे—घ.
[4] तदूर्ध्वं तु omitted in घ.

इति । ये च ब्राह्मण्यात्, ब्रह्मणो वेदस्यायमधिकारीति ब्राह्मणः त्रैवर्णिकः, तस्य भावो ब्राह्मण्यं वेदः, तस्माद्विरोधिलक्षणया तदनध्ययनात् शिष्टैः परित्यक्ताः तेषामप्येतदेव कृच्छ्रत्रयमादिशेत् । इदमेकस्य पुरुषस्य । पुरुषत्रयमनध्ययने तु आश्विनः पशुः प्रागुक्तः ॥ २७ ॥

**यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।**
**तस्योत्सर्गेण शुध्यन्ति जप्येन तपसा तथा ॥ २८ ॥**

परावृत्तिविपरिवृत्तिप्रायश्चित्ते पूर्वकर्तव्यमाह । गर्हितेन शास्त्रनिषिद्धेन क्षत्रादिकर्मणा यद्धनमर्जयन्ति, तत् परित्यज्यैव जपतपसी कुर्युः । गर्हितपदोपादानात् निषिद्धप्रतिग्रहादावप्येतदेव[1] ज्ञेयम् । तच्चोक्तमेव प्राक् ॥ २८ ॥

**वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।**
**स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २९ ॥**

संध्यादिनित्यलोपेषु प्रकीर्णकेष्वाह । वेदः स्मृत्युपलक्षणः । तेन श्रौतस्मार्तसंध्यास्नानादिनित्यकर्मलोपे उपवासः कार्यः । स च दर्शपूर्णमासादिलोपोक्तपथिकृदिष्ट्यादिभिः[2] समुच्चीयते । उपवासाशक्तावेकब्राह्मणभोजनं कार्यम् ;

"अनिर्वर्त्य महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने कृच्छ्रार्धेन स शुध्यति ॥"

इति **स्मरणात्** । संवत्सरप्रकरणे **विष्णुपुराणम्**--

"संवत्सरं क्रियाहानिर्यस्य पुंसः प्रजायते ।
तस्यावलोकनात् सूर्यो निरीक्ष्यः साधुभिः सदा ।
स्पृष्टे स्नानं सचैलं तु शुद्धिहेतुर्महामते ॥"

इति । तत्र [3]द्व्यहं कल्प्यम् ; त्र्यहे अर्धकृच्छ्राम्नानात् । महायज्ञाः नित्यकर्मोपलक्षणम् । स्नातकव्रतानि "नेक्षेतोद्यन्तमादित्यम्" इत्यादीनि । तल्लोपेऽप्यभोजनम् । **क्रतुस्तु** अन्यथाह--"एतेषामाचाराणामेकैकस्य व्यतिक्रमे गायत्र्यष्टशतजपं कृत्वा पूतो भवति" इति ॥ २९ ॥

**अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ।**
**कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥ ३० ॥**

[1] एव omitted in ग.    [2] पथिकृदादिभिः—घ.    [3] त्र्यहं—घ.

किंच विप्रजिघांसया दण्डाद्युद्यमोऽवगूरणम्। तत् कृत्वा कृच्छ्रं प्राजापत्यम्। तस्यैव दण्डादेः निपातने शरीरोपरि संयोगे अतिकृच्छ्रम्। तेनैव प्रहारेण शोणितपाते कृच्छ्रातिकृच्छ्रं चरेत्। पुनः 'कुर्वीत' इति क्रियावचनं शोणितविषयमेव। ततश्चान्तरपि शोणितोत्पत्तौ कृच्छ्रं चरेत्; "कृच्छ्रोऽभ्यन्तरशोणिते" इति **योगिस्मरणात्**। **बृहस्पतिस्तु** विशेषमाह—

"काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत्।
अस्थिभेदेऽतिकृच्छ्रः स्यात् पराकस्त्वङ्गकर्तने॥"

इति। पादप्रहारे तु **यमः**—

"पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया।
दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्॥"

इति। वादेन ब्राह्मणं जित्वाह **योगीश्वरः**—

"गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद् दिनम्॥"

इति। अभ्यासे तु **यमः**—

"वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्॥"

इति॥ ३०॥

**एनस्विभिरनिर्णिक्तैर्नार्थं कंचित् समाचरेत्।**
**कृतनिर्णेजनांश्चैतान् न जुगुप्सेत धर्मवित्॥ ३१॥**

अन्वयव्यतिरेकाभ्यां प्रायश्चित्तप्रयोजनमाह। एनस्विनः अतिपातकादिप्रकीर्णकान्तान्यतमपातकिनः। तैः अनिर्णिक्तैः अकृतप्रायश्चित्तैः कमपि संलापादिकमर्थं नाचरेत्। कृतप्रायश्चित्तानेतान् पुनः धर्मवित् कुत्रापि लौकिकवैदिककार्येषु न जुगुप्सेत, न परिहरेत्। औद्धत्यादिना प्रायश्चित्ताप्रवृत्तस्य त्यागं वक्ष्यति। अत्यक्ते च कृतप्रायश्चित्ते परिग्रहप्रकारमाह **गौतमः**—"यस्तु प्रायश्चित्तेन शुध्येत तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमात् ह्रदात् पूरयित्वा स्रवन्तीभ्यो वा तत एनमप उपस्पर्शयेयुः" इति। शातकुम्भं सुवर्णम्। ततः [1]पात्राद् गृहीताभिरद्भिरेनं स्नापयेयुर्ज्ञातयः। "अथास्मै तत्पात्रं दद्युः, तत्संप्रतिगृह्य जपेत्, शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तमिमं गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कूश्माण्डैश्चाज्यं जुहुयात्। हिरण्यं ब्राह्मणाय दद्यात् गां वाचार्याय च"; "एतदेव शान्त्युदकं सर्वेषूप-

[1] पात्राद्धृताभिः—घ.

पातकेषु" इति । अत्र वसिष्ठः—"अभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातः" इति । पूर्वोक्ताभिषेकानन्तरं पुत्रजन्मवत् जातकर्माद्युपनयनान्तैः संस्कारैः संस्कार्य इत्यर्थः । योगीश्वरस्तु अन्यथाह—

"चरितव्रत आयाते निनयेरन्नवं घटम् ।
जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः ॥"
"घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् ।
प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥"

इति । गोभिः संस्कारमाह हारीतः—"स्वशिरसा यवसमादाय गोभ्यो दद्यात् । यदि ताः प्रतिगृह्णीयुरथैनं[1] प्रवर्तयेयुः" इति । यद्युपबन्धात् अन्यथा नेति सिद्धम् । तदा च पुनः प्रायश्चित्ताचरणमर्थसिद्धमेव । एतानिति पुंस्त्वाविवक्षया स्त्रीणामप्येतत् देयम् । यथाह योगीश्वरः—

"पतितानामेष एव स्त्रीणां चैव [2]विधिः स्मृतः ।
वासो गृहान्तिके देयमन्नं वासः सरक्षणम् ॥"

इति । त्यक्तानामपि वासादिदानं विशेषः । स्त्रीणां पातित्यहेत्वन्तरमप्याह स एव—

"नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥"

इति । आत्यन्तिकत्याज्या आह वसिष्ठः—

"चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥"

इति ॥ ३१ ॥

**बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।**
**शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ॥ ३२ ॥**

कृतनिर्णेजनान्न जुगुप्सेतेत्यस्यापवादमाह । बालः ऊनषोडशवर्षः; तं घ्नन्तीति बालघ्नाः । कृतमुपकारं घ्नन्त्यपकारेण नाशयन्ति, ते कृतघ्नाः । शरणागतं स्त्रियं च ये घ्नन्ति, तान् धर्मतः धर्मशास्त्रोक्तप्रायश्चित्तेन शुद्धानपि न संवसेत् न व्यवहरेदिति वाचनिकोऽयं निषेधः[3] । जातिगुणविशेषानादरेणैतत्; बालादिसामान्योपादानात्, विशेषविवक्षायां प्रमाणाभावाच्च ॥ ३२ ॥

**अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।**
**प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च ॥ ३३ ॥**

[1] अथो तं—घ. [2] प्रकीर्तितः—ग. [3] प्रतिषेधः—ख, ग.

उक्तप्रायश्चित्तस्याधिकारिविशेषेऽर्धतामाह। अशीत्यब्दो वृद्धः, ऊनषोडशो बालः, स्त्री रोगी चेत्येते जातिविशेषानादरेणोक्तप्रायश्चित्तार्धमर्हन्ति। द्वादशाब्दादौ षडब्दादीनीति सर्वत्र कल्प्यम्। ऊनषोडशोऽप्युपनीतः; अनुपनीतस्य "पादो बालस्य दातव्यः सर्वपापेष्वयं विधिः" इति **स्मरणात्**। स्त्रियोऽपि युवत्यः। बालवृद्धयोस्तु पादः;

"अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव वा।
अर्धमेव भवेत् पुंसां तुरीयं तत्र योषिताम्॥"

इति **स्मरणात्**। वर्णविशेषेणाप्यर्धादिकल्पनं **चतुर्विंशतिमते**—

"प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः।
पादोनं क्षत्रियः कुर्यादर्धं वैश्यः समाचरेत्।
शूद्रः समाचरेत् पादमशेषेष्वपि पाप्मसु॥"

इति। एतच्च प्रातिलोम्यानुष्ठितचतुर्विधसाहसातिरिक्तविषयम्; तत्र द्वैगुण्याद्यभिधानात्। यथाह **योगीश्वरः**—

"प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः।
वर्णानामनुलोम्येन तस्मादर्धार्धहानितः॥"

इति। विशेषान्तरं ब्रह्महत्याप्रायश्चित्तप्रकरण एवोक्तम्॥ ३३॥

**अनुक्तनिष्कृतीनां तु पापानामपनुत्तये।**
**शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत्॥ ३४॥**

**इति [1]श्रीविष्णुस्मृतौ चतुष्पञ्चाशत्तमोऽध्यायः**

ननूद्दिष्टानुद्दिष्टेषु येषु निमित्तेषु प्रायश्चित्तं नाभिहितं, तत्र कथमित्यत आह। उद्दिष्टानि पलाशदन्तधावनानि; तन्निषेधाभिधानात्। अनुद्दिष्टानि,

"क्षौरं च तीर्थयात्रां च श्राद्धभोजनमेव च।
मासात्तु सप्तमादूर्ध्वं वर्जयेद् गुर्विणीपतिः[2]॥"

इत्यादीनि; तन्निषेधानभिधानात्। तेषु पापेषु प्रायश्चित्तं प्रकल्पयेत्। कल्पना चेत्थम्—अत्राश्रुतं स्मृत्यन्तरादुपदिशेत्। तत्राश्रुतमुपपातकत्वादिसामान्यदर्शनेन तत्र तत्र सामान्यतो विहितमुपदिशेत्; "उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा" इत्यादि। यत्र तूपपातकत्वादिसामान्यमपि न निश्चीयते तद्गणेष्वपाठात्,

[1] वैष्णवधर्मशास्त्रे प्रकीर्णप्रायश्चित्तप्रकरणं चतुष्पञ्चाशम्—ज, ट.
[2] गर्भिणीपतिः—ख, ग.

यथा सपिण्डापरिणयादौ; तत्र सगोत्रसप्रवरादिपरिणयप्रायश्चित्तं कल्प्यम्; "असपिण्डामसमानार्षगोत्रजाम्[1]" इत्यादिनिषेधसामान्यात्। यत्र तु निषेधसामान्यमपि न दृश्यते, तत्र "प्राणायामशतं कार्यं सर्वपापापनुत्तये" इति कल्प्यम्। नन्वेतेषां व्रतानां प्रत्यक्षविधानादेव क्व कल्पनावसर इति चेत्; सत्यम्; तथापि विवक्षितविषयविशेषेषु विशेषतोऽनभिधानात् तत्तद्विशेषसिद्ध्यर्थमस्त्येव कल्पनावसर इति। न केवलं विषयविशेषेष्वेव कल्पना, किंतु शक्त्याद्यपेक्षयापि सा कार्या। द्वादशवार्षिकादिप्रायश्चित्तशक्तस्याप्यनुबन्धिविशेषात् पापतारतम्येणापि प्रायश्चित्तं कल्प्यम्। यथा—

"आत्मनश्च परित्राणे दक्षिणानां च संगरे।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति॥"

इत्यादावर्धं प्रायश्चित्तम्। चकारात् देशकालाद्यपेक्षया च;

"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः।
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः॥"

इति **योग**स्मरणात्॥ ३४॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[3]**श्रीरामपण्डिता**त्मज[3]**श्रीनन्दपण्डिता**परनामधेय**विनायकपण्डितकृतौ**[4] **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** चतुष्पञ्चाशत्तमोऽध्यायः

1 गोत्रप्रवराम्—ग.

2 From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.

3 श्री omitted in ग.

4 नन्दपण्डितकृतौ—ग.

## पञ्चपञ्चाशत्तमोऽध्यायः

**अथ रहस्यप्रायश्चित्तानि भवन्ति ॥ १ ॥**

द्विविधं पापम्—प्रकाशं रहस्यं च। प्रकाशं लोकविदितम्। रहस्यं कर्तृमात्रज्ञातम्। [1]तत्र प्रकाशे प्रायश्चित्तमुक्तम्। इदानीं रहस्ये तत् पञ्चपञ्चाशत्तमेनाह। अथ प्रकाशप्रायश्चित्ताभिधानानन्तरं रहस्यप्रायश्चित्तानि वक्तव्यानि भवन्ति;

"विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम्।
अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥"

इति **योगिस्मरणात्**। अनेन विख्यात एव दोषे पर्षदोऽङ्गत्वं, न रहस्ये इत्युक्तम्। तर्हि [2]पर्षदोऽभावे कथं तत् ज्ञेयमिति चेदुच्यते—कर्तुर्धर्मशास्त्रनैपुण्ये तत एव तज्ज्ञानसंभवः। तदनैपुण्येऽन्यापदेशेन विद्वत्प्रश्नादिति। ततश्च पर्षदभावे पर्षद्दक्षिणामात्रस्यैव लोपः, नाङ्गान्तरस्य। रहस्यत्वात् शुद्धिप्रकाशनमपि न ॥ १ ॥

**स्रवन्तीमासाद्य स्नातः प्रत्यहं षोडश प्राणायामान्[3] सलक्षणान् कृत्वैककालं हविष्याशी मासेन ब्रह्महा पूतो भवति ॥ २ ॥**

**कर्मणोऽन्ते पयस्विनीं गां[4] दद्यात् ॥ ३ ॥**

तत्र ब्रह्महत्यायामाह। स्रवन्ती नदी। तामासाद्य गत्वा तत्र स्नात्वा मासं प्रत्यहं षोडश प्राणायामान् सलक्षणान् कृत्वा एकवारमेव हविष्यभुक् ब्रह्महा शुध्यति। स्रवन्तीग्रहणात् तडागादिनिवृत्तिः। प्रत्यहमिति स्नानैककालाभ्यामपि संबध्यते। इदं नित्यस्नानात् पृथगेव कर्माङ्गं स्नानम् ॥ २ ॥

उक्तस्य कर्मणः समाप्तौ प्रचुरपयसं गां दद्यात्। अन्त इत्येव वक्तव्ये कर्मोपादानं वक्ष्यमाणकर्मस्वपि गोदानप्राप्त्यर्थम्, "गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी" इति **योगिस्मरणात्**। एभिः महापातकिभिः पृथक् प्रत्येकं गौर्देयेति। कामतश्चेदम्। अकामतो **मनुः**—

"सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥"

[1] तत्र omitted in घ.
[2] पर्षदभावे—ग.
[3] प्राणायामं कृत्वा एककालहविष्याशी—ज.
[4] गां omitted in ठ.

इति। अकामतोऽभ्यासे **गौतमः**—“तद्व्रत एव वा ब्रह्महत्यासुरापानस्तेयगुरुतल्पेषु प्राणायामैस्तान्तोऽघमर्षणं जपेत् सममश्वमेधावभृथेन” इति। “पयोव्रतो वा दशरात्रं घृतेन द्वितीयमद्भिस्तृतीयं दिवादिष्वेकभक्तिको जलक्लिन्नवासाः” इति पूर्वोक्तम्। यावद्भिः प्राणायामैः तान्तः क्लिष्टो भवति, तावतः कृत्वा अवशिष्टे काले अघमर्षणं जपेत्। मासमिति शेषः। तद्व्रतः पयोव्रतः। द्वितीयं दशरात्रम्। एवं तृतीयम्। दिवादिषु प्रातःकालेषु पयःप्रभृतीनामेकवारं भोजनम्। कामतोऽभ्यासे **मनुः**—

“महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः।
अभ्यस्याब्दं पावमानीर्भैक्ष्याहारो विशुध्यति॥”

इति। पित्रादिहनने **मनुः**—

“मन्त्रैः शाकलहोमीयैरब्दं कृत्वा घृतं द्विजः।
सुगुर्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम्॥”

इति। शाकलहोमीयाः “देवकृतस्यैनसः” इत्यादयोऽष्टौ मन्त्राः। नम इति “नम इदुग्रं नम आ विवासे” इत्यृक्। अनुग्राहकादिविषये **यमः**—

“त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः।
मुच्यते पातकैः सर्वैस्त्रिर्जप्त्वा[1] चाघमर्षणम्॥”

इति। निमित्तविशेषे **हारीतः**—“महापातकातिपातकोपपातकानामेकतमसंनिपाते चाघमर्षणमेव त्रिर्जपेत्” इति। एवमन्येष्वपि विषयविशेषेषूह्यम्॥ ३॥

## व्रतेनाघमर्षणेन [2]च सुरापः पूतो भवति॥ ४॥

क्रमप्राप्ते सुरापने आह। व्रतेन; ‘स्रवन्तीमासाद्य’ इत्यादिना ‘मासेन’ इत्यन्तेन। तेनात्रापि देशकालसंख्याशनानामुक्तानामेव प्राप्तिः। ततश्च नद्यां स्नातः अघमर्षणेन मासं प्रत्यहं षोडशवाराभ्यस्तेनैककालं हविष्याशी सुरापः पूतो भवति। अनुवृत्तावपि पुनः पूतत्ववचनमग्रेऽप्यनुषङ्गार्थम्। प्राणायामस्थानेऽत्राघमर्षणम्। तच्च जले स्थित्वा कार्यम्। तथाच [3]त्रिंशद्रात्रव्रतोपक्रमे **गौतमः**—“अन्तर्जले वाघमर्षणं त्रिरावर्तयन् सर्वपापेभ्यो विमुच्यते” इति। एतच्च पैष्ट्यादित्रिविधसुरापाने ज्ञेयम्। कामतश्चेदम्। अकामतो **योगीश्वरः**—“त्रिरात्रोपोषितो हुत्वा कूश्माण्डीभिर्घृतं शुचिः” इति। ‘सुरापोऽपि विशुध्यति’ इति शेषः। अकामतोऽभ्यासे [4]**मनुः**—

“कौत्सं जप्त्वाप इत्येतद्वासिष्ठं च प्रतीत्यृचम्।
माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुध्यति॥”

[1] जपित्वाघम—घ.
[2] च omitted in ज, ठ.
[3] त्रिंशद्रात्रव्रतो भवति—घ.
[4] सुमन्तुः—घ.

इति । मासं षोडशवारं प्रत्यहम् " अप नः शोशुचदघम् " इति कौत्सम् । " प्रतिस्तोमेभिरुषसं वसिष्ठाः " इति वासिष्ठम् । " महित्रीणामवोऽस्तु " इति माहित्रम् । " एतो न्विन्द्रं स्तवाम " इति शुद्धवत्यश्चेत्येतानि समुच्चितानि जप्त्वा शुध्यति । कामतोऽभ्यासे " महापातकसंयुक्तः " इत्यब्दं पावमानीजपः ॥ ४ ॥

## गायत्रीदशसाहस्रजपेन[1] सुवर्णस्तेयकृत् ॥ ५ ॥

सुवर्णस्तेये आह । 'व्रतेन' इत्यत्रापि संबध्यते । ततश्च नद्यां स्नातः हविष्यभुक् मासं प्रत्यहं दशभिरधिकेन सहस्रगायत्रीजपेन सुवर्णस्तेयकृत् पूयते । तथाच त्रिंशद्रात्रव्रतोपक्रमे **गौतमः**—" [2]गायत्रीं वा सहस्रकृत्व आवर्तयेत् पुनीते हैवात्मानम् " इति । वक्ष्यति च 'सहस्रकृत्वस्त्वभ्यस्य' इति । यद्वा 'त्रिरात्रोपोषितः' इत्यग्रेतनेन संबन्धात् त्रिरात्रमुपोष्य प्रत्यहं दशसाहस्रगायत्रीजपेन सुवर्णस्तेयकृत् पूतो भवतीति । कामतश्चेदम् । अकामतो **मनुः**—

" सकृज्जप्त्वास्यवामीयं शिवसंकल्पमेव च ।
सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः ॥ "

इति । " अस्य वामस्य पलितस्य होतुः " इति द्विपञ्चाशदृचं सूक्तम् अस्यवामीयम् । " यज्जाग्रतो दूरमुदेति दैवम् " इति षडृचं शिवसंकल्पम् । अकामतोऽभ्यासे **गौतमीयं** त्रिंशद्रात्रं व्रतपूर्वकं प्राणायामाघमर्षणजपात्मकम् । कामतोऽभ्यासे " महापातसंयुक्तः " इत्यब्दं पावमानीजपः ॥ ५ ॥

## त्रिरात्रोपोषितः [3]पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः ॥ ६ ॥

गुरुतल्पगमने आह । त्रिरात्रविधानात् मासमात्रनिवृत्तिः, न प्रत्यहादेः । " पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् " इति **यम**विहितावृत्तौ संख्यापेक्षायां पूर्वोक्ता । षोडशर्चेन तेनैव हुत्वा गुरुतल्पगः पूयते । कामतश्चेदम् । अकामतो **मनुः**—

" हविष्पान्तीयमभ्यस्य न तमंह इतीति च ।
जप्त्वा च पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥ "

इति । " हविष्पान्तमजरं स्वर्विदि " इति हविष्पान्तीयम् । " न तमंहो न दुरितम् " इति न तमंहः । " इति वा इति मे मनः " इति इतीति । " सहस्रशीर्षा " इति पौरुषम् । अभ्यासः त्रिरात्रं त्रिवारम् । अकामतोऽभ्यासे **गौतमीयं**—" मासं प्राणायामैस्तान्तोऽघमर्षणं जपेत् " इति ज्ञेयम् । कामतोऽभ्यासे " महापातकसंयुक्तः " इति **मानवो**ऽब्दं पावमानीजपः । इदं च सवर्णसपत्नमातृगमने । साक्षान्मातृगमने तु **षट्त्रिंशन्मते**—

" महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना ।
महापातकसंयोगे लक्षहोमेन शुध्यति ॥ "

[1] च added in ठ. [2] सावित्रीं—ग, घ. [3] पौरुषसूक्तस्य जप्य—ठ,

इति । महापातकशब्दोऽत्र अतिपातकपरः ; प्रायश्चित्तस्यातिगुरुत्वात् । असवर्णमातृगमने तु **यमः**—

" जपेद्वाप्यस्यवामीयं पावमानीरथापि वा ।
कुन्तापं वालखिल्यांश्च निवित्प्रैषान् वृषाकपिम् ।
होतॄन् रुद्रान् सकृज्जप्त्वा मुच्यते सर्वपातकैः ॥ "

इति । कुन्तापम् " इदं जना उपश्रुत " इत्यादयः । वालखिल्याः " अभि प्र वः सुराधसम् " इत्यादयः । निविदः " अग्निर्देवेद्धः " इत्यादयः । प्रैषाः " होता यक्षदग्निं समिधा " इत्यादयः । वृषाकपिः " वि हि सोतोरसृक्षत " इत्यादि सूक्तं त्रयोविंशर्चम् । होतारः पञ्च ; पृथिवी होतेति चतुर्होता ; अग्निर्होतेति पञ्चहोता ; वाग्घोतेति षड्ढोता ; महाहविर्होतेति सप्तहोता ; चित्तिः स्रुक् चित्तमाज्यमिति दशहोता । रुद्राः रुद्रानुवाकाः " नमस्ते रुद्र " इत्यादयः । संसर्गिप्रायश्चित्तमाह **मनुः**—

" यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात् तत्संसर्गविशुद्धये ॥ "

इति । महापातकसंसर्गेष्वपि महापातकोक्तमेव ; ' अनुपातकिनस्त्वेते महापातकिनो यथा ' इति महापातकसाम्यात् ; ' अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा ' इति प्रायश्चित्ततौल्याच्च ॥ ६ ॥

**यथाश्वमेधः क्रतुराट् सर्वपापापनोदकः[1] ।**
**तथाघमर्षणं सूक्तं सर्वपापापनोदकम्[2] ॥ ७ ॥**

उपपातकादिष्वाह । " तरति सर्वं पाप्मानं तरति भ्रूणहत्यां योऽश्वमेधेन यजते[3] " इति श्रुत्या अश्वमेधस्य यथा सर्वपापापनोदकत्वं, तथा अघमर्षणः ऋषिः " ऋतं च सत्यम् " इति सूक्तस्यापि सर्वपापापनोदकत्वमध्यवसेयम् ; सर्वपातकेषु[4] विनियोगदर्शनात् । यथाह **बोधायनः**—" ग्रामात् प्राचीं वोदीचीं दिशमुपनिष्क्रम्य स्नातः [5]शुचिवासा उदकान्ते स्थण्डिलमुपलिप्यासकृत् क्लिन्नवासाः सकृत् पूर्णेन पाणिना आदित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत ; प्रातः शतं मध्याह्ने शतमपराह्णे शतमपरिमितं वा ; उदितेषु नक्षत्रेषु प्रसृतयावकं प्राश्नीयात् ; ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात् प्रमुच्यते ; द्वादशरात्रात् महापातकेभ्यो ब्रह्महत्यां सुवर्णस्तैन्यं सुरापानमिति वर्जयित्वा ; एकविंशतिरात्रेण तान्यपि तरति " इति । **षट्त्रिंशन्मते**—

" महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना ।
उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ "

[1] नोदनः—ज, ठ. [2] नोदनम्—ज, ठ. [3] यजति—घ.
[4] पातके—ग. [5] शुचिः शुचिवासाः—ग.

इति । संकरीकरणादिषु **यमः**—

" [1]त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः ।
मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाघमर्षणम् ॥ "

इति ॥ ७ ॥

**प्राणायामं द्विजः कुर्यात् सर्वपापापनुत्तये ।**
**दह्यन्ते सर्वपापानि प्राणायामैर्द्विजस्य तु ॥ ८ ॥**

प्रायश्चित्तान्तरमाह । सर्वेष्वपि पापेषु द्विजः प्राणायामं कुर्यात् ; प्राणायामानां सर्वपापदाहकत्वात् । तदुक्तं **कौर्मे**—

" दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणविसंयमात् ॥ "

इति । पापविशेषे संख्याविशेषो **बोधायनोक्तः**—" अपि वाक्चक्षुःश्रोत्रत्वग्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति ; शूद्रस्त्रीगमनान्नभोजनेषु पृथक् सप्ताहं [2]सप्त सप्त प्राणायामान् धारयेत ; अभक्ष्याभोज्यामेध्याशनेषु तथा चापण्यविक्रयेषु मधुमांसघृततैलक्षाक्षालवणरसान्नवर्जितेषु यच्चान्यदप्येवं युक्तं स्यात् द्वादशाहं द्वादश द्वादश प्राणायामान् धारयेत् । अथ [3]पातकोपपातकवर्जं यच्चान्यदप्येवं युक्तं स्यात् अर्धमासं [4]द्वादश द्वादश प्राणायामान् धारयेत् । अथ पातकपतनीयवर्जं यच्चान्यदप्येवं युक्तं स्यान्मासं द्वादश द्वादश प्राणायामान् धारयेत् । अथ पातकवर्जं यच्चाप्यन्यदेवं युक्तं स्यात् [5]द्वादशार्धमासान् द्वादश द्वादश प्राणायामान् धारयेत् । अथ पातकेषु संवत्सरं द्वादश द्वादश प्राणायामान् धारयेत् । अथातिपातकेषु द्विसंवत्सरं द्वादश द्वादश प्राणायामान् धारयेत् " इति । अस्यार्थः—वागादिव्यतिक्रमेषु प्रकीर्णकेषु त्रयः प्राणायामाः ; शूद्रस्त्रीगमनाद्युपपातकेष्वेकोनपञ्चाशत् प्राणायामाः ; अभक्ष्यभक्षणापण्यविक्रयाद्युपपातकेषु चतुश्चत्वारिंशदधिकशतं प्राणायामाः ; पातकोपपातकवर्जितेषु जातिभ्रंशकरादिषु चतुर्षु साशीतिशतं प्राणायामाः ; पातकपतनीयवर्जितेषु गोवधादिषु षष्ट्यधिकशतत्रयं प्राणायामाः ; पातकवर्जितेषु महापातकन्यूनेष्वनुपातकेषु षष्ट्यधिकशतसहितद्विसहस्रं प्राणायामाः ; पातकेषु महापातकेषु विंशत्यधिकशतत्रययुक्तचतुःसहस्रं प्राणायामाः ; अतिपातकेषु तु[6] महापातकाधिकेषु चत्वारिंशदधिकषट्शतयुक्ताष्टसहस्रं प्राणायामाः कर्तव्या इति । उक्तातिरिक्तेषूपपातकेषु तु शतं प्राणायामाः ;

[1] त्र्यहे—घ.
[2] सप्त प्रणायामान्—ग.
[3] पातक omitted in घ.
[4] द्वादश प्राणायामान्—घ.
[5] द्वादश मासान्—घ.
[6] तु omitted in घ.

" प्राणायामशतं कार्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥ "

इति योगिस्मरणात् ।

**सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।**
**[1]त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ ९ ॥**

प्राणायामलक्षणमाह । व्याहृतयः भूराद्याः सप्त । प्रणवः ओंकारः । तदुभयोपेताम् ; " ओमापो ज्योती रसोऽमृतम् " इत्यादिशिरसा युक्तां गायत्रीं " तत् सवितुर्वरेण्यम् " इत्यादिकां [2]मुखनासिकासंचारिणं वायुं निरुध्य त्रिः पठेत् । स प्राणायामः । यद्यप्यत्र गायत्र्या एव प्रणवयोगः श्रूयते, न व्याहृतिशिरसोः, तथापि शिरसा व्याहृतिभिः सह सप्रणवाम् इति विशिष्टान्वयेन त्रिष्वपि प्रणवान्वयः सिध्यति । अत एव शङ्खः—" आयतप्राणः सप्रणवसप्तव्याहृतीः " इति ॥ ९ ॥

**अकारं चाप्युकारं च मकारं च प्रजापतिः ।**
**वेदत्रयान्निरदुहद् भूर्भुवः स्वरितीति च ॥ १० ॥**

तामाह । ऐतरेयब्राह्मणे ; " प्रजापतिरकामयत " इत्युपक्रम्य, त्रयाणां लोकानां तेभ्यस्त्रयाणां देवानामग्निवायुसूर्याणां तेभ्यस्त्रयाणां वेदानामृग्यजुःसाम्नां तेभ्यस्तिसृणां भूर्भुवः स्वरिति व्याहृतीनां ताभ्यस्त्रयाणां वर्णानामकारोकारमकाराणामुत्पत्तिमभिधाय ; " तानेकधा समभरत् तदेतदोम् " इति व्याहृतिप्रणवोत्पत्तिरभिहिता । तदभिप्रेत्याह । प्रजापतिस्त्रिभ्यो वेदेभ्यः ऋग्यजुःसामभ्यो भूर्भुवः स्वरिति तिस्रो व्याहृतीः, ताभ्यश्च प्रणवावयवान् अकारोकारमकारान् निरदुहत् सारभूतान् दुग्धवत् निश्चकर्ष । इतिकारान्तरं महर्जनस्तपः सत्यमिति व्याहृत्यन्तरसूचनाय ॥ १० ॥

**त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।**
**तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ ११ ॥**

जपयज्ञविध्यर्थं[3] गायत्रीं प्रशंसति । परमे ब्रह्मणि तिष्ठतीति परमेष्ठी प्रजापतिः परमात्मा, सावित्र्याः सवितृदेवताकायाः " तत् सवितुर्वरेण्यम् " इत्यस्याः ऋचः त्रीनपि पादान् त्रिभ्यो वेदेभ्यः ऋगादिभ्यः अदूदुहत् दोहयामास हिरण्यगर्भेण । यद्यपि प्रतीकदेवते " तत् सवितुर्वृणीमहे " इत्यस्या अपि समाने, तथापि वेदत्रयात् पादत्रयाभिधानोपक्रमात् ' त्रिपदा चैव ' इत्युपसंहाराच्च तद्व्युदासेन प्रसिद्धाया एव ग्रहणम् ॥ ११ ॥

[1] त्रिर्जपेत्—घ. [2] मुखनासा—ख. [3] सिद्धयर्थं—घ.

**एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ।**
**[1]संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ १२ ॥**

प्रणवादित्रिकस्य प्रसङ्गात् नित्यजपे विनियोगमाह । एतत् पूर्वोक्तं प्रणवाख्यमक्षरम्; न क्षरतीत्यक्षरम्, कूटस्थनित्यम् । एताम् अनुपदोक्तां 'तत्' इत्यृचं च । व्याहृतयः भूराद्याः पूर्वे यस्याः तादृशीं पूर्वापरयोः संध्ययोर्जपन् विप्रः अनधीतवेदोऽपि वेदविद्भवति । गायत्र्युपदेशकालानन्तरं कालान्तरे वेदाध्ययनोपक्रमात् तत ऊर्ध्वं गायत्रीजपस्य वेदप्राप्तिरेव फलम् । ततश्च वेदविदोऽयं गायत्रीजपविधिरिति निरस्तम् । गायत्रीजपेन वेदप्राप्तौ हेतुमाह । वेदानां त्रयाणामप्यध्ययनेन यत् पुण्यं तेन युज्यते; त्रयीसारत्वात् गायत्र्याः । अनेन 'सप्रणवव्याहृतिकां गायत्रीं जपेत्' इति विधिः कल्पनीयः । इदं च नित्यजपस्यानुषङ्गिकं फलम् ॥ १२ ॥

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः ।**
**महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते ॥ १३ ॥**

फलान्तरमाह । मासं ग्रामाद् बहिः सप्रणवव्याहृतिकां गायत्रीं सहस्रसंख्यया जप्त्वा महापातकात्, अपिशब्दात् उपपातकादेश्च, सर्प इव जीर्णत्वचा विमुच्यते ॥ १३ ॥

**[2]एतत्त्रयविसंयुक्तः काले च क्रियया स्वया ।**
**[3]विप्रक्षत्रियविड्जातिर्गर्हणां याति साधुषु ॥ १४ ॥**

गायत्र्या जपस्य नित्यत्वे प्रमाणमाह । यः त्रैवर्णिकः गायत्र्यादित्रिकं न जानाति, जानन्नपि वा संध्याकाले स्वां क्रियां गायत्रीजपरूपां न करोति, स साधुषु वैदिकेषु गर्हणां निन्दां प्राप्नोति । यद्वा— साधुषु श्रौतस्मार्तकर्मसु गर्हणाम् । एतयर्चा इति मानवः पाठः ॥ १४ ॥

**ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः[4] ।**
**त्रिपदा चैव [5]गायत्री [6]विज्ञेया ब्रह्मणो मुखम् ॥ १५ ॥**

अस्यैव त्रिकस्य वेदाध्ययनाङ्गत्वमप्याह । प्रणवपूर्विकाः तिस्रो व्याहृतयः गायत्री च ब्रह्मणो वेदस्य मुखम्; आदौ प्रयोज्यत्वात् । तदाह **आश्वलायनः**—"ओंपूर्वा व्याहृतयः सावित्रीं च त्रिरभ्यस्य वेदादि-

[1] संध्ययोरुभयोः—ज, ठ. [2] एतयर्चा—ठ. [3] विप्रक्षत्रियविड्योनिः—ठ.
[4] यथा—घ. [5] सावित्री—घ. [6] विज्ञेयं—ठ.

मारभेत्" इति। तिस्र इति सप्तानां निरासः। अन्यथा इति गायत्र्यप्रयोगेऽपि व्याहृतय एव प्रयोज्या इत्येवमर्थम्। यथाह **योगीश्वरः**—

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥"

इति। गायत्र्याः त्रिपदात्वे सिद्धे पुनर्वचनं संन्यासिजप्यस्य "परो रजसे सावदोम्" इति चतुर्थपादस्य निरासार्थम्॥ १५॥

**योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः।**
**स ब्रह्म परमभ्येति वायुभूतः [1]खमूर्तिमान्॥ १६॥**

गायत्रीजपस्य मोक्षफलकतामाह। यः वर्षत्रयम् अतन्द्रितः अनलसः प्रत्यहं प्रणवव्याहृतिपूर्विकां गायत्रीं सहस्रकृत्वो जपति स वायुभूतः दृश्यरूपरहितः कामचारी खमूर्तिमान् आकाशवत् निर्लेपः लिङ्गशरीरनाशेन शुद्धस्वरूपः; "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतेः; परं ब्रह्माभ्येति॥ १६॥

**एकाक्षरं परं ब्रह्म [2]प्राणायामाः परं तपः।**
**सावित्र्यास्तु परं [3]नान्यन्मौनात् सत्यं विशिष्यते॥ १७॥**

प्रणवादित्रयार्थवादमाह। एकाक्षरं ब्रह्म प्रणवः। स सर्वेभ्योऽपि वेदेभ्यः पर उत्कृष्टः; सर्ववेदमूलत्वात्। प्राणायामाः पूर्वोक्ताः कृच्छ्रादिभ्यः परम् उत्कृष्टं तपः; सर्वकर्माङ्गत्वात्। सावित्र्याः पूर्वोक्तायाः परम् उत्कृष्टम् अन्यत् नास्ति; वेदमातृत्वात्। मौनात् वाक्संयमात् सत्यम् अवितथभाषणं विशिष्यते विशिष्टफलकं भवति, "न सत्यात् परमो धर्मो नानृतात् पातकं परम्" इति **स्मरणात्**॥ १७॥

**क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः।**
**अक्षरं त्वक्षरं ज्ञेयं ब्रह्मा[4] चैव प्रजापतिः॥ १८॥**

प्रणवेऽक्षरपदप्रवृत्तौ निमित्तमाह। श्रुतिस्मृतिविहिताः यागदानहोमजपादिक्रियाः स्वस्वफलं जनयित्वा नश्यन्ति। फलानि च तासां स्वर्गादीनि तत्तत्सुकृतोपरमे विरमन्तीति क्षराः। अक्षरम्; प्रणवस्तु कूटस्थनित्यतया, तज्जपफलं च ब्रह्मैक्यतया न क्षरतीत्यक्षर ब्रह्मैव ज्ञेयम्। तथा ब्रह्मा स्रष्टा। प्रजाः पातीति प्रजापतिः विष्णुः। चकारात् रुद्रश्च। प्रणवस्तद्वाचकः; अकारोकारमकारात्मकत्वात्। ततश्च प्रणवेन ब्रह्माद्यन्यतम-

[1] खमूर्तिमान्—घ; स मूर्तिमान्—ठ.
[2] प्राणायामः—ठ.
[3] नास्ति—ज, ठ.
[4] ब्रह्म—ठ.

सगुणस्वरूपोपासने तत्तत्स्वरूपावाप्तिरेव फलम्। निर्गुणोपासने तु कैवल्यमित्युभयमप्यक्षरब्रह्मादिविशेषणाभ्यामभिहितम्। ब्रह्मेति नपुंसकलिङ्गपाठे तु चशब्दो हेतौ। यस्मात् प्रणवः ब्रह्म अभिव्यापकतया ब्रह्मप्रापकतया च। प्रजानां सर्गस्थितिसंहारहेतुत्वेन पतिः स्वामिभूतं ब्रह्मैवेत्यर्थः॥ १८॥

**विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः।**
**उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः॥ १९॥**

उक्तस्य जपविधेरर्थवादपूर्वकं फलविशेषाय गुणविशेषमाह। विधीयन्त इति विधयः द्रव्यदेवतामन्त्रेतिकर्तव्यतादयः; तन्मयो यज्ञः विधियज्ञः, ज्योतिष्टोमादिः। तस्मात् यथाकथंचित् क्रियमाणोऽपि जपयज्ञः दशगुणाधिको भवति। स एव "करणवदशब्दममनःप्रयोगमुपांशु" इत्युपांशु क्रियमाणः तस्माच्छतगुणाधिकः। स एव मनसा क्रियमाणः तस्मात् सहस्रगुणाधिकः स्मृतः पूर्वैः॥ १९॥

**ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः।**
**ते सर्वे जपयज्ञस्य कलां नार्हन्ति षोडशीम्॥ २०॥**

विधियज्ञाज्जपयज्ञाधिक्ये हेतुमाह। ये अहरहःसंपद्यमानसूनापञ्चकोत्पन्नदुरितनिवर्तकतया पाकाः प्रशस्ताः ब्रह्मयज्ञान्विताः चत्वारः देवभूतपितृमनुष्ययज्ञाः विधियज्ञैरुक्तलक्षणैः ज्योतिष्टोमादिभिः सहिताः, सर्वे जपयज्ञस्य षोडशांशसमाना अपि न भवन्ति; अन्येषां विनश्वरस्वर्गादिफलकत्वात्; अस्य च ब्रह्मसायुज्यफलकत्वात्। ब्रह्मयज्ञस्य पाकयज्ञत्वेऽपि जपयज्ञत्वेन पृथग्भावः [1]फलान्तरसंयोगार्थः॥ २०॥

**जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥ २१॥**

इति [2]श्रीविष्णुस्मृतौ पञ्चपञ्चाशत्तमोऽध्यायः

तदेवाह। जप्यशब्दो लक्षणया जपक्रियामाह। एवकारो विधियज्ञव्यावृत्त्यर्थः। तेन तन्निरपेक्षस्यैव साधनत्वं चित्तशुद्धौ। न मोक्षे; "ज्ञानादेव तु कैवल्यम्" इति श्रुतेः। कः पुनर्ब्राह्मण इत्यत्राह—मैत्र इति। ब्राह्मणस्यासाधरणो धर्मो मैत्री स्वाभाविकः प्राणिमात्रे अद्वेषः। तद्वान् ब्राह्मणः। स पुनः अन्यत् ब्राह्मणाभिव्यञ्जकं वैदिकं कर्म करोतु, मा वा। नात्राद्वेषमात्रं ब्राह्मणलक्षणम्; क्षत्रियादिष्वपि संभवात्। स्वाभाविकाद्वेषस्य तु ब्राह्मणमात्रनिष्ठत्वात् स्वाभाविकी मैत्री ब्राह्मणलक्षणम्। यस्तु क्षत्रियादिष्वप्यद्वेषः,

[1] अन्तर omitted in घ.    [2] वैष्णवे धर्मशास्त्रे रहस्यप्रायश्चित्तप्रकरणं पञ्चपञ्चाशम्—ज, ठ.

स प्राक्तनशुभकर्मजन्य इति न स्वाभाविकः। योऽपि ब्राह्मणेषु द्वेषः, सोऽपि प्राक्तनाशुभकर्मजन्य इति न क्वापि अव्याप्त्यतिव्याप्तिप्रसङ्ग इति सिद्धम्। स्वाभाविकत्वं च ब्राह्मण्यारम्भकगुणविशेषत्वम्। यद्वा जपादिकमप्यन्यत् वैदिकं नित्यनैमित्तिकादि करोतु, न करोतु वा। अन्यथापि मैत्रत्वेन श्रौतस्मार्तयज्ञार्थ-पशुबीजाद्यहिंस्रत्वेनैव ब्राह्मणो ब्रह्मसंबन्धीत्युच्यते ॥ २१ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डिता**त्मज-**श्रीनन्दपण्डितकृतौ**[3] **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां**

पञ्चपञ्चाशत्तमोऽध्यायः

[1] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.

[2] श्री omitted in ग.

[3] नन्दपण्डितापरनामधेयविनायकपण्डितकृतौ—ग.

## षट्पञ्चाशत्तमोऽध्यायः

**[1]अथातः सर्ववेदपवित्राणि भवन्ति ॥ १ ॥ येषां जप्यैश्च होमैश्च द्विजातयः पापेभ्यः पूयन्ते ॥ २ ॥**

एवं रहस्यप्रायश्चित्तान्युक्त्वा तत्रापेक्षितानि सूक्तादीनि षट्पञ्चाशत्तमेनाह । अथ रहस्यप्रायश्चित्तोक्त्यनन्तरं यतस्तत्रापेक्षितानि, अतः सर्वेषु चतुर्ष्वपि वेदेषु यानि पवित्राणि सूक्तादीनि तानि वक्तव्यानि भवन्ति ॥ १ ॥ तत्प्रयोजनमाह । येषां सूक्तादीनां जपैः होमैश्च त्रैवर्णिकाः पापेभ्यो मुच्यन्ते ॥ २ ॥

**[2]अघमर्षणम् ॥ ३ ॥ देवकृतम् ॥ ४ ॥ शुद्धवत्यः ॥ ५ ॥ तरत्समन्दीयम् ॥ ६ ॥ कूश्माण्ड्यः ॥ ७ ॥ पावमान्यः ॥ ८ ॥ दुर्गासावित्री ॥ ९ ॥ [3]अतीषङ्गाः ॥ १० ॥ पदस्तोमाः[4] ॥ ११ ॥ [5]सामानि व्याहृतयः[6] ॥ १२ ॥ भारुण्डानि ॥ १३ ॥ चन्द्रसाम ॥ १४ ॥ [7]पुरुषव्रते सामनी ॥ १५ ॥**

तान्याह । "ऋतं च सत्यं च" इति तृचमघमर्षणाख्यम् ॥ ३ ॥ "देवकृतस्यैनसोऽवयजनमसि" इत्यादयो मन्त्राः ॥ ४ ॥ "एतो न्विन्द्रं स्तवाम" इति तृचं सूक्तम् ॥ ५ ॥ "तरत्समन्दी धावति" इति चतुर्ऋचम् ॥ ६ ॥ "यद्देवा देवहेडनम्" इत्यनुवाकत्रयम् ॥ ७ ॥ "पावमानीः स्वस्त्ययनीः" इत्यादिकाः ॥ ८ ॥ "जातवेदसे सुनवाम सोमम्" इत्येषा ऋक् ॥ ९ ॥ "पुरोजिती वो अन्धसः" इति सामत्रयम् ॥ १० ॥ अष्टेडादिसामचतुष्टयं "धर्ता दिवः पवते" इत्यस्यामृचि गीयमानम् ॥ ११ ॥ व्याहृतिसामानि भूरादीनि पञ्च ॥ १२ ॥ "यत्ते कृष्णः शकुन आ तुतोद पिपीलः सर्पः" इत्यादीन्येकविंशतिसंख्याकानि सामानि [8]राणायनानां प्रसिद्धानि ॥ १३ ॥ "अत्राह गोरमन्वत" इत्यस्यामृचि गीयमानं चन्द्रसाम ॥ १४ ॥ "सहस्रशीर्षा पुरुषः" "त्रिपादूर्ध्व उदैत्" इत्येतयोर्गीयमाने सामनी ॥ १५ ॥

[1] अतः omitted in घ, च.
[2] अघमर्षणार्षकम्—ख.
[3] अभिषङ्गाः—ठ.
[4] पदस्तोमाः—ठ.
[5] सामानि omitted in ज, ठ.
[6] व्याहृतयः and Sūtra 13 omitted in ख.
[7] पुरुषव्रतम् । देवव्रतम् । भासम् । अब्लिङ्गाः—ज, ठ.
[8] सामगानाम्—घ; सामगानां राणायनानां—च.

**अग्लिङ्गम् ॥ १६ ॥ बार्हस्पत्यम्[1] ॥ १७ ॥ गोसूक्तम् ॥ १८ ॥ अश्वसूक्तम् ॥ १९ ॥ [2]सामनी चन्द्रसूक्ते च ॥ २० ॥ शतरुद्रियम्[3] ॥ २१ ॥ अथर्वशिरः ॥ २२ ॥ त्रिसुपर्णम् ॥ २३ ॥ महाव्रतम् ॥ २४ ॥ नारायणीयम् ॥ २५ ॥ पुरुषसूक्तं च[4] ॥ २६ ॥**

"आपो हि ष्ठा" इत्यृचि गीयमानम् ॥ १६ ॥ "सोमं राजानं वरुणम्" इत्यस्यां गीयमानम् ॥ १७ ॥ "यदिन्द्राहं यथा त्वमीशीय वस्व" इत्यस्यामृचि गीयमानं साम ॥ १८ ॥ इदमपि तस्यामेव गीयमानं साम ॥ १९ ॥ "एतो न्विन्द्रं स्तवाम" इत्यस्यामृचि गीयमाने। चकारात् गायत्ररैवते ग्राह्ये। "गायत्रं रैवतं तथा" इति वासिष्ठात्। गायत्रम्; "तत् सवितुर्वरेण्यम्" इत्यस्यां गीयमानम्। "रेवतीर्नः सधमादः" इत्यस्यां गीयमानं रैवतम् ॥ २० ॥ "नमस्ते रुद्र मन्यवे" इत्येकादशानुवाकाः तैत्तिरीयप्रसिद्धाः ॥ २१ ॥ "ब्रह्मा देवानां प्रथमः संबभूव" इत्यादि ॥ २२ ॥ "ब्रह्म मेतु माम्, मधु मेतु माम्" इत्याद्यनुवाकत्रयं तैत्तिरीयप्रसिद्धम् ॥ २३ ॥ "सोमं राजानम्" इत्यस्यां गीयमानं साम ॥ २४ ॥ **नारायणोपनिषत्** तैत्तिरीयप्रसिद्धा "अम्भस्य पारे भुवनस्य मध्ये" इत्यादिः ॥ २५ ॥ "सहस्रशीर्षा पुरुषः" इति षोडशर्चं सूक्तम्। चकारात् वाक्सूक्तमध्वृचां ग्रहणम्। "वाक्सूक्तं मध्वृचस्तथा" इति **वासिष्ठात्**। वाक्सूक्तम्; "बृहस्पते प्रथमं वाचो अग्रम्" इति बह्वृचप्रसिद्धम्। मध्वृचः; "मधु वाता ऋतायते" इति तिस्रः ॥ २६ ॥

**त्रीण्याज्यदोहानि रथन्तरं च**
**अग्निव्रतं वामदेव्यं बृहच्च।**
**[5]एतानि गीतानि पुनाति जन्तून्**
**जातिस्मरत्वं लभते यदीच्छेत्[6] ॥ २७ ॥**

**इति [7]श्रीविष्णुस्मृतौ षट्पञ्चाशत्तमोऽध्यायः**

[1] वाक्सूक्तम् added in ठ.
[2] मध्वृचः। ऐन्द्रशुद्धे सामनी—ज, ठ; सामनी चेन्द्रशुद्धे—ख, ग.
[3] शतरुद्रीयम्—घ.
[4] च omitted in ज, ठ.
[5] एतान्यधीतानि—च, ठ.
[6] य इच्छेत्—ज, ठ.
[7] वैष्णवे धर्मशास्त्रे विशुद्धीकरणं प्रकरणं षट्पञ्चाशम्—ज; वैष्णवे धर्मशास्त्रे पवित्रीकरणं षट्पञ्चाशं प्रकरणम्—ठ.

"मूर्धानं दिवो अरतिं पृथिव्याम्" इत्यस्यामृचि गीयमानं सामत्रयमाज्यदोहानि। "अभि त्वा शूर नो नुमः" इत्यस्यामुत्पन्नं रथन्तरम्। अग्निव्रतम्; "अग्निर्मूर्धा दिवः ककुत्" इत्यस्यामुत्पन्नं साम। वामदेव्यम्; "कया नश्चित्र आ भुवत्" इत्यस्यामृच्युत्पन्नं साम। "त्वामिद्धि हवामहे" इत्यस्यामृच्युत्पन्नं बृहत्साम। एतेषां साम्नां गानं प्रस्तावादिनिधनान्ताभिः पञ्चभक्तिभिः; "पञ्चविधं सामोपासीत" इति श्रुतेः पापेभ्यः त्रैवर्णिकान् पुनन्तीति निमित्तसंयोगः। कामनायां जातिस्मरत्वं भवतीति कामसंयोगः ॥ २७॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
षट्पञ्चाशत्तमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां षट्पञ्चाशत्तमोऽध्यायः—घ, ज.

[2] श्री omitted in ग.

## सप्तपञ्चाशत्तमोऽध्यायः

**अथ त्याज्याः ॥ १ ॥ व्रात्याः ॥ २ ॥ पतिताः ॥ ३ ॥ [1]त्रिपुरुषं मातृतः पितृतश्चाशुद्धाः ॥ ४ ॥**

उक्ताः पातकिनो द्विविधाः—अनुतापिन , अननुतापिनश्च । तत्रानुतापिनां प्रायश्चित्तमुक्तम् । अननुतापिनां त्यागं सप्तपञ्चाशत्तमेनाह । अथ अनुतापिप्रायश्चित्ताभिधानानन्तरं[2] ये अननुतापेन प्रायश्चित्तानर्हाः, ते त्याज्याः अभिधीयन्ते ॥ १ ॥ तानाह । व्रात्याः पूर्वोक्ताः यथोक्तप्रायश्चित्ताकरणे त्याज्याः ॥ २ ॥ पतिताः ब्रह्महादय. पा...संयोजकान्ताः प्रागुक्ताः ॥ ३ ॥ मातृतः मातृदोषेण, पितृतः पितृदोषेण ये अशुद्धाः पातित्यादिदोषदुष्टमातृपितृतदवयवारब्धाः, ते त्याज्याः; "पतितोत्पन्नः पतितो भवति, अन्यत्र स्त्रियाः" इति **वसिष्ठस्मरणात्**; "स्वपित्रोरात्मनः शुद्धिविहीनस्तं च वर्जयेत्" इति **ब्राह्माच्च** । न केवलं त एव, किंतु त्रिपुरुषम्; पतितोत्पन्नेन सह त्रीन् पुरुषानभिव्याप्य; पतितस्य पुत्रपौत्रप्रपौत्रा इति यावत् । तेऽपि त्याज्याः । यत्तु येषां मातृतः मातृकुले त्रिपुरुषमशुद्धाः पातित्यादियोगेन; यथा मातामहप्रमातामहवृद्धप्रमातामहाः मातामहीप्रमातामहीवृद्धप्रमातामह्य इति, तथा पितृतः पितृकुले त्रिपुरुषं पितामहप्रपितामहवृद्धप्रपितामहाः पितामहीप्रपितामहीवृद्धप्रपितामह्यः, ते त्याज्या इति; तन्न सुन्दरम्; पतितोत्पन्नाया अपि मातुः "अन्यत्र स्त्रियाः" इत्यनेन पातित्याभावबोधनात् तदपत्यस्य त्यागानुपपत्तेः । चकारात् राजघातकादयोऽपि । यथाह **गौतमः**—"त्यजेत् पितरं राजघातकं शूद्रयाजकं वेदविप्लावकं भ्रूणहनं यश्चान्त्यावसायिभिः सह संवसेत् अन्त्यावसायिन्या वा" इति । पितृग्रहणं कैमुतिकन्यायेनान्येषामपि त्यागार्थम् । शूद्रयाजकः उपपातकमात्रोपलक्षणम् । भ्रूणहा महापातकानाम् । ननु पतितोत्पन्नानामपि पतितत्वात् पूर्वसूत्रेणैव तत्त्यागसिद्धौ पृथक्सूत्रारम्भो व्यर्थ इति चेत्; अत्र ब्रूमः—पतितानां प्रायश्चित्ताकरणे त्यागः । पतितोत्पन्नानां तु प्रायश्चित्तापनोद्यदुरिताभावेन प्रायश्चित्ताभावात् जन्मनैव त्रिपुरुषं त्यागविधिना त्याग इत्यर्थं सूत्रारम्भ इति । युक्तं चैतत्;

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥"

[1] त्रिपुरुषं omitted in ठ.

[2] प्रायश्चित्तानन्तरम्—घ.

इत्यादियाज्ञवल्कीयादिवाक्ये त्रयाणामेव पापोत्पत्तिनिमित्तता प्रतीयते। न चैषामन्यतमस्यात्रोपलम्भः। 'मनुष्याधिकारत्वाच्छास्त्रस्य' इति न्यायेनाशरीरात्मानं प्रति विधिनिषेधयोरप्रवृत्तेः न शरीरग्रहणोत्तरकालं पातित्यनिमित्तोपलम्भः। किंच यदा उत्पन्नस्य न्यूनपञ्चवर्षस्य पातित्याभावो विधीयते "अतो न्यूनतरस्यास्य नापराधो न पातकम्" इति, तदा कथमिवाशरीरस्य पातित्यं ब्रूयाच्छास्त्रम्। यदि चाशरीरस्यापि अशुचिशुक्रसंयोग एव पातित्यहेतुः, तदा शरीरावच्छिन्नस्याप्यात्मनोऽनेकाशुचिद्रव्यसंयोगेन मनुष्यमात्रस्य नित्यपातित्यापत्तेः। [1]न च 'पतितोत्पन्नं शरीरं न ग्राह्यम्' इति निषेधोऽस्ति। न च पतितोत्पन्नशरीर-प्राप्तिफलकं जन्मान्तरीयं दुरितं प्रायश्चित्तनिमित्तमित्यपि[2] शक्यं वक्तुम्; तस्य तादृशशरीरोत्पादमात्रेणैव नष्टत्वात्; तच्छरीरावस्थापकस्य तस्य शरीरनाशनाश्यत्वेन प्रायश्चित्तानाश्यत्वात्। तस्मात् चण्डालादिशरीरवत् पतितोत्पन्नं शरीरमेवाशुचि, न तु तच्छरीरसंबन्ध्यात्मसमवेतं प्रायश्चित्तनाश्यं दुरितं किंचिदिति सिद्धम्।

न च शरीरं प्रायश्चित्तनाश्यम्। येन च देहान्तिकेन तन्नाश्यं तन्न तद्व्यवहारं साधयति, शरीरस्यैव नष्टत्वात्। किंच "पतितोत्पन्नः पतितो भवति" इत्यनेनाविशेषेणापत्यमात्रस्य पातित्यमभि-हितम्, तच्च "अन्यत्र स्त्रियाः" इत्यनेन स्त्रीष्वपोद्यते। तत्र हेतुः "सा हि परगामिनी" इति। परगामित्वं च [3]परव्यवहार्यत्वपर्यवसन्नम्। तेन चोत्सर्गापवादयोरेकविषयत्वान्यथानुपपत्त्या पुमपत्ये पातित्यापरपर्यायमव्यवहार्यत्वमेव पर्यवस्यति। न चेदमकृतप्रायश्चित्तविषयमव्यवहार्यत्वम्; प्रायश्चित्ता-पनोद्यपापाभावेन प्रायश्चित्ताभावस्योक्तत्वात्। ननु "अशुचिशुक्रोत्पन्नानां तेषामिच्छतां प्रायश्चित्तिः पतनीयानां तृतीयोंऽशः; स्त्रीणामंशस्तृतीयः" इति बोधायनीयप्रायश्चित्तान्यथानुपपत्तिरेव दुरितसद्भावे प्रमाणम्, श्वादिदंशनिमित्तप्रायश्चित्तवदिति चेत्; न; दृष्टान्तवैषम्यात्; "सर्वत एवात्मानं गोपायेत्" इत्यादि-विध्यतिक्रमस्य तत्र प्रत्यक्षत्वात्; प्रकृते तूत्पादकाभावेन दुरितानुत्पत्तेरुक्तत्वात्। प्रायश्चित्तविधानं तु न पतितोत्पन्नान् प्रति; "इच्छताम्" इत्यस्य वैयर्थ्यापत्तेः। न ह्यनिच्छूनां प्रायश्चित्ताचरणं संभवति; इच्छापूर्वकत्वात् प्रवृत्तेः; इच्छायाश्च प्रवर्तनाक्षेपेणैव सिद्धेः। न च प्रायश्चित्तस्य पाक्षिकत्वाभिधानार्थमिति वाच्यम्, "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्" इतिवत् निमित्तस्यापाक्षि-कत्वात्। तस्मात् पतितोत्पन्नान् ये इच्छन्ति, तेषामिदं प्रायश्चित्तमिति वक्तव्यम्। तेषामिति च कर्मणि षष्ठी। अशुचिशुक्रोत्पन्नत्वं च तद्व्यवहर्तॄणां प्रायश्चित्ताचरणहेतुः "एवमशुचि शुक्रं यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते" इति पूर्वोक्तनिषेधस्मारणाय।

अत एव "अथ पतिताः समवसाय धर्मं चरेयुः इतरेतरयाजकाः इतरेतराध्यापकाः मिथो विवहमानाः पुत्रान् संनिष्पाद्य ब्रूयुः विप्रव्रजतास्मत्तः एवमार्यानपि संप्रतिपत्स्यथेति। अथापि न सेन्द्रियः पतति। तदेतेन वेदितव्यमङ्गहीनो हि साङ्गं जनयतीति। मिथ्यैतदिति हारीतः दधिधानीसधर्माः

[1] From न च up to निषेधोस्ति omitted in ख.

[2] अपि omitted in घ.

[3] पर omitted in ग.

स्त्रियः स्युः । यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तच्छिष्टा धर्मकृत्येषूपयोजयन्ति । एवमशुचि शुक्लं[1] यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते " इति पूर्वोत्तरपक्षभङ्ग्या पतितोत्पन्नानामव्यवहार्यत्वं **बोधायन** एव स्वयं सिद्धान्तयति स्म । **आपस्तम्बोऽपि** अनयैवानुपूर्व्या अमुमेव सिद्धान्तमङ्गीचकार । पुनरपि विभाग-प्रकरणे **बोधायन** एव पतितोत्पन्नव्यवहारं निषेधति—" अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुः, अन्धबधिरक्लीबव्यसनिव्याधितादींश्चाकर्मिणः पतिततज्जातवर्जम्; न पतितैः संव्यवहारो विद्यते; पतितामपि मातरं बिभृयादनभिभाषमाणः " इति । अत्रापि पतितग्रहणेनैव तज्जातप्राप्तौ पृथगुपादानमात्यन्तिकाव्यवहार्यत्वाभिप्रायेणेति मन्तव्यम्; अन्यथा ग्रासाच्छादननिषेधानुपपत्तेः ।

**हारीतोऽपि**—" पतितस्य कन्यां विवस्त्रामाप्लाव्याहोरात्रोपोषितां प्रातः शुक्लेन वाससाच्छाद्य 'नाहमेतेषां न ममैते' इति त्रिरुच्चैरभिदधानां तीर्थेषु गृहेषु वोद्वहेत्" इति । **याज्ञवल्क्योऽपि**—" कन्यां समुद्वहेदेषां सोपवासामकिंचनाम्" इति कन्यामात्रस्यैव व्यवहार्यत्वं वदन् पुमपत्यादीनामव्यवहार्यत्वमेवाह । अभ्युपगतं चैतत् **विज्ञानेश्वराचार्यैरपि**—" कन्यां समुद्वहेदेषाम् इति वचनात् स्त्रीव्यतिरिक्ततदीयापत्यस्य संसर्गानर्हतां दर्शयति " इति । पुनरपि **तैरेव**; " एवमेनः शमं याति बीजगर्भसमुद्भवम्" इत्येतस्य व्याख्याने " बीजगर्भसमुद्भवम्; शुक्रशोणितसंबद्धं गात्रव्याधिसंक्रान्तिनिमित्तम्; न तु पतितोत्पन्नत्वादि " इत्यभिहितम् । यत् पुनः **तैरेव** रहस्यप्रकरणे " द्वादशरात्रं पतितोत्पन्नश्च " इति **वृद्धवसिष्ठ**वाक्येन प्रसूतियावकव्रतमुक्तं, तत् पतितायां रहस्यमुत्पादितापत्यस्येत्यभिप्रायेण; " वृषल्यामभिजातस्तु " इतिवत् पतितोत्पन्नव्याख्यानात् । अनुमतमेत**दपरार्केणापि** " क्लीबोऽथ पतितस्तज्जः " इत्यस्य व्याख्याने—" यद्यपि पतितग्रहणेनैव तज्जग्रहणं सिद्धम्, तथापि तस्य पृथग्ग्रहणं कार्यम्; अन्यथा 'औरसाः क्षेत्रजास्तेषाम्' इति वाक्येन भागार्हता स्यात्" इति । अयमाशयः—" पतिततज्जातवर्जम् " इति **बोधायनेन** ग्रासाच्छादनयोरपि निषेधात् दूरापास्ता विभागार्हतेति । तस्मात् पतितोत्पन्नानां न व्यवहार्यतेति सिद्धम् ।

त्यागप्रकारं चाह **गौतमः**—" तस्य विद्यागुरून् योनिसंबन्धांश्च संनिपात्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्युः " इति । उदकादीनीत्यनेन दाहनिषेधः; शरीरसत्त्वेन लुप्तप्रयोजनत्वात् । तेन यत्रापि जलाग्निपातादौ वैधी शरीरप्रतिपत्तिः, तत्रापि दाहलोपः; तेनैव शरीरसंस्कारात् । तदाह **स एव**—" यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत्; तस्मिन् मृते उदकादीनि सर्वाणि प्रेतकर्माणि कुर्युः " इति । आदिशब्दात् एकोद्दिष्टादीनां ग्रहणम्; न सपिण्डीकरणस्य; प्रेतमात्रोद्देश्यकत्वाभावात् । प्रेतकर्मत्वादाशौचप्राप्तिः;

" दासी घटमपां पूर्णं पर्यस्येत प्रेतवत् पदा ।
अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह ॥ "

इति **मानवात्** । बान्धवैः सह; सपिण्डा इति शेषः; " पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह " इत्युदकदानसाहित्यात् । किंच " पात्रं चास्य विपर्यस्येयुः "; अस्य त्याज्यस्य विपर्यासोऽधोमुखीकरणेनानुदकी-

[1] अशुचियुक्तैः—ख.

करणम्। तत्र प्रकारः—" दासः कर्मकरो वा अवकरादमेध्यपात्रमानीय दासीघटात् पूरयित्वा दक्षिणामुखः पदा विपर्यस्येत् अमुमनुदकं करोमीति नामग्राहम् " इति। अवकरः अमेध्यस्थानम्। पदा सव्येन। तत्र 'अमुम्' इत्यादिर्मन्त्रः। **योगीश्वरस्त्वन्यथाह**—" दासीकुम्भं बहिर्ग्रामान्निनयेरन् स्वबान्धवाः " इति। अत्र **मानवो** विशेषः—" निन्दितेऽहनि सायाह्ने " इति। निन्दिताहः रिक्ता तिथिः। ज्ञातिकृत्यमाह—" ते सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखाः " इति। अन्वालम्भः स्पर्शः। किंच " विद्यागुरवो योनिसंबद्धाश्च वीक्षेरन् " इति। न संस्पृशेयुः। तदनन्तरम् " अप उपस्पृश्य ग्रामं प्रविशन्ति " इति प्रवेशवचनात् बहिर्ग्रामे तद्गम्यते। त्यागश्चायं बन्धुप्रेरितस्यापि प्रायश्चित्ताकरणे गुरोः बान्धवानां राज्ञश्च समक्षे दोषानभिख्याप्यानुभाष्य दुरितप्रायश्चित्ताचरणानन्तरं कार्यः;

" पतितः पातयेद्वंश्यान् जीवतोऽपि मृतानपि।
अतस्तस्य हि संत्यागः कर्तव्यः शुद्धिमीप्सुभिः।
प्राजापत्यं चरित्वा च प्रत्येकं बान्धवैः सह ॥ "

इति **स्मरणात्** ॥ ४ ॥

**सर्व एवाभोज्याश्चाप्रतिग्राह्याः**[1] ॥ ५ ॥

त्यक्तधर्मानाह। त्यक्ताः सर्वेऽपि अभोज्याः; न भोज्यं भोजनार्हमन्नं येषां तादृशाः। अप्रतिग्राह्याः; न प्रतिग्रहार्हं धनं येषां ते तथा। चकारात् असंभाष्याश्च। तदाह **गौतमः**—" अत ऊर्ध्वं तेन संभाष्य तिष्ठेदेकरात्रं जपन् सावित्रीमज्ञानपूर्वम्; ज्ञानपूर्वं त्रिरात्रम् " इति। अज्ञातेरप्येतत्। कार्याकार्यविचारे चेदम्। मार्गादिप्रश्ने तु **पराशरः**—" पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् " इति। **शङ्खोऽपि**—" अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्तन्ते। संभाषणासनव्यवहारान् न तेन सह कुर्यात् " इति।

ननु पतितेन सहैकशयनासनभोजनानि प्रागेव निषिद्धानीति कथं पुनरत्र निषिध्यन्ते? त्यक्तस्यापि पतितत्वाविशेषादिति चेत्; उच्यते—पतितेन सह भोजनादिनिषेधो यावत्प्रायश्चित्ताचरणमेव, नोर्ध्वम्; " न जुगुप्सेत कर्हिचित् " " संवसेयुश्च सर्वशः " इति जुगुप्सावर्जनपूर्वकव्यवहारविधानात्। त्यक्तेन सह तन्निषेधस्तु त्यागोत्तरं प्रायश्चित्ताचरणेऽप्यव्यवहार्यत्वप्रदर्शनायैव। दोषाधिक्याय [2]संभाषणादिनिषेधपुनरुक्तिरिति चेत्; न; पतितापविद्धस्त्यक्तः; तस्य रिक्थादिनिषेधपौनरुक्त्ये तदसंभवाच्च। अत्राहुः—नायमपूर्वः संभाषणादिनिषेधः; किंतु पूर्वोक्तस्यैवानुवादः सकृत्संभाषणे प्रायश्चित्तविशेषविधानार्थः; तत्र प्रायश्चित्तस्य प्रागनभिधानात्। रिक्थादिनिषेधस्तु त्यक्तोपपातक्यभिप्रायेण। न हि उपपातकिनस्त्यक्तस्य

[1] च added in—ठ.

[2] बहुषु संभाषणादि—ध; संभाषणादिनिषेधः, किंतु पूर्वोक्तस्यैव पुनरुक्तिः—ख.

रिक्थादिनिषेधोऽस्ति प्राक्। एतेनोदकपिण्डादिनिषेधोऽपि व्याख्यात इति। अत्र ब्रूमः—उपपातकिनस्त्यागे उपपातकिमात्रेऽतिप्रसङ्गात् "पतितस्य बहिः कुर्युः" इत्येव वाच्यम्। "त्यजेत् पितरं राजघातकम्" इत्यादिविषयपरिगणनं न कार्यम्, पातित्याभावेन परिगणनानर्थक्यादिति चेत्; न; स्मृतिभेदात्। तथात्वेऽपि परिगणनस्य नियमार्थत्वेनैकवाक्यत्वात्। नन्वेवं मन्वादिबहुस्मृतिषु महापातकादिप्रायश्चित्तमुक्त्वा औद्धत्यादिना तदकारिणश्च त्यागं विधायान्ते परिग्रहविध्यभिधानात् उभयशेषत्वसिद्ध्या त्यक्तयोः प्रायश्चित्तकरणे परिग्रह इति बहुनिबन्धनस्वरसो भज्येतेति चेत्; न; त्यागपरिग्रहविध्योरन्तरा त्यागविधिशेषतया रिक्थव्यवहारादिनिषेधाभिधानेन विरोधात् परिग्रहविधेरुभयशेषत्वासंभवेनात्यक्तचीर्णप्रायश्चित्तमात्रशेषतासिद्धेः। न च त्यागविध्यनन्तरमेव सर्वस्मृतिषु परिग्रहविध्यभिधाननियमः; **बोधायनेन** त्यागविधेः प्रागेव महापातकावकीर्णिप्रायश्चित्तानन्तरं परिग्रहविध्यभिधानात्—"अथास्य ज्ञातयः परिषद्युदपात्रं निनयेयुस्तमसावहमित्थंभूत इति चरित्वापः पयो घृतं मधु लवणमित्यारब्धवन्तं ब्राह्मणा ब्रूयुश्चरितं त्वयेति। ओमितीतरः प्रत्याह। चरितनिर्वेशं सवनीयं कुर्युः" इति। अत एव **वसिष्ठादिस्मृ**तिषु "पतितानां चरितव्रतानां प्रत्युद्धारः" इति पतितशब्दः श्रूयते, न क्वापि त्यक्तशब्द इति। तेन च "गुर्वीसखीं गुरुसखीमपपात्रां पतितां च गत्वोपपातकम्" इति **बोधायनीयं** "पतितापविद्धचण्डाल" इति **मार्कण्डेयं** च पृथग्वचनं कृतप्रायश्चित्ताभिप्रायेणैव संभवति, नान्यथा; पतितग्रहणेनैव सिद्धेः। किंच "पुनः पुनराचारं लभस्व" इत्यादि प्रायश्चित्तप्रवर्तनं न दृष्टार्थं भवति, त्यक्तस्यासंग्राह्यत्वात्। त्यक्तस्यापि कृतव्रतस्य संग्रहे तत् दृष्टार्थकं स्यात्। वस्तुतस्तु त्यक्तस्य प्रायश्चित्तानुष्ठाननिषेधेनैवाव्यवहार्यत्वं स्पष्टमाह **वसिष्ठः**—"गृहेषु स्वैरमापद्येरन्। अत ऊर्ध्वं न तं धर्मयेयुः। तद्धर्माणस्तं धर्मयन्तः" इति। अस्यार्थः—त्यागानन्तरं सपिण्डाः स्वस्वगृहेषु स्वैरं कृतपापसंसर्गपुनस्तत्परिग्रहभयशून्या भवेयुः। त्यक्तस्यापि कृतव्रतस्य परिग्रहे को दोष इत्यत आह। अतस्त्यागादूर्ध्वं ते सपिण्डाः तं त्यक्तं न धर्मयेयुः। धर्मं करोत्याचष्टे वा धर्मयति; "तत्करोति तदाचष्टे" इति णिच्। धर्मयन्तं प्रेरयन्तीति धर्मयन्ति; चोरयन्तं प्रेरयन्तीतिवत्। स्वार्थणिजन्तात् प्रयोजकणिजन्त इति प्रयोज्यप्रयोजकसमभिव्याहारेण गम्यते। ततश्च विध्यर्थत्वात् धर्मस्य यावद्विधिविहितार्थविषयकप्रवर्तनानिषेधेन प्रायश्चित्ताद्यनुष्ठापनावगमात्; तस्य च "एतया निषादस्थपतिं याजयेत्" इतिवदनुष्ठापननिषेधार्थत्वात्। उक्तनिषेधार्थवादमाह। तद्धार्माणस्तं धर्मयन्त इति। तस्मात् त्यक्तस्यापि कृतव्रतस्य संग्रह इति निरस्तम् ॥ ५ ॥

**अप्रतिग्राह्येभ्यश्च प्रतिग्रहप्रसङ्गं वर्जयेत् ॥ ६ ॥ प्रतिग्रहेण [1]ब्राह्मणानां ब्राह्मं तेजः प्रणश्यति ॥ ७ ॥ द्रव्याणां वाविज्ञाय प्रतिग्रहविधिं यः प्रतिग्रहं कुर्यात् स दात्रा सह निमज्जति ॥ ८ ॥**

[1] विप्राणाम्—ठ.

**प्रतिग्रहसमर्थश्च यः प्रतिग्रहं वर्जयेत् स दातृलोकमवाप्नोति ॥ ९ ॥**

**एधोदकमूलफलाभयामिषमधुशय्यासनगृहपुष्पदधिशाकांश्चा-भ्युद्यतान् न निर्णुदेत् ॥ १० ॥**

प्रसङ्गादाह । अप्रतिग्राह्याः पूर्वोक्ताः । तेभ्यः प्रतिग्रहाभ्यासो न कार्यः । प्रसङ्गवचनात् आपदि सकृत् प्रतिग्रहे न दोष इत्युक्तं भवति ;

" आपद्गतः संप्रगृह्णन् भुञ्जानोऽपि यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः "

इति **योगिस्मरणात्** ॥ ६ ॥ प्रतिग्रहवर्जने हेतुमाह । ब्राह्मं ब्रह्मलोकार्हम् । ब्राह्मयमिति पाठे वेदाभ्यासजन्यः तेजोविशेषः प्रतिग्रहतारतम्येन प्रणश्यति ॥ ७ ॥ प्रतिग्रहविध्यज्ञाने दोषान्तरमाह । द्रव्याणां गवाश्वादीनां प्रतिग्रहविधिम् " अनुमन्त्रयेत प्राण्यभिमृशेदप्राणि " इत्यादिकमजानतः प्रतिग्रहे दात्रा सह नरकपातः ॥ ८ ॥ दानं विनैव दानफलोपायमाह । प्रतिग्रहे सामर्थ्यं तपोविद्याचाराः । तद्वानपि यस्तु प्रतिग्रहपराङ्मुखो भवति, स तद्दानजन्यं लोकमाप्नोति ॥ ९ ॥ प्रतिग्रहनिषेधापवादमाह । एधः काष्ठम् । उदकं जलम् । मूलं कन्दादि । फलम् आम्रादि । अभयं भयात् त्राणम् । आमिषं भक्ष्यं मांसम् । मधु क्षौद्रम् । शय्या खट्वा । आसनम् और्णादि । गृहं वेश्म । पुष्पं मल्लिकादि । दधि प्रसिद्धम् । शाकं वास्तुकादि । चकारात् कुशादीन् अभ्युद्यतान् दातुमानीतान् न निर्णुदेत् प्रत्याचक्षीत । यथाह **योगीश्वरः**—

" कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥ "

इति । **मनुरपि**—

" शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणीन् दधि ।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत् ॥ "

इति ।

" एधोदकं मूलफलमन्नमभ्युद्यतं च यत् ।
सर्वतः प्रतिगृह्णीयान्मध्वाज्याभयदक्षिणाम् ॥ "

इति च । क्षितिः उद्धृतमृत्तिका । सर्वतः ; निषिद्धादपि । **वसिष्ठोऽपि**—" एधोदकयवसक्तुकुशलाजाभ्युद्यत-यानावसथशफरीप्रियङ्गुस्रग्गन्धमधुमांसानीत्येतेषां प्रतिगृह्णीयात् " इति । ननु गृहशय्यादिप्रतिग्रहे प्रायश्चित्ता-म्नानान् कथमत्राभ्यनुज्ञेति चेत् ; सत्यम् ; अत्राभ्युद्यतत्वविशेषेण प्रायश्चित्तस्य याचितादिविषयत्वकल्पनात् ॥ १० ॥

**आहूयाभ्युद्यतां भिक्षां पुरस्तादनुचोदिताम् ।**
**[1]ग्राह्यां प्रजापतिर्मेने अपि दुष्कृतकर्मणः ॥ ११ ॥**

किंच 'गृहाण भोः इमां भिक्षाम्' इत्याहूय पुरस्तादानीताम् । दुष्कृतकर्मणो यथोक्तसंध्याद्यकारिणोऽपि, न तु पतितादेः; प्रजापतिर्ग्राह्यामाह ॥ ११ ॥

**नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च ।**
**न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ १२ ॥**

तत्प्रत्याख्याने दोषमाह । अयाचितोपस्थितभिक्षाप्रत्याख्याने पञ्चदश वर्षाणि देवपितृकर्माणि विफलानि भवन्तीत्यर्थवादकल्प्यो दोषः ॥ १२ ॥

**गुरून् भृत्यानुज्जिहीर्षुरर्चिष्यन् पितृदेवताः[2] ।**
**सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः ॥ १३ ॥**

प्रतिग्रहनिवृत्तेरपवादान्तरमाह । गुरवः मातृपित्रादयः । भृत्याः भार्यादयः । तान् आपद्गतानुज्जिहीर्षुः मुमोचयिषुः पितॄन् सांवत्सरिकादौ देवताः कुलधर्मादावर्चिष्यन् अर्चनेच्छुश्च सर्वतो निषिद्धादपि[3] प्रतिगृह्णीयात् । परं तु तादृशात् प्रतिगृहीतात् धनात् स्वतृप्त्युपायं न कुर्यात्, अनापन्नश्चेत् । आपदि तु स्वयमपि तेन वर्तेत; "सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव वा" इति योगिस्मरणात् ॥ १३ ॥

**एतेष्वपि च कार्येषु [4]समर्थस्तत्प्रतिग्रहे ।**
**नादद्यात् कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ १४ ॥**

अत्रैवापवादमाह । एतेषु पूर्वोक्तेषु मातृपितृभरणादिष्वपि कर्तव्येषु प्रतिग्रहसमर्थोऽपि सर्वतः प्रतिग्रहं न कुर्यात् । कुलात् कुलम् अटतीति कुलटा स्वैरिणी । षण्ढो नपुंसकः । षड्विधाः पतिताः महापातक्यादयः । द्विट् शत्रुः । तथाशब्दात् चिकित्सकादेर्ग्रहणम्;

"चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च ।
षण्ढसूनकयोश्चैव उद्यतामपि वर्जयेत् ॥"

इति यमस्मरणात् । कितवो द्यूतकृत् । सूनको हिंसकः ॥ १४ ॥

[1] मेने प्रजापतिर्ग्राह्याम् — ज, ठ.
[2] देवतातिथीन् — ज, ठ.
[3] निषिद्धादनिषिद्धादपि — ग.
[4] समर्थोऽपि प्रतिग्रहे — ठ.

**गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्।**
**आत्मनो वृत्तिमन्विच्छन् गृह्णीयात् साधुतः सदा ॥ १५ ॥**

गुर्वाद्यर्थं सर्वतः प्रतिग्राह्यम्। स्वार्थं तु कथमित्यत आह। गुरुषु पूर्वोक्तेषु अतीतेषु मृतेषु, जीवद्भिरपि तैर्विना वा वसन् गृहस्थः आत्मजीवनाय साधुभ्यः त्रैवर्णिकेभ्य एव प्रतिगृह्णीयात्, न शूद्रादिभ्यः; "प्रशस्तानां स्वकर्मशुद्धानां द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्च" इति **गौतमस्मरणात्** ॥ १५ ॥

**अर्धिकः कुलमित्रं च दासगोपालनापिताः।**
**एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥ १६ ॥**

इति [1]श्रीविष्णुस्मृतौ सप्तपञ्चाशत्तमोऽध्यायः

अर्धं क्षेत्रफलं यो राज्ञे समर्पयति[2] सः अर्धिकः; "अर्धसीरिणः" इति **योगिस्मरणात्**। कुलपरंपरया मित्रं कुलमित्रम्। दासः गृहदासः। गोपालः आभीरः। नापितः केशवप्ता। यश्च 'तवाहम्' इत्यात्मानं निवेदयति। एते शूद्रेषु भोज्यान्नाः। भोजनार्हमन्नं येषां ते[3] तथेति **प्राञ्चः**। वस्तुतस्तु [4]**पराशरोक्त**लक्षणा दासादयो ज्ञेयाः। यथा—

"दासनापितगोपालकुलमित्रार्धसीरिणः।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः।
संस्कारात्तु भवेद्दासः असंस्कारात्तु नापितः ॥
क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः।
स गोपाल इति ख्यातो भोज्यो विप्रैर्न संशयः ॥
वैश्याच्छूद्रस्य कन्यायामुत्पन्नः कुलमित्रकः।
वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः।
सोऽप्यर्धिक इति ज्ञेयो भोज्यो विप्रैर्न संशयः ॥"

[1] वैष्णवे धर्मशास्त्रे भोज्याभोज्यप्रकरणं सप्तपञ्चाशम्—ज.
[2] प्रयच्छति—ख, ग.
[3] ते omitted in क.
[4] पराशरेणोक्त—क.

इति। यद्यप्येतेषां द्विजोत्पन्नत्वेन न शूद्रत्वम्, तथापि कन्याशब्दसामर्थ्यादविवाहितोत्पन्नत्वेन शूद्रसमानत्वात् शूद्रत्वव्यपदेशः; "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" इति स्मरणात्। चकारात् कुम्भकारोऽपि; "गोपनापितकुम्भकारकुलमित्रार्धिकनिवेदितात्मानो भोज्यान्नाः" इति [1]वचनात्॥ १६॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[3]श्रीरामपण्डितात्मज-
[3]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
सप्तपञ्चाशत्तमोऽध्यायः

[1] प्रमाणात्—क.

[2] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां सप्तपञ्चाशत्तमोऽध्यायः—घ, च.

[3] श्री omitted in ग.

# अष्टपञ्चाशत्तमोऽध्यायः

**अथ गृहाश्रमिणस्त्रिविधोऽर्थो[1] भवति ॥ १ ॥ [2]शुक्लः शबलोऽसितश्च ॥ २ ॥ शुक्लेनार्थेन यदौर्ध्वदेहिकं करोति तेनास्य[3] देवत्वमासादयति ॥ ३ ॥ यच्छबलेन तन्मानुष्यम् ॥ ४ ॥ यत् कृष्णेन तत् तिर्यक्त्वम् ॥ ५ ॥**

वक्ष्यमाणगृहस्थधर्माणामर्थसाध्यतया अर्थविवेकं तावदष्टपञ्चाशत्तमेनाह । अथेति अर्थनिर्णयाधिकारः । गृहस्थस्यार्थो धनं वक्ष्यमाणप्रकारेण त्रिविधं भवति । गृहाश्रमिण इत्याश्रमान्तरनिरासाय; धनार्जनस्य गृहस्थप्रकरण एवाभिधानात्;

"व्रतिना स्नातकेनापि कार्या शुद्धेषु याचना ।
गुरोरर्थप्रदानाय कन्यालाभाय चात्मनः ।
यात्रामात्रादृते नित्यं यतीनां च न शस्यते ॥"

इति अत्रिस्मृतौ भिक्षाकन्यातिरिक्तयाचननिषेधात् । न व्रतस्थस्यापि; "नित्यं दद्यान्न प्रतिगृह्णीयात्" इति प्रतिग्रहनिषेधात्; "अनंशास्त्वाश्रमान्तरगाः" इति वसिष्ठेन रिक्थनिषेधात्; याजनाध्यापननिषेधाच्च ब्रह्मचार्यादीनाम् । त्रिविध इति विधान्तरनिरासः ॥ १ ॥ ता विधा आह । शुक्लादिलक्षणं वक्ष्यति । प्रवृत्तिनिमित्तं तु शुद्धिः मिश्रिता अशुद्धिश्चेति ॥ २ ॥ तासां प्रयोजनमाह । मृतस्य पित्रादेः पुत्रादिः यत् शुक्लेन धनेन और्ध्वदेहिकं पारलौकिकं पिण्डोदकदानादि करोति, तेनास्य देवत्वं संपादयति ॥ ३ ॥ शबलेन धनेन कृतेऽस्मिन् मानुष्यं नयति ॥ ४ ॥ कृष्णेन धनेन कृतेऽस्मिन् [4]तत्तिर्यक्त्वं पशुतां नयति ॥ ५ ॥

**स्ववृत्त्युपार्जितं[5] सर्वेषां शुक्लम् ॥ ६ ॥ अनन्तरवृत्त्युपात्तं शबलम् ॥ ७ ॥ [6]एकान्तरितवृत्त्युपात्तं च [7]कृष्णम् ॥ ८ ॥**

[1] त्रिविधं धनं—ज, ठ.
[2] शुक्लं शबलमसितं च—ज, ठ.
[3] तत् देवत्वमासाद्याश्भाति—ज.
[4] तत् omitted in घ.
[5] उपात्तं—ज, ठ.
[6] एकान्तर—घ.
[7] शबलमेव । उत्तमवृत्त्युपात्तं च कृष्णम्—ज, ठ.

असाधारणं शुक्लादिलक्षणमाह । स्ववृत्तयः ब्राह्मणादीनां प्रतिग्रहादयः ; ताभिः आर्जितं शुक्लमुच्यते । सर्वेषामिति अनुलोमप्रतिलोमजानामपि उक्तवृत्त्यार्जितं शुक्लं ज्ञेयम् ॥ ६ ॥ ब्राह्मणस्य क्षत्रवृत्तिः, क्षत्रियस्य वैश्यवृत्तिः, वैश्यस्य शूद्रवृत्तिः अनन्तरा ; तया तैरार्जितं शबलम् ॥ ७ ॥ एकान्तरितया वृत्त्या आर्जितं कृष्णमुच्यते । यथा ब्राह्मणेन वैश्यवृत्त्या, क्षत्रियेण शूद्रवृत्त्या वेति ॥ ८ ॥

**क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया ।**
**अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम् ॥ ९ ॥**

साधारणानि तल्लक्षणान्याह । पितृपितामहादिक्रमेण यद्दायरूपतया प्राप्तम्, यच्च प्रीत्या मित्रादिभ्यो लब्धम्, यच्च विवाहकाले भार्यया सह श्वशुरादिभ्यो लब्धम् , तत् सर्वेषां वर्णानामनुलोमजप्रतिलोमजानामविशेषेण शुक्लमुक्तम् ॥ ९ ॥

**उत्कोचशुल्कसंप्राप्तमविक्रेयस्य विक्रयैः ।**
**कृतोपकारादाप्तं च शबलं [1]समुदाहृतम् ॥ १० ॥**

उत्कोचः लञ्चः । शुल्कं घट्टादिदेयं कन्यादिमूल्यं च । अविक्रेयं लाक्षालवणादि, तद्विक्रयेण यल्लब्धम् । यच्च पूर्वोपकृतात् लब्धम् । तत् सर्वेषां शबलमुच्यते ॥ १० ॥

**[2]पार्श्विकद्यूतचौर्याप्तप्रतिरूपकसाहसैः ।**
**व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम् ॥ ११ ॥**

पार्श्वे स्थित्वा चामरचालनादि पार्श्विकम् । द्यूतम् अक्षादिक्रीडनम् । तत् समाह्वयस्याप्युपलक्षणम् । समाह्वयो मेषादिभिः क्रीडनम् । चौर्यं प्रसिद्धम् । आप्तं भैक्ष्यकर्म । प्रतिरूपकमन्यप्रदर्शनेन स्वयं दानादिग्रहणम् ; कृत्रिमसुवर्णादिकरणं वा । साहसं पणपूर्वकं गिरिवृक्षाद्यारोहणम् । व्याजम् अन्यद्रव्यप्रदर्शनेनान्यद्रव्यम् । तत् कृष्णमित्युक्तम् । **नारदोऽपि—**

“ पार्ष्णिकद्यूतचौर्यार्तिप्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम् ॥ ”

इति । पार्ष्णिकं पृष्ठेऽनुयानम् । आर्तिः परपीडाकरणम्, दैन्यातिशयो वा ११ ॥

1 धनमुच्यते—ज, ठ.

2 चौर्यार्ति for चौर्याप्त—ठ.

**यथाविधेन द्रव्येण यत्किंचित् कुरुते नरः ।**
**तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥ १२ ॥**

**इति [1]श्रीविष्णुस्मृतौ अष्टपञ्चाशत्तमोऽध्यायः**

और्ध्वदेहिकन्यायमन्यत्राप्यतिदिशति । उक्तविधद्रव्यमध्ये यादृशेन शुक्लादिना द्रव्येण यत् ऐहिकामुष्मिकफलसाधनं कर्म करोति, तादृशमेवोत्कृष्टापकृष्टमध्यमाद्यैहिकमामुष्मिकं वा फलं प्राप्नोति ॥ १२ ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-श्रीनन्दपण्डितकृतौ [3]श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
अष्टपञ्चाशत्तमोऽध्यायः

1 वैष्णवे धर्मशास्त्रे धनशुद्धिप्रकरणमष्टपञ्चाशम्—ज, ठ.
2 श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यामष्टपञ्चाशत्तमोऽध्यायः
3 श्री omitted in ग.

## एकोनषष्टितमोऽध्यायः

**गृहाश्रमी वैवाहिकाग्नौ[1] पाकयज्ञान् कुर्यात् ॥ १ ॥ सायं [2]प्रातश्चाग्निहोत्रम् ॥ २ ॥ देवाताभ्यो जुहुयात् ॥ ३ ॥**

एवं गृहाश्रमोपयुक्तमर्थं निर्णीय प्रकृतान् गृहाश्रमधर्मान् एकोनषष्टितमेनाध्यायेन वक्तुं वक्ष्यमाणेषु श्रौतस्मार्तकर्मसु अग्निनिर्णयं तावदाह। गृहस्थः विवाहकालाहृते दायकालाहृते गृहपतिप्रापणकालाहृते वाग्नौ, पाकाः प्रशस्ताः अल्पेतिकर्तव्यताकत्वेन ये यज्ञाः वैश्वदेवस्थालीपाकश्रवणाकर्मादयः, तान् कुर्यात्। गृहस्थग्रहणमाद्यन्ताश्रमिनिवृत्त्यर्थम्; तयोः पक्वान्नस्वामित्वात्; "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ" इति **स्मरणात्**। न स्नातकवानप्रस्थविधुरनिवृत्त्यर्थम्; "स्नातकेनापि तत् कार्यं पृथक् पाको भवेद्यदि" इति **शौनकस्मरणात्**; "वानप्रस्थो जटिलः" इत्युपक्रम्य "दद्याद् देवपितृमनुष्येभ्यः" इति **वसिष्ठस्मरणात्**;

> "[3]अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः स्वयम्।
> हुत्वा शाकलमन्त्रैश्च शिष्टाद् भूतबलिं हरेत् ॥"

इति **तस्यैव** स्मरणात्। अनग्निकः श्रौतस्मार्ताग्निरहितो विधुरः। विवाहाग्निः लौकिकस्याप्युपलक्षणम्;

> "औपासने तु होतव्यं शालाग्नौ वा विजानता।
> विकल्पात्त्विच्छया कार्यो नास्त्येनात्र व्यवस्थितिः ॥"

इति **तस्यैव** स्मरणात्। यद्यपि "त्रयः पाकयज्ञाः हुता अग्नौ हूयमानाः, अनग्नौ प्रहुताः, ब्राह्मणभोजने ब्रह्मणि हुताः" इति **आश्वलायनोक्तानां** न सर्वेषामग्निसाध्यत्वम्, तथापि "प्राणभृत उपदधाति" इतिवत् लिङ्गसमवायात् पाकयज्ञशब्दः अग्निसाध्यं पाकयज्ञमाह ॥ १ ॥ एवं स्मार्तेषु अग्निनिर्णयमुक्त्वा श्रौतेष्वाह। सायमुपक्रमात्[4] प्राक् सायनिर्देशः। सूर्यास्तानन्तरमस्पष्टनक्षत्रदर्शनः कालः सायम्। उदितानुदितव्यवस्थया सूर्यरेखादर्शनादर्शनात्मकः कालः प्रातः। तत्राग्निहोत्रं नाम कर्म कुर्यात्। श्रौतस्मार्तकर्मणोः श्रौतस्मार्ताग्निनियमेन स्मार्तेषु गृह्याग्निविधानात् श्रौतेषु श्रौताग्निसिद्धिरर्थसिद्धैवेति न पृथग्वचनम्।

1 वैवाहिकेऽग्नौ—ठ,
2 प्रातरग्नि—ठ.
3 From अनग्निकः up to स्मरणात् omitted in ख.
4 उपक्रमत्वात्—ग, च.

तच्च स्पष्टमुक्तं **योगीश्वरेण**—"श्रौतं वैतानिकाग्निषु" इति ॥ २ ॥ तदसंभव आह। अग्निहोत्रासंभवे अग्निहोत्रदेवताभ्यः अग्नये सूर्यायोभयत्र प्रजापतये च गृह्याग्नौ जुहुयात्; सायंप्रातरनुवर्त्य "तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्यातौ" इति **आश्वलायन**स्मरणात्। सोऽयं नित्यविधिः ॥ ३ ॥

**चन्द्रार्कसंनिकर्षविप्रकर्षयोर्दर्शपूर्णमासाभ्यां यजेत**[1] ॥ ४ ॥ **प्रत्ययनं पशुना** ॥ ५ ॥ **शरद्ग्रीष्मयोश्चाग्रयणेन** ॥ ६ ॥ **व्रीहियवयोर्वा पाके** ॥ ७ ॥ **त्रैवार्षिकाभ्यधिकान्नः** ॥ ८ ॥ **प्रत्यब्दं सोमेन** ॥ ९ ॥ **वित्ताभावे इष्ट्या वैश्वानर्या** ॥ १० ॥

पक्षान्तविधिमाह। चन्द्रार्कयोः संनिकर्षः अमावास्या। तयोः विप्रकर्षः पौर्णमासी। तयोः यथाक्रमं दर्शपौर्णमाससंज्ञकाभ्यां कर्मभ्यां यजेत। आहिताग्निस्त्रेतायाम्; अनाहिताग्निर्गृह्य इति क्रमः। यद्यपि संनिकर्षविप्रकर्षयोरिति सामान्येनोक्तम्, तथापि आत्यन्तिकयोस्तयोः प्रतिपत्संधावेव संधिदिने प्रधानयागः; तत्पूर्वेद्युश्चान्वाधानमिति विवेक्तव्यम्[2]; "अन्वाधानं पूर्वदिने यागः संधिदिने भवेत्" इति **स्मरणात्**। विशेषान्तरं **स्मृतिसिन्धौ** उक्तमस्माभिस्तत एवावगन्तव्यमिति ॥ ४ ॥ अयनमयनं प्रतीति प्रत्ययनम्। [3]रवेः कर्कसंक्रान्तिर्दक्षिणमयनम्; मकरसंक्रान्तिश्चोत्तरमयनम्। तयोः निरूढपशुबन्धेन यजेत। उभयप्रक्रमेऽपि श्रौत एवायम्; श्रौताग्नौ विधानात् ॥ ५ ॥ शरद्ग्रीष्मौ ऋतू। तयोराग्रयणेन नवान्नेष्ट्या स्थालीपाकेन वा श्रौतस्मार्ताग्नी यजेत, क्रमेण शरदि शारदानां व्रीहीणां, ग्रीष्मे यवानाम्; देशविशेषे ग्रीष्म एव यवसिद्धेः वेणुयवाभिप्रायेण; "यथर्तु वेणुयवैरिति विज्ञायते" इति **आपस्तम्ब**स्मरणात्। चकारात् वर्षाग्रहणम्। "वर्षासु श्यामाकैः" इति **तस्यैव** स्मरणात् ॥ ६ ॥ पक्षान्तरमाह। हेमन्ते व्रीहिपाकः। वसन्ते यवपाकः। तत्र वाग्रयणं कर्तव्यम्। शरदि व्रीह्यनुत्पत्तौ हैमन्तिकानां व्रीहीणामाग्रयणमिदम्। न चतुर्थम् ॥ ७ ॥ त्रिषु वर्षेषु पूर्यत इति त्रैवार्षिकम्। ततोऽभ्यधिकमन्नं यस्य स तथाविधः सोमेन यजेत; "त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद् द्विजः" इति **योगि**स्मरणात्। काम्यसोमाभिप्रायमेतत्;

"अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः।
स पीतसोमपूर्वोऽपि तस्य नाप्नोति तत्फलम् ॥"

इति [4]**स्मरणात्** ॥ ८ ॥ अब्दसामान्यश्रवणेऽपि "वसन्ते वसन्ते ज्योतिषा यजेत" इति श्रुत्या प्रतिवसन्तं सोमेन यजेतेति नित्यविधिः ॥ ९ ॥ सोमादिप्रत्याम्नायमाह। पशुसोमचातुर्मास्यादिपर्यासवित्ताभावे वैश्वानर्येष्ट्या यजेत; "एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः" इति **योगि**स्मरणात् ॥ १० ॥

1 यजेत्—ग; जुहुयात्—ठ.
2 वक्तव्यम्—घ.
3 From here up to विधानात् corrupt in ख.
4 योगिस्मरणात्—च.

**[1]यज्ञार्थं [2]भिक्षितमवाप्तमर्थं सकलमेव वितरेत् ॥ ११ ॥**

यज्ञोद्देशेनार्जितम्, '[3]अनेनार्जितधनेनाहं यज्ञमेव करिष्यामि' इति संकल्पितम्; न तु 'यज्ञार्थं मह्यं धनं देहि' इति भिक्षितम्; "क्रियामुद्दिश्य याचकः" इति निषेधात्। तादृशं लब्धमर्थं सर्वमेव प्रतिपादयेत्। न किंचिदपि तस्मात् स्वयमुपयुञ्जीत; "यज्ञार्थं लब्धमदद् भासः काकोऽपि वा भवेत्" इति **योगिस्मरणात्**। अवाप्तमिति विशेषणात् पूर्वमाश्रावितमपि पश्चादुपगतं न सर्वं वितरेत् ॥ ११ ॥

**[4]सायं प्रातर्वैश्वदेवं जुहुयात् ॥ १२ ॥ भिक्षां च भिक्षवे दद्यात् ॥ १३ ॥ अर्चितभिक्षादानेन गोदानफलमाप्नोति ॥ १४ ॥ [5]भिक्ष्वभावे [6]ग्रासमात्रं गवां दद्यात् ॥ १५ ॥ वह्नौ वा प्रक्षिपेत् ॥ १६ ॥ भुक्तेऽप्यन्ने विद्यमाने न भिक्षुकं प्रत्याचक्षीत ॥ १७ ॥**

वैश्वदेवकालमाह। सायं संध्योपासनहोमानन्तरं प्रातर्मध्याह्ने च विश्वदेवसंबन्धि हविर्जुहुयात्;

"मध्याह्ने त्वथ संप्राप्ते बलिं कृत्वात्मनो गृहे।
देवर्षिपितृमनुष्याणां यज्ञान् कुर्वीत वाग्यतः॥"

इति **स्मरणात्** ॥ १२ ॥ सायं प्रातः भिक्षवे संन्यासिने भिक्षां "ग्रासमात्रा भवेद् भिक्षा" इत्युक्तपरिमाणां [7]दद्यात्। चकारात् ब्रह्मचारिणे च; "दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम्" इति **पराशरस्मरणात्** ॥ १३ ॥ तत्रैव गुणफलमाह। आद्यन्तयोः भिक्षादानस्य जलदानमर्चनम्। तदुक्तभिक्षादाने गोदानफलं भवति;

"यतिहस्ते जलं दद्याद् भैक्ष्यं दद्यात् पुनर्जलम्।
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम्॥"

इत्यर्थवादातिशयात् ॥ १४ ॥ भिक्ष्वभावे त्वाह। संन्यासिब्रह्मचार्याद्यभावे ग्रासमात्रं गोभ्यो दद्यात् ॥ १५ ॥ गवाभाव आह। अग्नौ वा ग्रासमात्रं प्रक्षिपेत्। अनेन भिक्षादानस्य नित्यतोक्ता भवति ॥ १६ ॥ भिक्षादाने भोजनप्राक्कालतापवादमाह। गृहपतिभोजनानन्तरमपि पूर्वशिष्टेनान्नेन भिक्षवे भिक्षा देयैव। यत्तु—"दंपत्योर्भुक्तशिष्टं च" इत्यभक्ष्यत्वमस्योक्तम्, [8]तदेकभाजनाभिप्रायेणेति मन्तव्यम्। विद्यमानग्रहणात् भिक्षार्थं पुनः पाको नास्तीति गम्यते। अतिथिभोजनार्थं त्वस्त्येव;

1 शूद्रान्नं यागे परिहरेत् added in ख, ग, ज, ठ and Jolly's edition.
2 धनमवाप्तं भिक्षितं सकलमेव—ठ.
3 अनेनार्जितेन—ग.
4 सायं प्रातश्च—ठ.
5 भिक्षुका—ज; भिक्षुकाभावे चान्नाग्रं गवे दद्यात्—ठ.
6 तन्मात्रं—ग.
7 दद्यात् omitted in ख.
8 तदेकभोजना—ग.

"वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥"

इति मानवात् ॥ १७ ॥

**[1]कण्डनी पेषणी चुल्ली [2]उदकुम्भ उपस्कर इति पञ्च सूना गृहस्थस्य ॥ १८ ॥ तन्निष्कृत्यर्थं [3]च ब्रह्मदेवभूतपितृनरयज्ञान् कुर्यात् ॥ १९ ॥ स्वाध्यायो ब्रह्मयज्ञः ॥ २० ॥ होमो दैवः ॥ २१ ॥ पितृतर्पणं पित्र्यः ॥ २२ ॥ बलिर्भौतः ॥ २३ ॥ नृयज्ञश्चातिथिपूजनम् ॥ २४ ॥**

पञ्चमहायज्ञकरणे निमित्तमाह । कण्डनी तण्डुलादिकण्डनशाला । पेषणी गोधूमादिपेषणशाला । चुल्ली अधिश्रयणी । उदकुम्भः जलमणिः । उपस्करः अवस्करः । एतानि पञ्च सूनाः प्राणिहिंसास्थानानि गृहस्थस्यावश्यंभावीनि । गृहस्थग्रहणं ब्रह्मचारिसंन्यासिव्यावृत्त्यर्थमित्युक्तम् ॥ १८ ॥ अत्र नैमित्तिकमाह । तासां प्राणिहिंसानां निष्कृतिः दुरितोपशमः । तदर्थं ब्रह्मादियज्ञान् कुर्यात् । चकारो नित्यविधिसिद्ध्यर्थः । तेन च नैमित्तिकानामप्येषां नित्यत्वं गम्यते ; "पञ्चयज्ञविधानं तु गृही नित्यं समाचरेत्" इति शङ्खस्मरणात् ॥ १९ ॥ तानाह । स्वाध्यायः वेदः । तस्य च क्रियाविशेषानुपादानात् अध्ययनमध्यापनं वा ब्रह्मयज्ञः ; "यत् स्वाध्यायमधीते स ब्रह्मयज्ञः" "अध्यापनं ब्रह्मयज्ञः" इति च स्मरणात् ॥ २० ॥ होमोऽत्र वैश्वदेवार्थः । स देवयज्ञः ॥ २१ ॥ पितॄणां पित्रादीनां यत् तर्पणं तृप्तिसंपादनं स पितृयज्ञः । तच्च तर्पणाद्वा पितृबलिभिर्वा भवतीत्यन्यतरः ; "पितृयज्ञस्तु तर्पणम् । श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा" इति कात्यायनस्मरणात् ॥ २२ ॥ वैश्वदेवहोमावशिष्टान्नेन भूमौ यत् बलिदानं स भूतयज्ञः ; "देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत्" इति योगिस्मरणात् ॥ २३ ॥ 'एकरात्रं हि निवसन्' इत्यादिना वक्ष्यमाणोऽतिथिः । तस्य वक्ष्यमाणलक्षणं पूजनं मनुष्ययज्ञः ॥ २४ ॥

**देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।**
**न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ २५ ॥**
**ब्रह्मचारी यतिर्भिक्षुर्जीवन्त्येते गृहाश्रमात् ।**
**तस्मादभ्यागतानेतान् गृहस्थो [4]नावमानयेत् ॥ २६ ॥**

[1] खण्डनी—ठ.
[2] कुम्भोपस्करः—ठ.
[3] च omitted in ढ.
[4] न विमानयेत्—ठ.

पञ्चमहायज्ञवत् देवपूजादीनामपि पञ्चानां नित्यत्वमाह। देवतानां हरिहरादीनाम्। अतिथीनां वैश्वदेवागतातिरिक्तानामपि। भृत्यानां पुत्रकलत्रादीनाम्। पितॄणां पित्रादीनां क्षयाहादौ। आत्मनः अहरहः सायं प्रातः यः न निर्वपति। निर्वापोऽत्र पूजनभरणश्राद्धाभ्यवहाराः। तान् न करोति, स जीवन्नपि मृतप्राय एव; अकरणे प्रत्यवायश्रवणात्॥ २५॥

किंच ब्रह्मचारी प्रथमाश्रमी। यतिः संन्यासी। भिक्षुः भिक्षामात्रोपजीवी अन्योऽपि विद्यार्थ्यादिः;

"ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः।
अध्वगः क्षीणवृद्धिश्च षडेते भिक्षुकाः स्मृताः॥"

इति **व्यासोक्तेः**। एते गृहस्थगृहानीतभिक्षयैव जीवन्ति। तस्मात् एतान् अभ्यागतान् भिक्षाकाले प्राप्तान् गृहस्थो गृहाश्रमी नावमानयेत्। यत्किंचिद् दत्त्वा मानमात्रं रक्षेत्; नातिथिवत् भोजयेदेव;

"दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम्।
इच्छया च ततो दद्याद् विभवे सत्यवारितम्॥"

इति **पराशर**स्मरणात्॥ २६॥

**गृहस्थ एव यजते गृहस्थस्तप्यते तपः।**
**प्रददाति गृहस्थश्च तस्माच्छ्रेष्ठो गृहाश्रमी॥ २७॥**
**ऋषयः पितरो देवा भूतान्यतिथयस्तथा।**
**आशासते कुटुम्बिभ्यस्तस्माच्छ्रेष्ठो गृहाश्रमी॥ २८॥**

गृहस्थस्यार्थवादमाह। यज्ञेषु गृहस्थस्यैवाधिकारः; भार्यासाध्यत्वात् तेषाम्। तपःसु कृच्छ्रचान्द्रायणादिषु गृहस्थ एवाधिक्रियते;

"गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥"

इति तस्यैवारण्याश्रयणेन तपोविधानात्। आश्रमसमुच्चये चैतत्। दानेष्वपि गृहस्थ एवाधिकारी; तस्यैव धनसंग्रहविशेषात्। यद्यपि ब्रह्मचारिणोऽपि भिक्षादिसंभवेन दानमस्त्येव, तथाप्यत्र भिक्षादानातिथिभोजनादौ गृहस्थ एवाधिकारीति तदभिप्रायोऽत्र दानशब्द इति न विरोधः। तस्मात् सर्वाश्रमिभ्यो गृहस्थः श्रेष्ठः॥ २७॥

ऋषयः वानप्रस्थाः; "ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः" इति **स्मरणात्**। पितरः श्राद्धे। देवा यज्ञादौ। भूतानि श्वादीनि;

"शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां क्रिमीणां च शनकैर्निक्षिपेद् भुवि ॥"

इति **मानवात्** । अतिथयः वक्ष्यमाणाः । एते सर्वे कुटुम्बिभ्यो गृहस्थेभ्य एव स्वस्ववृत्तिमाशासते । तस्मात् स श्रेष्ठः ॥ २८ ॥

**त्रिवर्गसेवां सततान्नदानं**
**सुरार्चनं ब्राह्मणपूजनं च ।**
**स्वाध्यायसेवां पितृतर्पणं च**
**कृत्वा गृही [1]शक्रपदं प्रयाति ॥ २९ ॥**

**इति [2]श्रीविष्णुस्मृतौ एकोनषष्टितमोऽध्यायः**

यथोक्तगृहस्थधर्मानुष्ठाने फलमाह । धर्मार्थकामाः त्रिवर्गाः; तस्य सेवां यथाकालमनुष्ठानम्; "न प्रातर्मध्यंदिनापराह्णानफलान् कुर्यात् धर्मार्थकामेभ्यः" इति **गौतमस्मरणात्** । सततं नित्यम् । अन्नदानं यथाशक्ति । सुराणां हरिहरब्रह्मादीनां यथावासनमर्चनम् । ब्राह्मणानां वेदशास्त्राभिज्ञानां यथागुणमभ्यर्चनम् । स्वाध्यायस्य वेदस्य सेवा अध्ययनाध्यापनार्थजिज्ञासाः । पितृतर्पणं नित्यनैमित्तिकश्राद्धानुष्ठानम् । एतानि यथोक्तविधिना कृत्वा गृहस्थ इन्द्रलोकं प्राप्नोति ॥ २९ ॥

इति [3]श्रीमन्महाराजाधिराज[4]श्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[4]श्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
एकोनषष्टितमोऽध्यायः

[1] शक्रपुरं—ठ.
[2] वैष्णवे धर्मशास्त्रे गृहस्थप्रकरणमेकोनषष्टम्—ज, ठ.
[3] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां नवपञ्चाशत्तमोऽध्यायः—घ, च.
[4] श्री omitted in ग.

## षष्टितमोऽध्यायः

**ब्राह्मे मुहूर्ते उत्थाय मूत्रपुरीषोत्सर्गं कुर्यात् ॥ १ ॥**

प्रतिज्ञातेषु गृहस्थधर्मेष्वाह्निकं षष्टितमेनाह । रात्रेः पश्चिमो यामः ब्राह्मो मुहूर्तः; "रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते" इति पितामहस्मरणात् । रात्र्युपान्त्यो वा मुहूर्तो ब्राह्मः, "ब्राह्मो नाभस्वतश्चैव मुहूर्ताः क्रमशो निशि" इति स्मरणात् । तत्रोत्थाय जागरित्वा; तत्र निद्रानिषेधात्;

> "ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ।
> तां करोति तु यो मोहात् पादकृच्छ्रेण शुध्यति ॥"

इति प्रायश्चित्तस्मरणात् । पूर्वकालतामात्रे क्त्वा; न तत्कालाव्यवधाने; "समानकर्तृकयोः पूर्वकाले" इत्यनुशासनात्; "उपनीय वेदमध्यापयेत्" इति व्यवधानेऽपि प्रयोगदर्शनाच्च । तेन च भगवन्नामस्मरण-दर्पणदर्शनादिव्यवधानेऽपि न दोषः । तेन च यत् स्मृत्यन्तरोक्तं तत्कृत्वा मौनी ष्ठीवनोच्छ्वासवर्जितः प्रावृतशिराः संवीताङ्गो नभोभूम्यन्तरं पश्यन् मूर्ध्नि पृष्ठे दक्षिणकर्णे वा यज्ञोपवीतं कृत्वा मूत्रपुरीषोत्सर्गं कुर्यात् । तदाह कात्यायनः—

> "वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ।
> शिरः प्रावृत्य कुर्वीत संवीताङ्गोऽवगुण्ठितः ॥
> नभोभूम्यन्तरं पश्यन् कृत्वा मूर्ध्न्युपवीतकम् ।
> कृत्वा यज्ञोपवीतं वा पृष्ठतः कण्ठलम्बितम् ।
> विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे तु दक्षिणे ॥"

इति । एकवस्त्रश्चेत् कर्णे, अन्यथा मूर्ध्नि पृष्ठे वा कुर्यात्; "यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्यात्" इति शाङ्खायनसूत्रात् । कर्णश्च दक्षिणः; "पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्र-मुत्सृजेत्" इति हारीतस्मरणात् । द्वन्द्वान्ते श्रुतस्योत्सर्गस्य प्रत्येकं संबन्धादेकैकोत्सर्गेऽप्युक्तो विधिर्ज्ञेयः ॥१॥

**दक्षिणाभिमुखो रात्रौ दिवा [1]चोदङ्मुखः संध्ययोश्च ॥ २ ॥**

[1] च omitted in ठ.

तत्र कालविशेषेण दिङ्नियममाह । दक्षिणाभिमुखो भूत्वा रात्रौ, दिवा संध्ययोश्चोत्तराभिमुखो मूत्राद्युत्सृजेत् । दिवाशब्दोऽत्र मध्याह्नपरः । ततश्च पूर्वाह्णापराह्णयोर्दिगन्तरं चकारेण समुच्चीयते । तदाह **यमः**—

" प्रत्यङ्मुखस्तु पूर्वाह्णेऽपराह्णे प्राङ्मुखस्तथा ।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥ "

इति । अस्यापवादमाह **मनुः**—

" छायायामन्धकारे वा रात्रावहनि च द्विजः ।
यथासुखमुखः कुर्यात् प्राणबाधाभयेषु च ॥ "

इति ॥ २ ॥

**नाप्रच्छादितायां भूमौ ॥ ३ ॥ न फालकृष्टायाम् ॥ ४ ॥ न छायायाम् ॥ ५ ॥ न चोषरे[1] ॥ ६ ॥ न शाद्वले ॥ ७ ॥**

तत्र व्यतिरेकेण देशविशेषमाह । तृणादिभिरनाच्छादितायां भूमौ मूत्रपुरीषोत्सर्गं न कुर्यात् । एवमुत्तरत्राप्यनुषङ्गः । तेनाच्छादनं गमयति । तदाह **यमः**—" तिरस्कृत्योच्चरेत् काष्ठं पत्रं लोष्टतृणानि वा " इति । तृणेषु विशेषः **तस्यैव**—" अयज्ञियैरनार्द्रैश्च तृणैः संच्छाद्य मेदिनीम् " इति ॥ ३ ॥ फालो हलाग्रप्रोतं लोहम् । तेन कृष्टा [2]अवदारिता या भूस्तस्यामपि न ॥ ४ ॥ छाया यज्ञियवृक्षाणाम्; " न यज्ञियानां वृक्षाणामधस्तात् " इति **हारीतस्मरणात्** ॥ ५ ॥ ऊषरम् ईरिणम्; [3]निष्फला भूमिरिति यावत् । चकारात् नदीपर्वतमस्तकदेवायतनादिग्रहणम्;

" न फालकृष्टे न जले न नद्यां न च पर्वते ।
न जीर्णदेवायतने न च पर्वतमस्तके ॥ "

इति **मानवात्** ॥ ६ ॥ शाद्वलं हरिततृणप्रदेशः ॥ ७ ॥

**न ससत्त्वे ॥ ८ ॥ न गर्ते ॥ ९ ॥ न वल्मीके ॥ १० ॥ न[4] पथि ॥ ११ ॥ न रथ्यायाम् ॥ १२ ॥**

सत्त्वानि क्रिमयः; तद्युक्ते देशे ॥ ८ ॥ गर्तः श्वभ्रम् । तत् बिलस्याप्युपलक्षणम्; " वर्जयेद् वृक्षमूलानि चैत्यश्वभ्रबिलानि च " इति **याम्यात्** ॥ ९ ॥ वल्मीकं वामलूरः; सर्पस्थानमिति यावत् ॥ १० ॥ पन्थाः जनसंचारमार्गः ॥ ११ ॥ रथ्या राजमार्गः । पथः पृथग्वचनं दण्डप्रायश्चित्तगौरवार्थम् ॥ १२ ॥

[1] च omitted in ठ.
[2] अवदारितायां भूमावपि—च.
[3] निष्फलभूमिरिति—घ, च.
[4] This Sūtra omitted in ठ.

**न पराङ्मुखो ॥ १३ ॥ नोद्याने ॥ १४ ॥ [1]नोद्यानोदकसमीपयोः ॥ १५ ॥ न भस्मनि ॥ १६ ॥ [2]नाङ्गारे ॥ १७ ॥**

[3]परकीयमूत्रपुरीषादौ ॥ १३ ॥ उद्यानं फलपुष्पाद्यारामः ॥ १४ ॥ उद्यानमुक्तम् । उदकं जलाशयः कूपतडागादिः । तयोः समीपे ॥ १५ ॥ भस्म रक्षा । तेन श्मशानमप्युपलक्ष्यते ; "राजमार्गश्मशानानि क्षेत्राणि च खलानि च" इति **याम्यात्** ॥ १६ ॥ अङ्गारः दग्धकाष्ठम् । तत्समूहः आङ्गारम् । तत् तुषकपालयोरप्युपलक्षणम् ; "तुषाङ्गारकपालानि देवतायतनानि च" इति **याम्यात्** ॥ १७ ॥

**न गोमये ॥ १८ ॥ न गोव्रजे ॥ १९ ॥ नाकाशे ॥ २० ॥ नोदके ॥ २१ ॥**

गोमयं गोशकृत् । तेन महिष्यादिशकृतो न दोषः ॥ १८ ॥ गोव्रजः गोष्ठम् ॥ १९ ॥ आकाशः अन्तरिक्षम् ; अट्टालिकादि ॥ २० ॥ उदकम् उदकाधारः कूपतडागादिः ॥ २१ ॥

**न प्रत्यनिलानलेन्द्वर्कस्त्रीगुरुब्राह्मणानाम् ॥ २२ ॥ नैवानवगुण्ठितशिराः ॥ २३ ॥**

वाय्वग्निचन्द्रसूर्यस्त्रीपित्रादिब्राह्मणानां प्रत्याभिमुख्येन । आभिमुख्यं दर्शनोपलक्षणम् ;

"वाय्वग्निविप्रानादित्यमपः पश्यंस्तथैव गाः ।
न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम् ॥"

इति **मानवात्** ॥ २२ ॥ न अवगुण्ठितमाच्छादितं शिरो येनासौ तथा ; "शिरः प्रावृत्य वाससा" इति **स्मरणात्** । शिरोऽनवगुण्ठनम् उपानच्छत्रधारणाद्युपलक्षणम् ; "न सोपानत्पादुको वा छत्रवान् नान्तरिक्षकः" इति **स्मरणात्** ॥ २३ ॥

**[4]लोष्टेष्टकापरिमृष्टगुदो गृहीतशिश्नश्चोत्थायाद्भिर्मृद्भिश्चोद्धृताभिर्गन्धलेपक्षयकरं शौचं कुर्यात् ॥ २४ ॥**

शौचविधिमाह । लोष्टं मृत्खण्डः । इष्टका प्रसिद्धा । तयोरन्यतरेण गुदं परिमृज्य । इदं काष्ठतृणयोरप्युपलक्षणम् ; "अथापकृष्य विण्मूत्रं लोष्टकाष्ठतृणादिना" इति **भारद्वाजस्मरणात्** । [5]वामकरधृतमेहनः ; चकारात् उत्क्षिप्तवासाः ; "उदस्तवासा उत्तिष्ठेद् दृढं विधृतमेहनः" इति तस्यैव **स्मरणात्** ।

1 नोदकसमीपे—ठ.
2 नाङ्गारेषु—ठ.
3 परकीये—ग.
4 लोष्टेन परिमृष्ट—ठ.
5 वामकरेण—ग, घ.

उत्थायेति तत्रैव शौचनिषेधः; पुरीषादिबिन्दुभिः ऊर्वोरुपघातप्रसङ्गात्; "विप्रुषश्च यथा न स्युर्यथा वोरू न संस्पृशेत्" इति देवलस्मरणात्। अप्सु बहुवचनं मृत्संख्याभिप्रायेण। तेन प्रतिमृद्ग्रहणमपां ग्रहणम्;

"आद्यन्तयोस्तु शौचानामद्भिः प्रक्षालनं स्मृतम्।
सुनिर्णिक्ते मृदं दद्यान्मृदन्ते जलमेव च॥"

इति देवलस्मरणात्। उद्धृताभिरित्युभयविशेषणम्। तेन जलान्तः शौचनिषेधः, "मूत्रोच्चारे कृते शौचं न स्यादन्तर्जलाशये" इति पैठीनसिस्मरणात्। उद्धृताभावे विवस्वान्—"रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते" इति। तथा पश्चात् मृद्ग्रहणनिषेधश्च;

"उभे मूत्रपुरीषे तु पूर्वमादाय मृत्तिकाम्।
आददानस्तु वै पश्चात् सचैलो जलमाविशेत्॥"

इति दक्षस्मरणात्। मृदो विशेषान्तरमस्मत्कृते स्मृतिसिन्धौ द्रष्टव्यम्। गन्धः विष्ठायाः; लेपः शौचार्थोपात्तायाः मृदः; तयोः क्षयकरम्। इदं चेत्थमेव व्याख्येयम्। अन्यथा गन्धक्षयस्य लेपक्षयपूर्वकत्वात् गन्धक्षयकरमित्येवोच्येत। अत एव योगीश्वरः—"अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात्" इति गन्धग्रहणमेव कृतवान्। कथं तर्हि सर्वस्मृतिषु गन्धलेपग्रहणमिति चेत्; उच्यते—गन्धलेप इति 'मशकार्थो धूपः' इतिवत् विरोधिलक्षणया गन्धक्षयार्थो लेपो मृद इति व्याख्येयम्। तत्क्षयकरं शौचं कुर्यात् इति। तथा च दक्षः—"दातव्यमुदकं तावद्यावत् स्यान्मृत्तिकाक्षयः" इति। शौचं, शिश्नगुदवामकरदक्षिणकरकरद्वयदक्षिणपादवामपादानां क्रमेण शुचिभावं कुर्यात्। तत्र हस्तनियममाह देवलः—

"धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत्।
तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेत्।
प्रकृतिस्थितिरेषा हि कारणादुभयक्रिया॥"

इति। कारणं व्याध्यादि; तेनोभाभ्यामुभयक्रियेति॥ २४॥

**एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश।**
**उभयोः सप्त दातव्या [1]मृदस्तिस्रस्तु पादयोः॥ २५॥**

मृद्भिरिति बहुत्वेऽपि विवक्षितां संख्यामाह। लिङ्गगुदवामकरोभयकरपादेषु क्रमेणैकत्रिदशसप्तत्रिवारं मृद्देयेति। एकत्र वामकरे; "दश वामकरे तथा" इति स्मरणात्। अत्र च पाठक्रमेणैव शौचक्रमः; पादयोस्तु "शौचाद्दते वामपादम्" इति स्मृत्यन्तरीयः। उभयोत्सर्गे चैतत्। केवलमूत्रोत्सर्गे तु शातातपः—

[1] पादयोस्तिस्र एव च—ज, ठ.

" एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शुक्रे तद् द्विगुणं भवेत् ॥ "

इति । यदोक्तसंख्यया गन्धलेपक्षयो न भवति, तदा सैवावर्तनीया । नेच्छया कल्पनीया ; नियमादृष्टार्थत्वात् । एतच्च स्वप्नोत्सर्गे । स्त्रीसङ्गे तु **पराशरः**—

" ऋतौ तु मैथुने स्नायाद्गर्भधारणशङ्कया ।
अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥ "

इति । उभयोपादानमुभयशौचार्थम् । विशेषान्तरं स्मृतिसिन्धोरवधेयम् ॥ २५ ॥

**एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।**
**[1]त्रिगुणं तु वनस्थानां यतीनां [2]तु चतुर्गुणम् ॥ २६ ॥**

**इति [3]श्रीविष्णुस्मृतौ षष्टितमोऽध्यायः**

उक्तशौचस्याश्रमविशेषेण व्यवस्थामाह । 'एका लिङ्गे' इत्याद्युक्तं शौचं गृहस्थानां ज्ञेयम् । ब्रह्मचारिवानप्रस्थसंन्यासिनां तु तदेव द्विगुणं त्रिगुणं चतुर्गुणं च क्रमेण ज्ञेयम् । अत्र विशेषमाह **दक्षः**—

" यद्दिवा विहितं शौचं तदर्धं च निशि स्मृतम् ।
तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ।
स्त्रीशूद्रयोरर्धमानं शौचं प्रोक्तं मनीषिभिः ॥ "

इति । **पराशरोऽपि**—

" उपविश्य तु विण्मूत्रं कर्तुं यस्ते न विन्दति ।
स कुर्यादर्धशौचं तु तस्य शौचस्य सर्वदा ।
बालस्यानुपनीतस्य गन्धलेपक्षयापहम् ॥ "

इति ॥ २६ ॥

**इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[5]श्रीरामपण्डितात्मज-[5]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां**
**षष्टितमोऽध्यायः**

[1] त्रिगुणं स्याद्—ठ.
[2] च—ठ.
[3] वैष्णवे धर्मशास्त्रे शुद्धिप्रकरणं षष्टितमम्—ज, ठ.
[4] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां षष्टितमोऽध्यायः—घ, च.
[5] श्री omitted in ग.

# एकषष्टितमोऽध्यायः

[1]अथ पालाशं दन्तधावनं नाद्यात् ॥ १ ॥ नैव[2] श्लेष्मातकारिष्टविभीतकधवधन्वनजम्[3] ॥ २ ॥ न च बन्धूकनिर्गुण्डीशिग्रु-[4]तिल्वतिन्दुकजम् ॥ ३ ॥ न च[5] कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलुजम् ॥ ४ ॥ न पारिभद्रकाम्लिकामोचकशाल्मली[6]शणजम् ॥ ५ ॥

क्रमप्राप्तं दन्तधावननिर्णयमेकषष्टितमेनाध्यायेनाह । अथ शौचानन्तरम् । यद्यपि शौचानन्तरं गण्डूषाचमने वक्तव्ये, तथापि आचमनं दन्तधावनानन्तरमपि वक्तव्यत्वात् तत्रैव वक्ष्यते । गण्डूषांस्त्वाह **आश्वलायनः**—

"कुर्याद् द्वादश गण्डूषान् पुरीषोत्सर्जने द्विजः ।
मूत्रोत्सर्गे तु चतुरो भोजनान्ते तु षोडश ।
भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमिष्यते ॥"

इति । ततो वक्ष्यमाणरीत्याचम्य दन्तधावनमद्यात् । तच्च पलाशवृक्षोत्थं न । दन्तधावनमित्युपलक्षणम्; "पालाशमासनं पादुके दन्तधावनमिति च वर्जयेत्" इति **आपस्तम्बीयात्** ॥ १ ॥ श्लेष्मातकः शेलुः । अरिष्टः फेनिलः; न निम्बः, तस्याग्रे विधानात् । विभीतकः कलिद्रुमः । धवः प्रसिद्धः । धन्वनः धनविभीतकः । एतेभ्यो जातं नाद्यात् ॥ २ ॥ बन्धूकः बन्धुजीवकः । निर्गुण्डी इन्द्राणिका, सुवहा वा । शिग्रुः सौभाञ्जनः । तिल्वः मार्जनः । तिन्दुकः सूर्यकः । एभ्यो जातं च न ॥ ३ ॥ कोविदारः युगपत्रकः । शमी सक्तुफला । पीलुः गुडफलः । पिप्पलः अश्वत्थः । इङ्गुदः तापसतरुः । गुग्गुलुः पूरः । तेभ्योऽपि न ॥ ४ ॥ पारिभद्रकः शक्रपादपः । अम्लिका चिञ्चा । मोचकः शिग्रुभेदः । शाल्मली स्थिरायुः । शणः प्रसिद्धः । एभ्यो जातं च न । शर इति पाठे शरखण्डं च न ॥ ५ ॥

[1] अथ न पालाशं दन्तधावनमद्यात्—ठ.
[2] एव omitted in ठ.
[3] धन्व for धन्वन—घ.
[4] तिल्कक for तिल्व—ठ.
[5] च omitted in ठ.
[6] शल्मली for शाल्मली—ठ.

**न मधुरम् ॥ ६ ॥ नाम्लम् ॥ ७ ॥ नोर्ध्वशुष्कम् ॥ ८ ॥ न सुषिरम् ॥ ९ ॥ न पूतिगन्धि ॥ १० ॥ न पिच्छिलम् ॥ ११ ॥ [1]न दक्षिणापराभिमुखः ॥ १२ ॥ अथाचोदङ्मुखः[2] प्राङ्मुखो वा ॥ १३ ॥**

मधुरं मधुररसं मधुयष्टिकादि ॥ ६ ॥ अम्लरसम् आमलक्यादि ॥ ७ ॥ ऊर्ध्वं वृक्षशाखायामेव शुष्कम् ॥ ८ ॥ सुषिरं सच्छिद्रम् ॥ ९ ॥ पूतिगन्धि दुर्गन्धि ॥ १० ॥ पिच्छिलं श्लक्ष्णम् ॥ ११ ॥ वर्ज्यां दिशमाह । दक्षिणा याम्या । अपरा प्रतीची । तदभिमुखो नाद्यात् ॥ १२ ॥ ग्राह्यदिशमाह । प्रागुदङ्मुखो वाद्यात् । चकारात् ऐशान्यादीनां ग्रहणम्; "प्राग्वोदङ्मुख आसीनः प्रागुदङ्मुख एव वा" इति **आश्वलायन**स्मरणात् । निषेधादेव विधिसिद्धौ पुनर्विधानमनिषिद्धाग्नेयादिदिग्निवृत्त्यर्थम् । विधानादेव च निषेधसिद्धौ पुनर्वचनमदृष्टविरोधे[3] च सत्येव दृष्टफलविरोधार्थम् । यदाह **आश्वलायनः**—"दक्षिणेन तथा रिष्टं पश्चिमेन पराजयः" इति ॥ १३ ॥

**[4]वटासनार्कखदिरकरञ्जबदरसर्जनिम्बारिमेदापामार्गमालती-ककुभबिल्वानामन्यतमम् ॥ १४ ॥ कषायं तिक्तं कटुकं च[5] ॥ १५ ॥**

विहितं तदाह । वटः न्यग्रोधः । असनः जीवकम् । अर्कः मन्दारः । खदिरः दन्तधावनः । करञ्जः प्रकीर्यः । बदरः कर्कन्धुः । कादरेति पाठे श्वेतखदिरः । कर्करेति पाठे कक्करः । करवीरेत्यपपाठः; तस्योपविषत्वेनाभक्ष्यत्वात् । सर्जः सालः । निम्बः पिचुमन्दः । अरिमेदः विट्खदिरः । अपामार्गः शैखरिकः । मालती जातिपुष्पवल्ली । ककुभः अर्जुनः । बिल्वः श्रीफलः । एषामेकतमं दन्तधावनं ग्राह्यम् ॥ १४ ॥ किंच उक्तातिरिक्तमपि कषायादि संग्राह्यम् । चकारात् जम्बूप्लक्षौदुम्बरादि स्मृत्यन्तरीयं ज्ञेयम् ॥ १५ ॥

**[6]कनीन्यग्रसमस्थौल्यं [7]सकूर्चं द्वादशाङ्गुलम् ।**
**[8]प्रातर्भूत्वा च यतवाग् भक्षयेद्दन्तधावनम् ॥ १६ ॥**

तत्परिमाणाद्याह । कनीन्यग्रसमं स्थौल्यं यस्य तादृशम् । सकूर्चं, न चर्वितभागेन युक्तम् । स च पर्वार्धमात्रः; "कनिष्ठिकाग्रवत् स्थूलं पर्वार्धकृतकूर्चकम्" इति **स्मरणात्** । वितस्तिमितम् । तच्च विप्राणाम्;

[1] This Sūtra omitted in ख.
[2] च omitted in ठ.
[3] अदृष्टाविरोधे—ग.
[4] करवीर for बदर—ठ.
[5] वा—ठ.
[6] This verse omitted in ख.
[7] सुकूर्चम्—ठ.
[8] प्रातर्भुक्त्वा—ठ.

"द्वादशाङ्गुलकं विप्रे काष्ठमाहुर्मनीषिणः ।
क्षत्रविट्शूद्रजातीनां नवषट्चतुरङ्गुलम् ।
दन्तानां शोधनायालं नारीणां चतुरङ्गुलम् ॥"

इति **गर्ग**स्मरणात् । प्रातः उदयात् प्राक्; "पुरोदयाद्रवेस्त्वद्यान्नोदितेऽस्तमिते रवौ" इति **स्मरणात्** । ब्राह्ममुहूर्तानुवृत्तौ पुनः प्रातर्वचनमामध्याह्नं तद्विधानार्थम्;

"मध्याह्ने स्नानवेलायां भक्षयेद् दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥"

इति **याम्ये** मध्याह्ने निषेधात् । [1]यतवाक् मौनी । मूत्रोत्सर्गमारभ्य मौनसिद्धौ पुनर्भूत्वेति वचनं मौनान्तरविधानेन पूर्वमौनस्याचमनान्तताबोधनाय । भक्षयेत् चर्वयेत्; न निगिरेत् ॥ १६ ॥

**प्रक्षाल्य भङ्क्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः ।**
**अमावास्यां न चाश्नीयाद् दन्तकाष्ठं [2]कदाचन ॥ १७ ॥**

## इति [3]श्रीविष्णुस्मृतौ एकषष्टितमोऽध्यायः

तत्कालप्रतिपत्त्याद्याह । तस्य प्रक्षालनं चाद्यन्तयोः; "प्रक्षाल्य भक्षयेत् पूर्वं प्रक्षाल्यैव [4]तु संत्यजेत्" इति **अङ्गिरः**स्मरणात् । तच्च भङ्क्त्वा जह्यात् उच्छिष्टताज्ञापनार्थाय । शुचौ देशे; नैर्ऋत्यां दिशि; "राक्षस्यां संत्यजेत् काष्ठं दिशि निर्मृज्य तच्छुचौ" इति **स्मरणात्** । प्रयत्नतः अविस्मरणेन । अमावास्यायां कदाचन श्राद्धकर्तव्यताकर्तव्यतयोः दन्तकाष्ठं नाश्नीयात्; "श्राद्धे दर्शदिने चैव" इति **देवलेन** पृथग्ग्रहणात् । अमावास्या पौर्णमास्युपलक्षणम्;

"अष्टम्योश्च चतुर्दश्योः पञ्चदश्योस्त्रिजन्मसु ।
व्यतीपाते च संक्रान्त्यां दन्तकाष्ठं न भक्षयेत् ॥"

इति **स्मरणात्** । दन्तकाष्ठग्रहणात् जिह्वोल्लेखस्यानिषेधः; "जिह्वोल्लेखः सदैव हि" इति **व्यास**स्मरणात् ॥ १७ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-
श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारि[6]श्री**रामपण्डिता**त्मज-
[6]श्री**नन्दपण्डित**कृतौ श्री**विष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्याम्**
एकषष्टितमोऽध्यायः

[1] From यतवाक् up to बोधनाय omitted in घ.
[2] कथंचन—ज.
[3] वैष्णवे धर्मशास्त्रे दन्तधावनप्रकरणमेकषष्टम्—ज, ट.
[4] च—ख.
[5] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यामेकषष्टितमोऽध्यायः—घ, च.
[6] श्री omitted in ग.

## द्विषष्टितमोऽध्यायः

**अथ [1]द्विजातीनां कनीनिकामूले प्राजापत्यं नाम तीर्थम् ॥ १ ॥ अङ्गुष्ठमूले ब्राह्मम् ॥ २ ॥ अङ्गुल्यग्रे दैवम् ॥ ३ ॥ तर्जनीमूले पित्र्यम् ॥ ४ ॥**

दन्तधावनानन्तरमाचमनं तदर्थं तीर्थनिर्णयं च द्विषष्टितमाध्यायेनाह । अथशब्दः गण्डूषानन्तर्यार्थः ;

"कृतशौचो द्विराचम्य कृत्वादौ दन्तधावनम् ।
पश्चाद् द्वादशगण्डूषैः शुद्धिं कृत्वा द्विराचमेत् ॥"

इति **शौनक**स्मरणात् । द्विजातिग्रहणं च[2] वक्ष्यमाणे आचमने तीर्थसंख्ययोरधिकारिनियमाय । न स्त्रीशूद्रयोस्तीर्थाभावबोधनाय ; तर्पणादौ तीर्थाभावापत्तेः । कनीनिका कनिष्ठाङ्गुलिः । तन्मूले प्राजापत्यं तीर्थम् । नामेति स्मृत्यन्तरप्रसिद्धं तीर्थान्तरमपि दर्शयति । तत्र **वसिष्ठः**—"अङ्गुलिकनिष्ठिकामूले दैवम्" इति । "आर्षं कनिष्ठिकामूले" इति **आश्वलायनः** । तेनात्र दैवार्षप्राजापत्यानां विकल्पः ॥ १ ॥ मूले ; आद्ये पर्वणि । नामेत्यनुवर्तते । तेन मूलोत्तरतो रेखायामपि ; "अङ्गुष्ठमूलस्योत्तरतो रेखा ब्रह्मतीर्थम्" इति **वसिष्ठ**स्मरणात् ॥ २ ॥ नामेत्यनुवर्तते । तेन दैवमानुषप्राजापत्यानां विकल्पः । "अङ्गुल्यग्रेषु मानुषम्" इति **वसिष्ठः** । "कायमग्राङ्गुलीषु च" इति **आश्वलायनः** । अग्रं मूल-मध्योपलक्षणम् । तेन मूले मध्येऽपि दैवम् ; "अङ्गुलिमूलं दैवम्" इति **बोधायनीयात्** । "अङ्गुलि-पर्वणि दैवम्" इति **शङ्ख**स्मरणात् । अग्रे दैवमित्युक्त्या मध्ये अन्यदुक्तम् ; "अङ्गुल्यमृषीणाम्" इति **वासिष्ठात्** । तेन चाङ्गुलिमध्ये दैवार्षयोर्विकल्पः ॥ ३ ॥ मूले तर्जन्यङ्गुष्ठान्तराले पित्र्यम् । नामेत्यनुवर्तते । तेन "अङ्गुष्ठाग्रं पित्र्यम्" इति **बोधायनीयमपि** सिद्धम् । एतानि च दक्षिणकरे[3] ; "ब्राह्मणस्य दक्षिणहस्ते पञ्च तीर्थानि" इति **प्रचेतः**स्मरणात् । पञ्चमं चाग्नेयं करमध्ये ; "पाणिमध्ये आग्नेयम्" इति **वासिष्ठात्** । तत्रैव सौम्यमपि ; "मध्ये सौम्यं प्रतिष्ठितम्" इति **योगियाज्ञवल्कीयात्** । न चाचमने ब्राह्मस्यैव विनियोगादत्रेतराभिधानमसंगतमिति[4] शङ्क्यम् ;

[1] द्विजानां—ठ.
[2] च omitted in घ.
[3] एव added in घ.
[4] अभिधानासंगतिरिति—घ.

" ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥ "

इति भारद्वाजीयविकल्पार्थत्वेन संगतेः । त्रित्वविधानादेव पित्र्यनिषेधसिद्धौ पृथग्वचनमनिषिद्धानां मानुषाग्नेयार्षाणां ग्रहणार्थम् ॥ ४ ॥

**अनग्न्युष्णाभिरफेनिलाभिः [1]अशूद्रैककरावर्जिताभिरक्षाराभिरद्भिः शुचौ देशे स्वासीनोऽन्तर्जानु प्राङ्मुखश्चोदङ्मुखो वा तन्मनाः सुमनाश्चाचामेत् ॥ ५ ॥**

आचमनविधिमाह । अग्निना उष्णाः अग्न्युष्णाः । न अग्न्युष्णाः अनग्न्युष्णाः । अग्न्युष्णानिषेधश्चानातुरस्य; " उदकेनातुराणां तु तथोष्णेनोष्णपायिनाम् " इति याम्यात् । शुद्धिरिति शेषः । उष्णपायिनः दीक्षिताः । अग्न्युष्णेनाग्न्युदकस्यापि ग्रहणम्; " न चाग्न्युदकशेषेण कुर्यादाचमनं बुधः " इति स्मरणात् । अग्न्युदकम् अग्निपरिचरणशिष्टम् । अग्निग्रहणात् अर्कोष्णसहजोष्णयोरनिषेधः । अफेनिलाः फेनरहिताः । फेनो बुद्बुदग्रहणाय; " रहितं बुद्बुदैः फेनैर्मलैरन्यैरमेध्यजैः " इति स्मरणात् । शूद्रश्चैककरश्च; ताभ्याम् आवर्जिता या न भवन्ति आपः, ताः । एक एव करो यस्यासावेककरः हस्तान्तरविकलः । एकेनैव वामकरेणानीताः । शूद्रोऽनुपनीतः; " न चैवाव्रतहस्तेनापरिज्ञातहस्ततः " इति पाराशर्यात् । अक्षाराः क्षाररसरहिताः । संभवे चेदम् । असंभवे तु यथालाभम्;

" यस्मिन् देशे तु यत् तोयं या च यत्रैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात् तया शौचं विधीयते ॥ "

इति मानवात् । क्षारत्वेन रूपरसगन्धादीनि गृह्यन्ते । " अद्भिश्च प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः " इति स्मरणात् । अद्भिः द्रव्यान्तरासंस्पृष्टाभिः; " एलालवङ्गकर्पूरगन्धाद्यैर्वासितैर्जलैः । नाचामेत् " इति स्मरणात्; " आरूढपादुको वापि न शुध्येत द्विजोत्तमः " इति संवर्तीयाच्च । आचम्येति शेषः । स्वासीनः सूपविष्ट इत्यन्यथात्वनिषेधः; " न तिष्ठन्न प्रणतो न प्रह्वो न प्रसारितपादः " इति बोधायनीयात् । उपवेशनस्थलाभावे तिष्ठतापि कार्यम्; " तिष्ठन्नाचामेत् प्रह्वो वा " इति [2]आपस्तम्बीयात् । जानुनोरन्तरित्यन्तर्जानु; जानुनोर्मध्ये कृतकरः; " अन्तरूर्वोरत्नी कृत्वा त्रिरपः पिबेत् " इति हारीतस्मरणात् । " दक्षिणं बाहुं जान्वन्तरा कृत्वा " इति गौतमीयात् वामस्यानियमः । स च दक्षिणः; " निर्मलं सलिलं शुद्धं दक्षिणेन करेण तु " इति स्मरणात् । सव्यान्वारब्धश्च; " तावन्नोपस्पृशेद्विप्रो यावद्वामेन न स्पृशेत् " इति याम्यात् । प्राङ्मुखश्चोदङ्मुखो वा; चकारात् ऐशान्यभिमुखः; " ततः प्राङ्मुख आसीनः

[1] न शूद्रैककर—घ.

[2] गौतमीयात्—घ, च.

प्रागुदङ्मुख एव वा" इति **आश्वलायनस्मरणात्**[1]। समुच्चयासंभवेनैव विकल्पसिद्धौ वाशब्दो दिगन्तराभिमुख्ये प्रायश्चित्तार्थः ;

" याम्यप्रत्यङ्मुखत्वेन कृतमाचमनं यदि ।
प्रायश्चित्तं तदा कुर्यात् स्नानमाचमनं क्रमात् ॥ "

इति **स्मरणात्**। तास्वप्सु चक्षुर्द्वारा मनो यस्येति तन्मनाः तन्निरीक्षकः ; " त्रिः पिबेदम्बु वीक्षितम्" इति **दक्षस्मरणात्**। वीक्षणासंभवे वस्त्रपूतं पिबेत्। " अनुष्णाफेनशीताभिः पूताभिर्वस्त्रचक्षुषा " इति [2]**प्रचेतःस्मरणात्**। वस्त्रचक्षुषोः रात्रिदिनाभिप्रायेण विकल्पः। सुष्ठु प्रसन्नं मनो यस्येति सुमनाः ; " कृत्वोपवीतं सव्येंऽसे वाङ्मनःकायसंयतः " इति **शौनकीयात्**। आचामेत ; आचमनक्रियां निर्वर्तयेत्। चकारात्

" निबद्धशिखकच्छस्तु द्विज आचमनं चरेत् ।
सोष्णीषो बद्धपर्यङ्कः प्रौढपादश्च यानगः ।
दुर्देशप्रपदश्चैव नाचामन् शुद्धिमाप्नुयात् ॥ "

इत्यादिविधिनिषेधयोर्ग्रहणम् ॥ ५ ॥

**ब्राह्मेण तीर्थेन त्रिराचामेत्**[3] ॥ ६ ॥ **द्विः प्रमृज्यात्**[4] ॥ ७ ॥

तत्र तीर्थादिनियममाह। ब्राह्मदैवप्राजापत्यानामन्यतमेन तीर्थेन पुण्यभागेन जलमार्गेण वा त्रिश्चतुर्वा आचामेत् ; " त्रिश्चतुर्वा " इति **गौतमीयात्**। अयं च तीर्थसंख्ययोर्नियमो द्विजानामेव ; " प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् " इति **योगिस्मरणात्**। स्त्रीशूद्रयोस्तु [5]सकृदेव ; " स्त्री चैकजातिर्दैवेन सकृदाचमनं चरेत् " इति **देवलस्मरणात्**। पुनराचमनपरामर्शो दन्तधावनात् प्रागूर्ध्वं च द्विराचमनार्थः ; " द्विराचम्यात्मानमभ्युक्ष्य दन्तान् शोधयित्वा पुनर्द्विराचामेत् " इति **परिशिष्टात्** ॥ ६ ॥ अनन्तरकृत्यमाह। अङ्गुष्ठमूलेन मुखमिति शेषः ; " पाणिं प्रक्षाल्य स्पृष्टाम्भसाङ्गुष्ठमूलेनाकुञ्चितोष्ठमास्यं द्विः प्रमृज्य सकृच्च संहतमध्याङ्गुलिभिः[6] " इति **परिशिष्टात्** ॥ ७ ॥

**खान्यद्भिर्मूर्धानं हृदयं स्पृशेत्** ॥ ८ ॥

खानि नाभेरूर्ध्ववर्तीनि तत्तदङ्गुलिभिः स्पृष्ट्वा, अनन्तरं मूर्धानं हृदयं च स्पृशेत्। तथाच **परिशिष्टे**—" पाणिं प्रक्षाल्य सव्यपाणिपादौ शिरश्चाभ्युक्ष्य स्पृष्टाम्भसा संहतमध्यमाङ्गुलित्रयेणास्य-

1 आश्वलायनीयात्—ख, ग.
2 प्राचेतसात्—ख, ग.
3 त्रिः पीत्वा—ज.
4 परिमृज्यात्—ज.
5 सकृत् दैवेन—ख, ग.
6 मध्यमाङ्गुलिभिः—ख.

मुपस्पृश्य साङ्गुष्ठप्रदेशिन्या घ्राणबिलद्वयमनामिकया चक्षुःश्रोत्रे कनिष्ठया च [1]नाभिं तलेन हृदयं सर्वाभिरङ्गुलिभिः शिरस्तदग्रैरंसौ चोपस्पृशेदित्याचमनम्" इति । साङ्गुष्ठत्वम् अनामिकाकनिष्ठयोरपि विशेषणम् । क्रमश्च प्रादक्षिण्येन स्मृत्यन्तरादवसेयः ॥ ८ ॥

**हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ।**
**शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः ॥ ९ ॥**

इति [2]श्रीविष्णुस्मृतौ द्विषष्टितमोऽध्यायः

जलपाने कालपरिमाणमाह । प्रथमं पीतमुदकं यावद्धृदयं गच्छति, तावत् प्रतीक्ष्य द्वितीयं तृतीयं च पिबेत्; तदा विप्रः शुध्येत्, न त्वरया मन्थरं वा । एवं कण्ठतालुगतं प्रतीक्ष्य क्षत्रियवैश्यौ पिबतश्चेत् शुध्यतः; "हृदयप्रापि त्रिः पीत्वा" इति **परिशिष्टात्**; "अप्सु प्राप्तासु हृदयं ब्राह्मणः शुद्धिमाप्नुयात्" इति **स्मरणाच्च** । स्त्रीशूद्रयोस्तु [3]सकृदेव पीताभिः तालुमात्रस्पृष्टाभिरद्भिः शुद्धिरिति विशेषः ॥ ९ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मजश्रीतम्मणनायकापरनामधेय-
**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[5]**श्रीरामपण्डितात्मज**-
[5]**श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां**
द्विषष्टितमोऽध्यायः

[1] नाभितलेन—घ.
[2] वैष्णवे धर्मशास्त्रे आचमनप्रकरणं द्विषष्टम्—च.
[3] सकृदेव पीताभिः omitted in घ.
[4] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां द्विषष्टितमोऽध्यायः—च, घ.
[5] श्री omitted in ग.

# त्रिषष्टितमोऽध्यायः

**अथ योगक्षेमार्थमीश्वरमभिगच्छेत्**[1] **॥ १ ॥ नैकोऽध्वानं प्रपद्येत**[2] **॥ २ ॥ नाधार्मिकैः सार्धम् ॥ ३ ॥ न वृषलैः ॥ ४ ॥ न द्विषद्भिः ॥ ५ ॥ नातिप्रत्यूषसि ॥ ६ ॥** [3]**नातिसायम् ॥ ७ ॥ न संध्ययोः ॥ ८ ॥** [4]**न मध्याह्ने ॥ ९ ॥ न**[5] **संनिहितपानीयम् ॥ १० ॥**

गृहस्थधर्माणां धनसाध्यत्वात्[6] तदार्जनोपायं त्रिषष्टितमेनाध्यायेनाह । अथ; अष्टधा विभक्तदिनाद्यभागद्वयविहितकृत्यानन्तरम्; " तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् " इति **दक्षस्मरणात्**। व्युत्क्रमोक्तिस्तु प्रवासे " पाथ शूद्रवदाचरेत् " इति **वचनात्** प्रातःस्नानादीनामनावश्यकताबोधनाय । अलब्धलाभो योगः । लब्धपरिपालनं क्षेमः । इष्टापूर्तें वा योगक्षेमौ; " क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः " इति **लौगाक्षिस्मरणात्**। तदर्थमीश्वरं राजानमन्यं वा धनिकं स्वदेशे परदेशे वा स्थितमभिगच्छेत् ॥ १ ॥ निषेधमुखेन गमने गुणविधिमाह । एकोऽसहायः; " सार्थः प्रवसतो मित्रम् " इति **भारतात्** ॥ २ ॥ अधार्मिकाः अधर्मशीलाः । तैः सार्धम्; तत्सहायेन ॥ ३ ॥ वृषलाः शूद्राः; तेषां धार्मिकत्वेऽपि अन्नपानाद्यनर्हत्वात् ॥ ४ ॥ द्विषन्तः कृतवैराः; " न विश्वसेदविश्वस्तम् " इति नीतेः ॥ ५ ॥ प्रत्यूषः प्रभातः

" पञ्च पञ्च उषःकालः सप्त पञ्चारुणोदयः ।
अष्ट पञ्च भवेत् प्रातः शेषः सूर्योदयः स्मृतः ॥ "

इत्युक्तलक्षणः । तस्मात् पूर्वकालः तदतिशयः । तस्मिन् ॥ ६ ॥ दिनपञ्चमो भागः सायम्; तमतिक्रम्य [7]अस्तवेलायाम् ॥ ७ ॥ उदयास्तयोः प्रागूर्ध्वं घटिकात्रयं संध्ये

" उदयात् प्राक्तनी संध्या घटिकात्रयमिष्यते ।
सायं संध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ "

इत्युक्तलक्षणे । तयोश्च ॥ ८ ॥ [8]मध्याह्नं कुतपः ॥ ९ ॥ जलसमीपवर्तिना मार्गेण ॥ १० ॥

1 अध्वानमधिगच्छेत्—ज, ट; अध्वानमुपगच्छेत्—ख.
2 गच्छेत्—ज, ट.
3 न सायम्—ठ.
4 Sūtra-s 9 and 10 omitted in च.
5 नासंनिहित—ठ.
6 धनसाधनसाध्यत्वात्—घ.
7 अस्तमय—घ.
8 Commentary on Sūtra-s 9 and 10 omitted in च.

**नातितूर्णम् ॥ ११ ॥ न [1]सततं बालव्याधितार्तैर्वाहनैः ॥ १२ ॥ न हीनाङ्गैः ॥ १३ ॥ [2]न दीनैः ॥ १४ ॥ न गोभिः ॥ १५ ॥ [3]नादान्तैः ॥ १६ ॥**

सह यातृभ्योऽतित्वरया ॥ ११ ॥ अप्रौढैः व्याध्यभिभूतैः पीडावद्भिश्च वाहनैः अश्वादिभिः सततम् अविश्रामेण न यायात्। [4]व्यालेति पाठे दुष्टैः ॥ १२ ॥ हीनाङ्गाः काणखोडादयः ॥ १३ ॥ दीनैः दुर्बलैः ॥ १४ ॥ गोभिः बलीवर्दैः; "गवां तु यानं पृष्ठेन सर्वथैव विगर्हितम्" इति मानवात् ॥ १५ ॥ अदान्तैः अशिक्षितैः। 'अध्वानं प्रपद्येत' इत्यनुवर्तते ॥ १६ ॥

**यवसोदके वाहनानामदत्त्वा[5] आत्मनः क्षुत्तृष्णापनोदनं[6] न कुर्यात् ॥ १७ ॥ न चतुष्पथमधितिष्ठेत् ॥ १८ ॥ न रात्रौ वृक्षमूले[7] ॥ १९ ॥ न शून्यालयम् ॥ २० ॥ न तृणम् ॥ २१ ॥ न [8]पशूनां बन्धनागारम् ॥ २२ ॥ न केशतुषकपालास्थिभस्माङ्गारान् ॥ २३ ॥ [9]न कार्पासास्थि ॥ २४ ॥**

पथिकधर्मानाह। अश्वादिभ्यः तृणोदकमदत्त्वा स्वयं न किंचिदुपभुञ्जीत ॥ १७ ॥ पथिकनिवासस्थानमाह। चतुर्णां मार्गाणां समवाये न प्रतिश्रयं कुर्यात् ॥ १८ ॥ वृक्षाधस्ताच्च रात्रौ। रात्रिग्रहणात् दिवा न निषेधः ॥ १९ ॥ निर्मनुष्यं गृहम् ॥ २० ॥ सतृणप्रदेशम् ॥ २१ ॥ गवादिपशुबन्धनगृहम्। सूनाबन्धनागाराविति पाठे सूनागारं हिंसागृहम्; बन्धनागारं बन्दीगृहम् ॥ २२ ॥ तुषाः धान्यत्वचः। कपालानि खर्पराणि। अङ्गाराः निर्वाणालातानि। शेषं प्रसिद्धम्। एतद्युक्तं प्रदेशम् ॥ २३ ॥ कार्पासास्थि कार्पासबीजयुक्तं देशं नाधितिष्ठेदिति प्रत्येकं निषेधोऽत्यादरार्थः ॥ २४ ॥

**चतुष्पथं प्रदक्षिणीकुर्यात् ॥ २५ ॥ देवतार्चां च ॥ २६ ॥ प्रज्ञातांश्च वनस्पतीन् ॥ २७ ॥**

गमनकालीनान् नियमानाह। पूर्वोक्तं चतुष्पथं प्रदक्षिणीकृत्य गच्छेत्। न तन्मध्येन; विघ्नदेवताधिष्ठानत्वात् ॥ २५ ॥ देवताप्रतिमां च ॥ २६ ॥ प्रसिद्धान् महावृक्षान् वंशीवटादीन् ॥ २७ ॥

[1] संततम्। न व्यालव्याधिताशास्तैर्वाहनैः—ठ.
[2] नादान्तैः—ठ.
[3] नाधिकाङ्गैः—ठ.
[4] व्याधितात्मेति—ग.
[5] अप्रदाय—ठ.
[6] अपनोदने—घ.
[7] मूलम्—ठ.
[8] सूनाबन्धनागारौ—ठ.
[9] This Sūtra omitted in ठ.

**अग्निब्राह्मणगणिकापूर्णकुम्भादर्शच्छत्रध्वजपताकाश्रीवृक्षवर्धमाननन्द्यावर्तांश्च ॥ २८ ॥ [1]तालवृन्तचामराश्वगजाजगोदधिक्षीरमधुसिद्धार्थकांश्च ॥ २९ ॥ [2]वीणाचन्दनायुधार्द्रगोमयफलपुष्पार्द्रशाकगोरोचनादूर्वाप्ररोहांश्च ॥ ३० ॥ [3]उष्णीषालंकारमणिकनकरजतवस्त्रासनयानामिषांश्च ॥ ३१ ॥ [4]भृङ्गारोद्धृतोर्वराबद्धैकपशुकुमारीमीनांश्च [5]दृष्ट्वा प्रयायादिति ॥ ३२ ॥**

प्रयाणे शकुनान्याह । अग्निः निर्धूमः सज्वालो वा । ब्राह्मणः सोष्णीषः ; "विप्रान् सुवेषानपि पूर्णकुम्भम्" इति **स्मरणात्** । गणिका वेश्या ; अन्यापि व्यभिचारिणी । पूर्णकुम्भः जलेन । आदर्शः निर्मलो दर्पणः । छत्रम् आतपवारणम् । ध्वजः चतुरश्रवस्त्रयुक्तो दण्डः । पताका तिर्यक्छिन्नवस्त्रयुक्तो दण्डः । श्रीवृक्षः बिल्ववृक्षः । वर्धमानः शरावकः । नन्द्यावर्तः राजगृहविशेषः । चकारात् गन्धदीपादिग्रहणम् : "फलपुष्पाक्षतान् गन्धान् दीपं च ज्वलितानलम्" इति **स्मरणात्** ; "ध्वजगणिकाश्चाप्तजनाश्च चारुवेषाः" इति **वाराहात्** ॥ २८ ॥

तालवृन्तं व्यजनम् । चामरं वालव्यजनम् । अश्वः सपल्याणः । गजः साङ्कुशः । अजः छागः । गौः सवत्सा ; "सुरभिः सवत्सा" इति **स्मरणात्** । दधि अनिर्मथितम् । क्षीरं दुग्धम् । मधु माक्षिकम् । सिद्धार्थः गौरसर्षपः । एतांश्च ; चकारात् नृपमन्त्रिपुरोहितांश्च ; "विप्रांश्चतुष्पथं गाश्च नृपमन्त्रिपुरोहितान्" इति **स्मरणात्** ॥ २९ ॥

वीणा वल्लकी । चन्दनं मलयोद्भवम् । आयुधं खड्गादि । आर्द्रगोमयम् अभिनवं गोशकृत् । आर्द्रपदेन शुष्कव्युदासः । फलम् आम्रादि । पुष्पं मल्लिकादि । आर्द्रशाकः वास्तुकादिः, न शुष्कः । गोरोचना प्रसिद्धा । दूर्वायाः प्ररोहाः अङ्कुराः ; तांश्च । चकारात् काकादींश्च ; "काकं च सायुधं शूद्रमन्यांश्चिह्नैः स्वकैर्युतान्" इति **स्मरणात्** ॥ ३० ॥

उष्णीषं शिरोवेष्टः ; मुकुटं वा । अलंकारः कटककङ्कणादिः । मणिः हीरकादिः । कनकरजते अघटिते ; घटितयोरलंकारत्वात् । वस्त्रं रजकादिक्षालितमनार्द्रमक्षुण्णम् । आसनं भद्रपीठादि । यानम् आन्दोलिकागोरथादि ; "तुरगान्दोलिकाः शुभाः" इति **नारदीयात्** ; "यानं वा गोप्रयुक्तम्" इति **दक्षस्मरणाच्च** । आमिषं सरुधिरं मांसम् ; "रुधिरोक्षितं च मांसम्" इति **लल्लस्मरणात्** । चकारात् मृदङ्गादींश्च ;

1 नागराज for गजाज and घृतमधु for मधु—ठ.
2 आयुध omitted in ठ.
3 रजतकनक for कनकरजत—ठ.
4 उर्वी for उर्वरा—ठ.
5 दृष्ट्वा प्रयायादिति omitted in ठ.

" मृदङ्गनालपणवान् शङ्खान् भेरींश्च गोमुखान् ।
वाद्यमानानिमान् दृष्ट्वा व्रजन् कुर्यात् प्रदक्षिणम् "

इति **स्मरणात्** ॥ ३१ ॥

भृङ्गारः कनकालुकः; सुवर्णकलश इत्यन्ये । उद्धृता उह्यमाना उर्वरा सर्वसस्याढ्यमृत्तिका; नोषरा । रज्जुबद्ध एकाकी पशुः बलीवर्दादिः । सितवृषभश्चेदबद्धोऽपि " सितोक्षवक्त्रसुमनोविप्राश्च रत्नानि च " इति **स्मरणात्** । कुमारी अनूढा कन्या । सा च श्वेताम्बरा ; " कुमारी पाण्डुराम्बरा " इति **स्मरणात्** । मीनः अपक्वो मत्स्यः । तांश्च । चकारात् शवादिग्रहणम्; " राजलिङ्गानि सर्वाणि शवं रुदितवर्जितम् " इति **स्मरणात्** । एतान् दृष्ट्वा प्रदक्षिणीकृत्य प्रयायात् । अस्यापवादः **स्मृत्यन्तरे**—

" भरद्वाजमयूराणां चाषस्य नकुलस्य च ।
एतेषां दर्शनं श्रेष्ठं दुर्लभं चाप्रदक्षिणम् "

इति ॥ ३२ ॥

**अथ मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्तेत ॥ ३३ ॥ वान्तविरिक्तमुण्डजटिलवामनांश्च ॥ ३४ ॥ काषायिप्रव्रजितमलिनांश्च ॥ ३५ ॥ तैलगुडशुष्कगोमयेन्धनतृणपलाशभस्माङ्गारांश्च[1] ॥ ३६ ॥ [2]लवणक्लीबासवनपुंसककार्पासरज्जुनिगडमुक्तकेशांश्च ॥ ३७ ॥**

अपशकुनान्याह । अथेति प्रकरणान्तरार्थः । मत्तः मद्यादिना । उन्मत्तः ग्रहादिना । व्यङ्गः विग्राादिः । एषां दर्शने निवर्तेतैव ॥ ३३ ॥ वान्तः कृतवमनः । विरिक्तः अतिसारी । मुण्डः विशिखः । जटिलः अवधूतः । वामनः ह्रस्वः । एतांश्च । चकारात् रिपुप्रभृतिग्रहणम्; " रिपुविडसितधान्यव्याधिनाभ्यक्तनक्रैः पतितजटिलमुण्डोन्मत्तवान्तैर्न सिद्धिः " इति **स्मरणात्** ॥ ३४ ॥ काषायिणः वृथा लिङ्गधारिणः । प्रव्रजितः संन्यासी । मलिनः मलाक्रान्तदेहः कापालिकादिः । चकारात्

" विमुक्तकेशकाषायिनग्नेन्धनबुभुक्षिताः ।
कुब्जान्धवन्ध्याबधिरैर्दृष्टैः सिद्धिर्न जायते ॥ "

इत्युक्ता ग्राह्याः ॥ ३५ ॥ तैलं गुडं शुष्कगोमयम् इन्धनं तृणं दूर्वातिरिक्तं पलाशं पलाशादिपर्णम्; न ताम्बूलपर्णानि ; " ताम्बूलधानासनवर्धमानाः " इति **वासन्त्वात्** । भस्म रक्षा । अङ्गारः अलातम् । चकारात् सर्पचर्मादिग्रहणम् ;

[1] पलाल for पलाश—ठ.

[2] This Sūtra omitted in ज, ठ.

“ शशे दिगम्बरे सर्पे गोधाशरटचर्मणि ।
जाहके सूकरे चोरे दृष्टे रौति च नो व्रजेत् ॥ ”

इति **स्मरणात्** ॥ ३६ ॥ लवणं शम्भलादि । क्लीबनपुंसकयोर्लक्षणं **कर्मविपाकसंग्रहे** “ अमेध्याशी पुमान् क्लीबो नष्टरेता नपुंसकः ” इति । अमेध्यं पररेतः; तत् भुक्त्वा यः पुमान् भवति, स क्लीब इत्यर्थः । आसवस्तु “ यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ” इत्येवंलक्षणः । आसवग्रहणात् मद्यभाण्डसुरयोरनिषेधः; “ वेश्या स्त्री मद्यभाण्डं प्रियहितवचनं मङ्गलं प्रस्थितानाम् ” इति **वासिष्ठात्**; “ मत्स्यमांससुराधौतवस्त्रशङ्ख-वृषध्वजाः ” इति **नारदीयाच्च** । कार्पासः तूलम् । रज्जुः वरत्रा । निगडः पादशृङ्खला । मुक्ताः प्रकीर्णाः केशा यस्य सः । चकारात् खराद्यारूढग्रहणम्;

“ खरोष्ट्रमहिषारूढा अमङ्गल्यादिसंयुताः ।
कर्णनासादिभिर्हीना विकेशाः कृष्णवाससः ॥
मुक्तकेशातिकृष्णाङ्गास्तैलाभ्यक्ता रजस्वलाः ।
गर्भिणीविधवोन्मत्ताः क्लीबान्धबधिरा नराः ।
एतेषां दर्शने जाते न गन्तव्यं कदाचन ॥ ”

इति **नारदीयात्** ॥ ३७ ॥

**वीणाचन्दनार्द्रशाकोष्णीषालंकरणकुमारीस्तु प्रस्थानकाले अभिनन्दयेदिति ॥ ३८ ॥**

प्रस्थाने अभिनन्दनीयान्याह । वीणादयो व्याख्याताः तान् प्रस्थानकाले दृष्ट्वा[1] अभिनन्दयेत स्तुवीत । यद्वा वीणादिहस्तान् पुरुषान् दृष्ट्वा द्रव्यादिदानेन संतोषयेत् ॥ ३८ ॥

**देवब्राह्मणगुरुबभ्रुदीक्षितानां छायां नाक्रामेत् ॥ ३९ ॥ निष्ठ्यूत-वान्तरुधिरविण्मूत्रस्नानोदकानि [2]च ॥ ४० ॥ न वत्सतन्त्रीं लङ्घ-येत् ॥ ४१ ॥**

प्रयाणे अनतिक्रमणीयान्याह । देवः देवप्रतिमा । ब्राह्मणः बहुश्रुत; न जातिमात्रम्; “ बहुश्रुतस्य छायाम् ” इति **स्मरणात्** । गुरुः अध्यापकः मन्त्रोपदेष्टा च । बभ्रुः कपिलवर्णो गौः, अन्यो वा । दीक्षितः दीक्षावस्थः । एषां छायां कामतो नाक्रामेत्, नोलङ्घयेत् अधितिष्ठेद्वा ॥ ३९ ॥ निष्ठ्यूतं थूत्कारः ।

[1] दृष्ट्वाम्—ग.    [2] वा—ग.

वान्तम् उद्गीर्णम् । रुधिरम् असृक् । विण्मूत्रे प्रसिद्धे । स्नानोदकं स्नानवारि । एतानि नाक्रामेत् । चकारात् ऋत्विगादिग्रहणम्;

" देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि च ॥ "

इति **योगिस्मरणात्**; " श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः " इति **मानवाच्च** ॥ ४० ॥ वत्सतन्त्री वत्सबन्धनी रज्जुः । वत्सग्रहणं गोमात्रोपलक्षणम्; जातिसाम्यात् ॥ ४१ ॥

**[1]प्रवर्षति [2]न धावेत् ॥ ४२ ॥ [3]न वृथा नदीं तरेत् ॥ ४३ ॥ न देवताभ्यः पितृभ्यश्चोदकमप्रदाय ॥ ४४ ॥ न बाहुभ्याम् ॥ ४५ ॥ न भिन्नया नावा ॥ ४६ ॥ न कूलमधितिष्ठेत् ॥ ४७ ॥ न कूपमवलोकयेत् ॥ ४८ ॥ न लङ्घयेत् ॥ ४९ ॥**

प्रयाणे अकर्तव्यान्याह । प्रकृष्टवृष्टिमध्ये न धावेत् ॥ ४२ ॥ साक्षात् परंपरया वा समुद्रगो जलप्रवाहो नदी । तां वृथा अनन्यथासिद्धकारणमन्तरेण न तरेत्[4], न तत्पारं गच्छेत् । वृथावचनात् आवश्यककार्यतरणे न दोषः ॥ ४३ ॥ देवतापितृतर्पणमकृत्वा च नदीं न तरेत् ॥ ४४ ॥ बाहुभ्यां बाहुमात्रेण । नौकादिसाधने तु न दोषः ॥ ४५ ॥ भिन्नया जलस्राविण्या नावा न तरेत् । भिन्नेति सांशयिक्यपि गृह्यते; " नावं च सांशयिकीम् " इति **आपस्तम्बीयात्** ॥ ४६ ॥ नद्यादिकूलं नाश्रयेत् । कूलनिषेधात् दर्भच्छायादिनिषेधोऽप्यर्थसिद्ध एव; दृष्टादृष्टदोषस्योभयत्र तुल्यत्वात् ॥ ४७ ॥ कूपान्तर्न पश्येत् । अन्तर्निषेधात् मुखादिदर्शनमपि निषिध्यते; " नेक्षेन्मुखं जले कूपे नयने चैव चात्मनः " इति **स्मरणात्** । दर्शननिषेधात् अवरोहणनिषेधोऽपि; " न कूपमवरोहेत् " इति **सूत्रात्** ॥ ४८ ॥ न कूपमुत्प्लवनेन लङ्घयेत् । कूपग्रहणं विषमोपलक्षणम्; " विषमारोहणावरोहणानि वर्जयेत् " इति **आपस्तम्बीयात्** ॥ ४९ ॥

**वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।**
**पन्था देयो नृपस्त्वेषां मान्यः [5]स्नातश्च भूपतेः ॥ ५० ॥**

**इति [6]श्रीविष्णुस्मृतौ त्रिषष्टितमोऽध्यायः**

[1] न वर्षति धावेत्—ठ.
[2] नेयात्—घ.
[3] From here five Sūtra-s omitted in ज.
[4] न तरेत् omitted in ग.
[5] स्नातस्तु—ठ.
[6] वैष्णवे धर्मशास्त्रे आचारप्रकरणं त्रिषष्टितमम्—ज, ठ.

वृद्धः अशीत्यवरः। भारी भाराक्रान्तः। नृपः अभिषिक्तः क्षत्रियः। नृपोपादानादन्योऽपि पालनाधिकृतः। स्नातः विद्याव्रतोभयस्नातः त्रैवर्णिकः। स्त्री जातिमात्रम्। रोगी रोगाक्रान्तः यः कश्चित्। वरः वरयात्रास्थितः। चक्री शाकटिकः। एषामन्यतमेन समवाये अन्येन पन्था देयः। एषामन्योन्यसमवाये वृद्धतरादिभ्यो देयः। नृपेण सहैषां समवाये नृपायैवैतैः; नृपेणापि स्नातकाय ब्राह्मणायेति। चकारात् अन्धादिभ्योऽपि; "अन्धबधिरगर्भिणीगोभ्यश्च गजदुर्बलदुर्वारपशुमत्तोन्मत्तत्वरितपतितनिन्दितोदक्याभ्यः पथोऽपक्रमेत्" इति शङ्खस्मरणात्॥ ५०॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-
[2]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
त्रिषष्टितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां त्रिषष्टितमोऽध्यायः—घ.

[2] श्री omitted in ग.

## चतुःषष्टितमोऽध्यायः

**[1]परनिपानेषु न स्नानमाचरेत् ॥ १ ॥ [2]आचरेत् पञ्च पिण्डानुद्धृत्यापस्तदापदि[3] ॥ २ ॥ [4]नाजीर्णे ॥ ३ ॥ न चातुरः ॥ ४ ॥ न नग्नः ॥ ५ ॥ [5]न रात्रौ ॥ ६ ॥ राहुदर्शनवर्जम् ॥ ७ ॥ न संध्ययोः ॥ ८ ॥**

एवं भागत्रयमुक्त्वा चतुर्थभागीयं मध्याह्नस्नानं चतुःषष्टितमेन वक्तुमादौ स्नाने परिहार्यमाह । परकीयेषु अनुत्सृष्टेषु जलाशयेषु न स्नायात् । आत्मीयेष्वप्यसंस्कृतेषु । तथाच **मरीचिः**—

"अनुत्सृष्टेषु न स्नायात् तथैवासंस्कृतेषु च ।
आत्मीयेष्वपि न स्नायात् तथैवाल्पजलेषु च ॥"

इति । परकीयत्वमन्त्यजकृतस्याप्युपलक्षणम् ;

"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं समाचरेत्"

इति **शातातपीयात्** ॥ १ ॥ प्रतिप्रसवमाह । जलान्तराभावे सप्त पञ्च चतुरः त्रीन् वा मृत्पिण्डान् कूपात् घटत्रयं जलं चोद्धृत्य परकीयेष्वपि स्नायात् ;

"पञ्च वा सप्त वा पिण्डान् स्नायादुद्धृत्य तत्र तु ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥
उद्धृत्य चापि त्रीन् पिण्डान् स्नायादापत्सु नो सदा ।
निबद्धासु च मृत्पिण्डान् कूपात्तु त्रीन् घटांस्तथा ॥"

इति **पराशरमनुबोधायनीयात्** ॥ २ ॥ व्यतिरेकेणाधिकारिण आह । अजीर्णे अजीर्णोद्गारे ॥ ३ ॥ आतुरः ज्वराद्यभिभूतः । चकारात् रजस्वलादिः ; "रजस्वला न स्नायान्नाभ्यञ्ज्यात्" इति निषेधात् ॥ ४ ॥ नग्नोऽत्र मुख्यो गौणश्च ; द्विविधस्यापि कर्मानधिकारात् । तथाच **भृगुः**—

[1] न परनिपानेषु स्नान—ठ.
[2] आचरेद्वा—ठ.
[3] उद्धृत्यापदि—ठ.
[4] नाजीर्णी—ठ.
[5] न राहुदर्शनवर्जं रात्रौ—ठ.

"विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ।
श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥"

इति । तत्रावस्त्रो मुख्यो नग्नः । विकच्छादिर्गौणः ; तेषामपि नग्नताभिधानात् । अन्यानाह **गोभिलः**—

"नग्नः स्यान्मलवद्वासा नग्नः कौशेयकेवलः ।
नग्नो द्विगुणवस्त्रः स्यान्नग्नो दग्धपटस्तथा ॥
नग्नश्च स्यूतवस्त्रः स्यान्नग्नो ग्रथितवस्त्रकः ।
नग्नश्च बहुवस्त्रः स्यान्नग्नः कौपीनकेवलः ।
काषायवस्त्रः साक्षाच्च दश नग्नाः प्रकीर्तिताः ॥"

इति । नग्नस्य क्रियामात्रनिषेधेऽपि पुनः स्नाननिषेधः प्रायश्चित्तवैलक्षण्यार्थः । तच्चोक्तं प्राक् ॥ ५ ॥ रात्रिः महानिशा । तथाच **व्यासः**—

"महानिशा च विज्ञेया मध्यमं प्रहरद्वयम् ।
तत्र स्नानं न कुर्वीत काम्यनैमित्तिकादृते ॥"

इति । महानिशानिषेधात् पूर्वापरयामयोरनिषेधः ; "प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत्" इति **पाराशर्यात्** ॥ ६ ॥ राहुदर्शनं चन्द्रग्रहणम् । तच्च निमित्तान्तरोपलक्षणम् ;

"ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि [1]तदिष्यते ॥"

इति **वृद्धयाज्ञवल्कीयात्** ॥ ७ ॥ संध्यात्र अर्धास्तोदयकालो रवेः ; अन्यथा 'उषस्युषसि' इति वक्ष्यमाण-वचनविरोधापत्तेः ॥ ८ ॥

## [2]प्रातःस्नानशीलोऽरुणताम्रां प्राचीमालोक्य स्नायात् ॥ ९ ॥

प्रातःस्नानकालमाह । प्रातःस्नानशीलः अरुणोदयकाले स्नायात् । अनेन अरुणोदयात् प्राक् स्नानं निषिद्धम् 'न रात्रौ' इत्यनेन । न तूर्ध्वमपि ;

"उषस्युषसि यत् स्नानं संध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं सर्वपापप्रणाशनम् ॥"

इति कालान्तरश्रवणात् । तत्र पूर्वः पूर्वो मुख्यः, उत्तरोत्तरो गौण इति ध्येयम् । नित्यस्नाने चायं कालः । काम्ये माघादिस्नाने तु "किंचिदभ्युदिते रवौ" इत्यादिर्वैशेषिक एव । अत्र चाङ्गभूतं मन्त्रतर्पणादिकं मध्याह्नस्नान एव वक्तव्यमित्यत्र नोक्तम् ;

[1] न दुष्यति—ख.

[2] प्रातःस्नायी अरुणकिरणग्रस्तां—ठ.

" अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्मणः ।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः ॥ "

इति **कात्यायनेन** क्रियाविस्तारनिषेधात् । यत्तु " प्रातः स्नानं मन्त्रवर्जं मध्याह्ने मान्त्रिको विधिः " इति **मार्कण्डेयवचनं**, तदपि मन्त्रविस्तराभिप्रायेण ; विस्तरस्यैव निषेधात् ॥ ९ ॥

**स्नातः शिरो नावधुनेत् ॥ १० ॥ नाङ्गेभ्यस्तोयमुद्धरेत् ॥ ११ ॥ न तैलवत् संस्पृशेत् ॥ १२ ॥**

स्नातधर्मानाह । स्नानानन्तरं शिरःस्थितान् केशान् करेण न कम्पयेत् ; " न चावधूनयेत् केशान् " इति **शातातपीयात्** ॥ १० ॥ हस्तेन वस्त्रेण वाङ्गशोधनं न कुर्यात् ; " अपमृज्यान्न च स्नातो गात्राण्यम्बरपाणिभिः " इति **स्मरणात्** ॥ ११ ॥ तैलाक्तं द्रव्यं किंचिदपि न स्पृशेत् । एतेन तैलस्य स्पर्शनिषेधोऽर्थसिद्ध एव ; " शिरःस्नातस्तु तैलेन नाङ्गं किंचिदुपस्पृशेत् " इति **मानवात्** ॥ १२ ॥

**नाप्रक्षालितं पूर्वधृतं वसनं बिभृयात् ॥ १३ ॥**

वस्त्रविधिमाह । परिहितं प्रावृतं वा वासः प्रक्षालनमन्तरेण धारणार्हं न । प्रक्षालनं प्रोक्षणोपलक्षणम् ; " अभावे पूर्ववस्त्रं वा संप्रोक्ष्य प्रणवेन तु " इत्युशनःस्मरणात् । वासोग्रहणात् क्षौमादीनामनिषेधः ;

" अलाभे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासास्तु यथा भवेत् ॥ "

इति **योगिस्मरणात्** । ' पट्टक्षौमाजिनानि वा ' इति पाठः । पूर्वधृतत्वेन स्त्र्यादिधौतमपि लक्ष्यते ;

" ईषद्धौतं स्त्रिया धौतं शूद्रधौतं तथैव च ।
अधौतं तच्च विज्ञेयं शुष्कं दक्षिणपल्लवैः ॥ "

इति **स्मरणात्** । अधौतत्वेन पुनः क्षालनमुच्यते ॥ १३ ॥

**स्नात एव सोष्णीषे धौते वाससी बिभृयात् ॥ १४ ॥**

स्नातः ; साङ्गेन स्नानविधिना । स्नात एवेत्यव्यवधानेन शुष्कवाससः स्थल एव संध्याद्यनुष्ठानस्य मुख्यपक्षतां दर्शयति ;

" यत्राशुचि स्थलं वा स्यादुदके देवताः पितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥ "

इति **विष्णुना** स्थलाभाव एव जले कर्मविधानात्; "ऋतादृते नार्द्रवासा नैकवासाः स्थले जपेत्" इति **योगीश्वरेण** आर्द्रवाससः स्थले कर्मनिषेधाच्च। उष्णीषं जलापसरणाय शिरोवेष्टनम्; तेन सहिते। तच्चागाढबन्धनं शिरसि वेष्टयेत्;

"राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम्।
जलक्षयनिमित्तं वै वेष्टयामास मूर्धनि॥"

इति **महाभारतलिङ्गात्**। यत्तु 'नाङ्गेभ्यस्तोयमुद्धरेत्' इत्यविशेषेणोक्तं, तच्छिरोव्यतिरिक्ताङ्गविषयम्। यच्च,

"देवाः पिबन्ति शिरसो मुखस्य पितरस्तथा।
वसवोऽपि च गन्धर्वा अधस्तात् सर्वजन्तवः॥"

इति विशेषस्मरणं, तदपि "स्नानशाट्या न पाणिना" इत्यनेनोपसंहरणीयम्। धौते स्वयमेव; "स्वयं धौतेन कर्तव्याः क्रिया धर्म्या विपश्चिता" इति **देवलस्मरणात्**। वाससो द्वित्वं च विवक्षितम्;

"एकवासा न भुञ्जीत न कुर्याद् देवतार्चनम्।
न चार्चयेद् द्विजान्नाग्नौ कुर्यादेवंविधो नरः॥"

इति **देवलेन** एकवासस्त्वनिषेधात्। बिभृयादित्यनुवृत्तौ पुनर्वचनं नियमार्थम्; नग्नस्य कर्ममात्रनिषेधात्। न च 'न नग्नः' इति निषेधादेवैतन्नियमसिद्धिरिति वाच्यम्, नियमादृष्टस्य विधित एव सिद्ध्या निषेधेनासिद्धेः। द्वित्ववदव्यत्यासोऽपि विवक्षितः, "नोत्तरीयमधः कुर्यादधस्त्यं नोत्तराम्बरम्" इति **व्यासस्मरणात्**। तयोश्च धारणं नान्तर्वासो विना; "नान्तर्वासो विना जातु निवसेद्वसनं बुधः" इति **तस्यैव** स्मरणात्। तल्लक्षणं **स्मृत्यन्तरे**—

"षोडशद्वादशाष्टाभिरङ्गुलैर्विस्तृतं च यत्।
विस्तृतं व्याममात्रं तु तदन्तर्वास ईरितम्॥"

इति। वस्त्रपरिधानानन्तरं तिलकधारणं कार्यम्। तच्च **ब्रह्माण्डपुराणे** उक्तम्—

"स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव च भस्मना।
देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये।
जलेन तिलकं कुर्याज्जलान्तः कर्मसिद्धये॥"

इति। तदनन्तरं संध्यावन्दनं स्वस्वसूत्रोक्तविधिना कार्यम्। तच्चोक्तं ब्रह्मचारिप्रकरण इति नात्रोक्तम्। तदनन्तरं श्रौतस्मार्तान्यतरहोमः कार्यः। सोऽपि प्रागुक्तत्वात् अत्र नोक्त इति॥ १४॥

**न म्लेच्छान्त्यजपतितैः सह संभाषणं कुर्यात्॥ १५॥**

स्नानोत्तरं निषेध्यमाह । म्लेच्छाः शबरपुलिन्दकिरातादयः । अन्त्यजाः चण्डालादयः । पतिताः महापातक्यादयः । एतैः सह स्नातो न संभाषेत । संभाषणे पुनः स्नायात् । असंभाषणादनवलोकनमपि गम्यते ;

" चण्डालपतितौ दृष्ट्वा नरः पश्येत्तु भास्करम् ।
स्नातस्त्वेतान् समाभाष्य सचैलं स्नानमाचरेत् ॥ "

इति व्याससरणात् ॥ १५ ॥

**स्नायात् [1]प्रस्रवणदेवखातसरोवरेषु ॥ १६ ॥ उद्धृतात् भूमिष्ठमुदकं पुण्यं, स्थावरात् प्रस्रवत्, तस्मान्नादेयं, तस्मादपि साधुपरिगृहीतं, सर्वत एव गाङ्गम् ॥ १७ ॥**

स्नानीयजलान्याह । प्रस्रवणं निर्झरः । देवखातं पुष्करादि । सरोवरं मानससरोवरादि । एषु स्नायात् ॥ १६ ॥ उत्तरोत्तरप्रशस्तजलान्याह । उद्धृतं घटादिना जलाशयात् पृथक् कृतम् । तस्मात् तडागादिभूमिष्ठं जलं पवित्रम् । स्थावरात् प्रस्रवत्; प्रस्रवणादिगतम् । तस्मादपि नादेयं नदीसंबन्धि । तस्मादपि साधुभिः वसिष्ठादिभिः परिगृहीतम्; यथा वसिष्ठप्राची विश्वामित्रप्राचीत्यादि । उक्तेभ्यः सर्वेभ्योऽपि गङ्गोदकं पुण्यतमम् । तथाच यमदेवलौ—

" क्षेत्रस्थमुद्धृतं वापि शीतमुष्णमथापि वा ।
गाङ्गेयं हरते पापमाजन्ममरणान्तिकम् ॥ "

इति । ब्रह्माण्डेऽपि—

" रात्रौ दिवा वा संध्यायां गङ्गायां तु प्रसङ्गतः ।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृत्य तज्जलैः ॥ "

इति ॥ १७ ॥

**मृत्तोयैः कृतमलापकर्षोऽप्सु निमज्ज्योपविश्यापो हि ष्ठेति तिसृभिर्हिरण्यवर्णेति चतसृभिरिदमापः प्रवहतेति च [2]तीर्थमभिमन्त्रयेत् ॥ १८ ॥**

स्नानाङ्गाभिधानलाघवेन प्रातःस्नानप्रसङ्गात् मध्याह्नस्नानमप्याह । यद्यप्यत्र मध्याह्नादिशब्दाभावात स्नानान्तरत्वाप्रतीत्या प्रातःस्नान एवायं गुणविधिरिति प्रतिभाति, तथापि,

[1] देवखातप्रस्रवणनदीनदनिर्झरेषु—ठ.

[2] अभिमन्त्रयेत्तीर्थम्—ठ.

"न प्रातर्मृत्तिकास्नानं न च मध्यं गते रवौ ।
न रात्रौ मृत्तिकास्नानं न च भौमार्कवारयोः ॥"

इति निषेधेन प्रातःस्नाने गुणविधित्वासंभवात् स्नानान्तरस्यैव विशिष्टविधिरिति युक्तम् । तच्च माध्याह्निकमेव ; "ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत्" इति **कौर्मात्** । तत्र मृत्तोयैरिति बहुवचनात् गोमयग्रहणम् ; "त्रिधा कृत्वा मृदं तां तु गोमयं च विचक्षणः" इति **शातातपीयात्** । भागत्रयविनियोगमप्याह **स** एव—

"अधमोत्तममध्यानामङ्गानां क्षालनं तु तैः ।
भागैः पृथक् पृथक् कुर्यात् क्षालने मृदसंकरम् ॥"

इति । अनुलेपनक्रमयोः **स्मृत्यन्तरवचनम्**—

"आयुष्कामः शिरोलेपं मृदा कुर्याद् द्विजः पुरा ।
श्रीकामः पादशौचं तु मृदा पूर्वं समाचरेत् ॥"

इति । मन्त्रोऽपि तत्रैव—

"मही द्यौरिति मन्त्रेण मृत्तिकामभिमन्त्रयेत् ।
स्योना पृथिवीति मन्त्रेण शिर आरभ्य लेपयेत् ॥"

इति । अनन्तरकार्यमपि तत्रैव—

"तोयेऽवघृष्य गात्राणि निमज्ज्योन्मज्ज्य वै शनैः ।
आचम्य गोमयेनापि ([1]मानस्तोकया समालभेत् ॥)"

इति । एवं शारीरं मलमपाकृष्याप्सु त्रिर्निमज्ज्य तीरे उपविश्य "आपो हि ष्ठा" इत्याद्यष्टभिर्मन्त्रैः तीर्थमभिमन्त्रयेत् । 'निमज्ज्योपस्पृशेत्' इति पाठे निमज्जनानन्तरमाचम्य तीर्थमभिमन्त्रयेदित्यर्थः ॥ १८ ॥

## ततोऽप्सु निमग्नस्त्रिरघमर्षणं जपेत् ॥ १९ ॥

पाठेनैवानन्तर्ये लब्धे तत इत्यभिमन्त्रणोत्तरकर्मानन्तर्यद्योतनाय । तच्चोक्तं **परिशिष्टे**—"तीर्थमभिमृश्यावगाह्य स्नातो द्विराचम्य मार्जयेत् । अम्ब यो यन्त्यध्वभिरित्यष्टाभिः, आपो हि ष्ठेति नवभिः । अथ तीर्थमङ्गुष्ठेन इमं मे गङ्ग इत्यृचा त्रिः प्रदक्षिणमालोड्य प्रकाशपृष्ठमग्नोऽघमर्षणसूक्तं त्रिरावर्तयेत्" इति । अप्स्वित्यनुवृत्तौ पुनर्वचनमभिमन्त्रितास्वेवेति नियमार्थम् । निमज्जनस्य पुनर्वचनं यावज्जपसमाप्ति निमज्जनप्राप्त्यर्थम् । अन्यथा ल्यपा जपपूर्वकालतामात्रमेव निमज्जनस्यापद्येत । तच्च 'प्रकाशपृष्ठतयैव

[1] The portion within brackets is missing in all MSS. It is supplied from the *Kṛtyakalpataru*, Vol. III, p. 62. (Gaekwad's Oriental Series, 1950).

निमग्नस्त्रिर्जपेत्' इत्यनेन सकृन्निमग्नस्त्रिरावर्तयेत्; न प्रत्यावर्तनं निमज्जनम्। अघमर्षणम्; अघमर्षणर्षिदृष्टम् "ऋतं च सत्यं च" इति तृचं सूक्तम्। जपश्च मनसैव; संभवात्। अत एव **व्यासः**—

" अङ्गुष्ठाङ्गुलिभिश्चैव श्रोत्रदृङ्नासिकामुखम्।
निष्पीड्यान्तः प्रतिस्रोतस्त्रिः पठेदघमर्षणम्॥ "

इति॥ १९॥

**तद्विष्णोः परमं पदमिति वा॥ २०॥ द्रुपदां सावित्रीं च॥ २१॥ युञ्जते मन इत्यनुवाकं वा[1]॥ २२॥ पुरुषसूक्तं वा॥ २३॥**

पक्षान्तराण्याह। अघमर्षणस्थाने "तद्विष्णोः" इत्यृचं वा जपेत्। त्रिरित्यनुवर्तते॥ २०॥ "द्रुपदादिवेन्मुमुचानः" इति यजुर्वेदप्रसिद्धा; तां वा त्रिर्जपेत्;

"द्रुपदा नाम गायत्री युजुर्वेदे प्रतिष्ठिता।
अन्तर्जले त्रिरावृत्य मुच्यते ब्रह्महत्यया॥"

इति **योगिस्मरणात्**॥ २१॥ "युञ्जते मन उत युञ्जते धियः" इति संहितोक्तमारण्यकोक्तं वानुवाकं सकृज्जपेत्; सकृन्निमज्जने त्रिर्जपस्याशक्यत्वात्॥ २२॥ "सहस्रशीर्षा" इति षोडशर्चं पुरुषदेवताकं सूक्तं वा सकृज्जपेत्। ऐच्छिकोऽयं विकल्पः॥ २३॥

**स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्यात्॥ २४॥**

अघमर्षणानन्तरमाह। अघमर्षणानन्तरं पुनः स्नानार्थे स्नात इति; "अघमर्षणं त्रिरावृत्य निमज्ज्योन्मज्ज्यादित्यमवलोकयेत्" इति **स्मरणात्**। चकारादभिषिक्तश्च; "ततोऽभिषिञ्चेन्मन्त्रैश्च वारुणैस्तु यथाक्रमम्" इति **स्मरणात्**। 'आर्द्रवासा अम्भःस्थ एव' इत्यत्र आर्द्रवासा एव जल इति नियमात् शुष्कवाससो जले निषेधः। आर्द्रवासा जल एवेति नियमादार्द्रवाससः स्थले च निषेधः सिध्यति;

"शुष्केणान्तर्जले नैव बहिरप्यार्द्रवाससा।
स्नानं दानं जपो होमः कर्तव्यं पितृतर्पणम्॥"

इति **लिखितस्मरणात्**। देवपित्रोरेवोपादानमृषिपरिहाराय; तेषामञ्जलौ तीर्थाभावेन तर्पणासंभवात्। तथाहि "आर्षं कानिष्ठिकामूले" इत्युक्तलक्षणस्य दक्षिणकरस्थस्य ऋषितीर्थस्य "तौ युतावञ्जलिः पुमान्" इत्युक्तलक्षणेऽञ्जलौ वामकरसंयोगेन तिरोहिततया जलनिर्गमाक्षमत्वात्। वियोजनेनान्तर्निर्गमने अञ्जलित्व-

[1] वा omitted in ख.

व्याघातात्। तस्मात् अञ्जलिना देवपित्रोरेव[1] तर्पणम्; तत्तत्तीर्थसद्भावात्। न ऋषीणाम्; तीर्थाभावात्। अत एव **व्याघ्रपादः**—

"स्नानाङ्गत्वेनाञ्जलिना तर्पयेत् पितृदेवयोः।
काम्ये नित्ये विशेषेण तत्र कुर्यात् प्रयत्नतः॥"

इति देवपित्रोरेव तर्पणमाह। **कार्ष्णाजिनिरपि**—

"देवतानां पितॄणां च जले दद्याज्जलाञ्जलीन्।
असंस्कृतप्रमीतानां स्थले दद्याज्जलं सकृत्॥"

इति। क्वचित् देवर्षिपितृतर्पणमिति पाठः। स चाग्रेतनवाक्यविरोधाच्चिन्त्यः। यत्तु ऋषीणामपि क्वचिदञ्जलिना तर्पणश्रवणं, तत् "अङ्गुल्यमृषीणाम्" इत्यङ्गुलिमध्यस्थितऋषितीर्थाभिप्रायेणेति मन्तव्यम्। स्नानाङ्गतर्पणप्रकारश्च **स्मृत्यन्तरे**—"ब्रह्मादयो ये देवास्तान् देवांस्तर्पयामि; भूर्देवांस्तर्पयामि; भुवर्देवांस्तर्पयामि; स्वर्देवांस्तर्पयामि; भूर्भुवःस्वर्देवांस्तर्पयामि। कृष्णद्वैपायनादयो ये ऋषयस्तान् ऋषींस्तर्पयामि; भूः ऋषींस्तर्पयामि; भुवः ऋषींस्तर्पयामि; स्वः ऋषींस्तर्पयामि; भूर्भुवःस्वः ऋषींस्तर्पयामि। प्राचीनावीती, अग्निकव्यवाहनादयो ये पितरस्तान् पितॄंस्तर्पयामि; भूः पितॄंस्तर्पयामि; भुवः पितॄंस्तर्पयामि; स्वः पितॄंस्तर्पयामि; भूर्भुवःस्वः पितॄंस्तर्पयामि" इति॥ २४॥

**परिवर्तितवासाश्चेत् [2]तीर्थमुत्तीर्य॥ २५॥ अकृत्वा देवपितृतर्पणं स्नानशाटीं न पीडयेत्॥ २६॥**

अशक्तं प्रत्याह। यस्तु स्नात्वा जले स्थातुमशक्तः शुष्कं वासः परिधत्ते, स तीर्थाद्बहिरागत्य स्थल एव स्नानाङ्गं तर्पणं कुर्यात्;

"आर्द्रवासा जले कुर्यात् तर्पणाचमनं जपम्।
शुष्कवासाः स्थले कुर्यात् तर्पणाचमनं जपम्॥"

इति **हारीतस्मरणात्**॥ २५॥

तर्पणोत्तराङ्गं व्यतिरेकेणाह। परिवर्तितवासा अपि देवपितृतर्पणात् प्राक् स्नानवस्त्रं न निष्पीडयेत्। यथाह **योगीश्वरः**—

"यावद्देवानृषींश्चैव पितॄंश्चापि न तर्पयेत्।
तावन्न पीडयेद्वस्त्रं येन स्नातो भवेद् द्विजः॥"

[1] देवतर्पणम्—ग.

[2] तीर्थतीरम्—ठ.

इति । एतेन वस्त्रनिष्पीडनस्य तर्पणोत्तराङ्गत्वं गम्यते ;

" निष्पीडयति यो वस्त्रं स्नानं कृत्वा ह्यतर्पिताः ।
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥ "

इत्यन्यथा करणे दोषश्रवणात् । अत एव—

" ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ "

इति मन्त्रोऽपि तत्र स्मर्यते । नित्यतर्पणेऽप्येतत् समानम् ; स्नानाङ्गनित्यतर्पणयोर्मध्ये पाठात् ; दोषश्रवणाविशेषाच्च ॥ २६ ॥

**स्नात्वाचम्य[1] विधिवदुपस्पृशेत् ॥ २७ ॥**

स्नानेऽन्यदप्युत्तराङ्गमाह । वस्त्रनिष्पीडनान्तस्नानविध्यानन्तर्ये द्विराचमनस्य गमयितुं पुनः स्नानपरामर्शः । अन्यथा मज्जनमात्रानन्तरमेव स्यात् । यद्वा स्नानमात्रविधेः वस्त्रनिष्पीडनान्ततावोधनाय । अन्यथा मध्याह्नस्नान एव स्यात् ; प्रकरणात् । विधिवत् इन्द्रियस्पर्शनान्तमाचम्य पश्चात् द्वितीयवारं तथैवाचामेत् । एतेन यत्र सामान्यतोऽपि द्विराचामेत् इत्युच्यते, तत्रापि साङ्गाया एवाचमनभावनाया द्विरावृत्तिः, न प्रधानमात्रस्य । ' आवृत्तिस्तन्त्रेणाङ्गानि ' इति न्यायोऽप्यत्रानुगृहीतः ;

" स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ "

इति योगिस्मरणात् ॥ २७ ॥

**पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पाणि दद्यात् ॥ २८ ॥ उदकाञ्जलींश्च ॥ २९ ॥ आदावेव दैवेन तीर्थेन देवानां तर्पणं कुर्यात् ॥ ३० ॥ तदनन्तरं पित्र्येण पितॄणाम्[2] ॥ ३१ ॥**

मध्याह्नस्नानाङ्गमाह । " सहस्रशीर्षा " इत्यादि षोडशर्चं पुरुषसूक्तम् । तस्य षोडशभिः ऋग्भिः जलशायिने विष्णवे षोडश पुष्पाणि ॥ २८ ॥ तदभावे जलमेव वा दद्यात् एकैकमञ्जलिमिति ॥ २९ ॥ तच्चोपवीतिनैव ; " उपवीतं देवानां निवीतं मनुष्याणां प्राचीनावीतं पितॄणाम् " इति श्रुतेः । कुशाग्रैश्च ;

" कुशाग्रैस्तर्पयेद्देवान् मनुष्यान् कुशमध्यतः ।
द्विगुणीकृत्य मूलाग्रैः पितॄन् संतर्पयेद् द्विजः ॥ "

[1] स्नात्वा च विधि—ढ. [2] पितॄन्—ग.

इति **स्मरणात्** । तच्च प्रागग्रेषु ;

" प्रागग्रेषु सुरास्तर्प्या मनुष्याश्चोदगग्रतः ।
पितरो दक्षिणाग्रेषु चैकद्वित्रिजलाञ्जलीन् ॥ "

इति **आग्नेयात्** । [1]तत्र तिलेषु **गोभिलः**—

" शुक्लैस्तु तर्पयेद्देवान् मनुष्याञ्छबलैस्तिलैः ।
पितॄंस्तु तर्पयेत् कृष्णैस्तर्पयन् सर्वशो द्विजः ॥ "

इति । **कात्यायनः**—

" पातयेद्दक्षिणं जानुं देवान् परिचरन् सदा ।
पातयेदितरं जानुं पितॄन् परिचरन्नपि ॥ "

इत्याद्यन्यतोऽवगन्तव्यम् ॥ ३० ॥ देवतर्पणानन्तर्यवचनं स्मृत्यन्तरीयमध्यस्थितर्षितर्पणनिरासाय ; अञ्जलावृषितीर्थस्य विरोधात् । तेषामपि तर्पणं चेत् अङ्गुलिमध्यस्थर्षितीर्थेनेत्युक्तमेव ॥ ३१ ॥

**तत्रादौ स्ववंश्यानां तर्पणं कुर्यात् ॥ ३२ ॥ ततः [2]संबन्धिबान्धवानाम् ॥ ३३ ॥ ततः सुहृदाम् ॥ ३४ ॥**

तत्र पितॄणां क्रममाह । तत्र पितृगणे प्रथमं स्वान् साक्षात् संबन्धिनः पितृमातृमातामहांस्तदनन्तरं वंश्यान् पितृव्यभ्रातृमातुलादींस्तर्पयेत् ; " संतर्प्य स्वान् पितॄन् पूर्वं पश्चादन्यांश्च तर्पयेत् " इति **योगिस्मरणात्** । तर्पणानुवृत्तौ पुनर्वचनमञ्जलिसंख्याभेदप्रदर्शनाय । क्रियानुवृत्तौ पुनर्वचनं तु प्राचीनावीतित्वादिषूक्तगुणभेदप्रदर्शनाय । गुणान्तरमप्याह **यमः**—

" संबन्धनामगोत्रेण स्वधान्तेन नमोऽन्ततः ।
वस्वादिरूपं निर्दिश्य तर्पयेत् पितृपूर्वकम् ॥ "

इति ॥ ३२ ॥ किंच संबन्धिनः भागिनेयश्वशुरश्यालादयः । बान्धवाः पैतृष्वस्रेयमातृष्वस्रेयमातुलादयः । तांस्तर्पयेत् ॥ ३३ ॥ किंच सुहृदः मित्रगुर्वाचार्योपाध्यायादयः । तांश्च तर्पयेत् । [3]एते च संगृहीताः **स्मृत्यन्तरे**—

" पितृमातृमातामहाः पितृव्या भ्रातरस्ततः ।
पितृष्वसा मातुलश्च तद्भगिन्यः स्वजामयः ॥
भार्या पुत्राश्च पौत्राश्च भ्रातृपुत्रास्तथैव च ।

[1] तत्र च—ग, घ.    [2] संबन्धिनाम्—च.    [3] एवं च—घ.

दुहिता श्वशुरश्चैव भावुका गुरवस्तथा ॥
आचार्याः सुहृदः श्याला उपाध्यायश्च पोषकः ।
स्वामिनश्च सखायश्च मातापित्रोश्च बान्धवाः ॥
आत्मनो बान्धवाश्चैव एवं ज्ञाता यथाक्रमम् ।
तर्पणे च गयाश्राद्धे तीर्थे चैव महालये ॥"

इति । अत्र पित्रादिशब्दाः पित्रादित्रयपराः । यथाह **हारीतः**—"पित्रादीन् मात्रादीन् मातामहादीन् पितृव्यांस्तत्पत्नीः [1]ज्येष्ठभ्रातॄंस्तत्पत्नीस्तर्पयेत्" इति ॥ ३४ ॥

**एवं नित्यस्नायी स्यात् ॥ ३५ ॥**

स्नानविधिमुपसंहरति । उक्तेन विधिना प्रत्यहं स्नायात् । अनेन च तर्पणानन्तरं स्नानोपसंहारेण तर्पणस्यापि विष्णुपूजनवत् संदंशान्तःपातित्वात् स्नानाङ्गत्वं गमयति । नित्यवचनादकरणे प्रत्यवायं गमयति । "अस्नात्वा नाचरेत् कर्म जपहोमादि किंचन" इति श्रवणात् । यद्यपि "यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः" इति वचनात् स्नानद्वयस्यापि नित्यत्वं गम्यते, तथाप्यनातुरं प्रत्येव द्वयोर्नित्यत्वम् । सर्वान् प्रति तु—

"अस्नातस्तु पुमान्नार्हो जपाग्निहवनादिषु ।
प्रातः स्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥"

इति **शङ्खेन** प्रातःस्नानस्यैव सर्वकर्माङ्गत्वाभिधानान्नित्यत्वम् । स्नाननित्यत्वे च तदङ्गस्य तर्पणादेरपि नित्यत्वं सिध्यति । यत्तु तर्पणे फलश्रवणं तन्नित्यकाम्यताबोधनाय । यथाह **शङ्खः**—

"स्नातः संतर्पणं कृत्वा पितॄणां तु तिलाम्भसा ।
पितृलोकमवाप्नोति प्रीणाति च पितॄंस्तथा[2] ॥"

इति ॥ ३५ ॥

**स्नातश्च [3]पवित्राणि यथाशक्ति जपेत् ॥ ३६ ॥ विशेषतः सावित्रीम् ॥ ३७ ॥ पुरुषसूक्तं च ॥ ३८ ॥ नैताभ्यामधिकमस्ति ॥ ३९ ॥**

एवं तर्पणानन्तरमुक्तरीत्या विष्णुं संपूज्य तदनन्तरमाह । स्नानविधेः विष्णुपूजनान्तताप्रदर्शनाय पुनः स्नानपरामर्शः । पवित्राणि पावमानानि तरत्समन्द्यादीनि अनियतसंख्यानि जपेत् ॥ ३६ ॥ किंच

[1] मातुलांस्तत्पत्नीः—ख. [2] तया पितॄन्—ग. [3] यथाशक्ति पवित्राणि—ज.

पूर्वोक्तजपसंख्यापेक्षया अधिकसंख्यया गायत्रीं जपेत् । यद्वा सूक्तान्तरजपोऽस्तु मा वा; सावित्रीं त्ववश्यं जपेदिति ॥ ३७ ॥ किंच "सहस्रशीर्षा" इति षोडशर्चं सूक्तं च विशेषतो जपेत् ॥ ३८ ॥ विशेषतो [1]जपे हेतुमाह । गायत्रीपुरुषसूक्ततोऽधिकफलसाधनमन्यद्यतो नास्ति; "गायत्र्युपासिता येन तेनोपास्तं जगत्त्रयम्" [2]इति स्मरणात् । अयं च पृथगेव मध्याह्नस्नानाङ्गं वा जपः, न मध्याह्नसंध्याङ्गम् । तस्या द्वयपदोपादानेन प्रागेवानङ्गत्वस्य बोधनात् ॥ ३९ ॥

**स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।**
**पवित्राणां तथा जप्ये दाने च विधिबोधिते[3] ॥ ४० ॥**

स्नानस्य नित्यत्वे हेतुमाह । यतः दैवे वैश्वदेवादौ; पित्र्ये नित्यश्राद्धादौ; जप्ये ब्रह्मयज्ञादौ; दाने अतिथिपूजादौ; विधिबोधिते देवपूजादौ नित्ये । तथाशब्देन नैमित्तिके ग्रहशान्त्यादौ; चशब्दात् काम्ये गोदानादौ च स्नातस्यैवाधिकारः । अतः अनारभ्याधीतमपि स्नानं नित्यकर्मापेक्षितत्वान्नित्यम् ॥ ४० ॥

**अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।**
**अम्मात्रेणाभिषिक्तस्य नश्यन्त इति धारणा ॥ ४१ ॥**

तस्यैव नैमित्तिकत्वे हेतुमाह । अलक्ष्मीः निर्ऋतिः । कालकर्णी दुःसहदुहिता । चकारात् कलहादयः । दुःस्वप्नं स्वप्ने खराद्यारोहणम् । दुर्विचिन्तितम् अशुभविचिन्तितम् । एतानि उद्धृतेनानुद्धृतेन वा तीर्थातीर्थ-साधारणेन जलेन यः स्नानशीलः पुमान् तस्य नश्यन्तीति नियमः । तेन नैमित्तिकमपि ॥ ४१ ॥

**याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।**
**नित्यस्नानेन पूयन्ते येऽपि पापकृतो नराः[4] ॥ ४२ ॥**

इति [5]श्रीविष्णुस्मृतौ चतुःषष्टितमोऽध्यायः

तस्यैवाकाम्यत्वमाह । नित्यस्नानशीलः पुमान् [6]यमलोकं स्वं च [7]परकीयमपि यातनादुःखं न पश्यति । किं पुनः स्वीयमनुभविष्यति । तस्मात् अकाम्यम् । पापक्षयार्थत्वमप्यस्याह । यानि पुनः अनिर्दिष्ट-

[1] जपहेतु—च.
[2] इत्यादिस्मरणात्—ख, ग.
[3] विधिनोचिते—ग.
[4] जनाः—ठ.
[5] वैष्णवे धर्मशास्त्रे स्नानविधिप्रकरणं चतुःषष्टितमम्—ज, ठ.
[6] यमलोकीयं—च.
[7] परलोकीयमपि—च.

प्रायश्चित्तानि पापानि, तान्यपि नित्यस्नानेन नश्यन्तीति । यद्वा महापातक्यादयोऽपि नित्यस्नानेन पूताः प्रायश्चित्तानुष्ठायिनो भवन्तीति प्रायश्चित्ताङ्गत्वमप्यस्येति ॥ ४२ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-
[2]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
चतुःषष्टितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां चतुःषष्टितमोऽध्यायः—घ, च.
[2] श्री omitted in ग.

## पञ्चषष्टितमोऽध्यायः

**[1]अथातः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तो देवतार्चायां [2]स्थले वा भगवन्तमनादिनिधनं वासुदेवमभ्यर्चयेत् ॥ १ ॥**

मध्याह्नस्नानानन्तरं विष्णुपूजनं पञ्चषष्टितमाध्यायेनाह । पाठादेवानन्तर्यसिद्धौ अथशब्दः निरञ्जनध्यानसूर्यावलोकनोपस्थानमुखमार्जनादिस्मृत्यन्तरोक्तकर्मानन्तर्यार्थः । तानि च **योगयाज्ञवल्कीये** प्रसिद्धानि । यतो देवपूजाकरणे

"[3]यो मोहादथवालस्यादकृत्वा देवतार्चनम् ।
भुङ्क्ते स याति नरकान् क्रिमिर्भूत्वेह जायते ॥"

इत्यादिदोषः श्रूयते, अतो हेतोः । सुस्नात इति वारुणस्नानवत एव देवतार्चायामधिकारं गमयति ;

"वारुणेनैव संशुद्धो जपाग्निहवनादिषु ।
अधिकारी भवेन्मर्त्यो देवतानां च पूजने ॥"

इति **शङ्खस्मरणात्** । प्रक्रमात् प्राप्तावपि पुनः स्नानवचनं प्रातःस्नानानन्तरमपि देवपूजाप्राप्त्यर्थम् ; "प्रातर्मध्यंदिने सायं विष्णुपूजां समाचरेत्" इति **शौनकस्मरणात्** । सुप्रक्षालितपाणिपाद इति ;

"स्रवन्त्यादिष्वथाचम्य सोपानत्को ह्यसंस्पृशन् ।
आगतः सोदपात्रस्तु यत्नेन शुचिरेव सः ॥"

इति **योगिना** सोपानत्कागमनविधानात् पादानुपहत्या प्रक्षालनाप्राप्तौ नियमार्थमुच्यते । सुप्राभ्याम् "उभयोः सप्त दातव्यास्तिस्रस्तिस्रस्तु पादयोः" इति करपादयोः मृत्संख्यात्रापि विधीयते । स्वाचान्त इति आचमनानुकल्पनिरासाय । देवतार्चा देवप्रतिमा । स्थलं स्थण्डिलम् । वाशब्दात् अग्न्यादिषु च ;

"अप्स्वग्नौ हृदये चैव स्थण्डिले प्रतिमासु च ।
विम्बेषु च हरेः सम्यगर्चनं मनुना स्मृतम् ॥"

[1] अतः omitted in ठ ; अथ स्नातः—ज.
[2] स्थले वा—ठ.
[3] मोहादप्यथवालस्यात्—घ.

इति **नारदस्मरणात्**। एतेषु सालग्रामो मुख्यः;

"पूजार्थमुत्तमं स्थानं सालग्रामं तदुच्यते।
द्वारकाजातचक्राङ्का शिला श्रेष्ठा तथैव च।
तयोश्च संगमं कृत्वा पूजयन्मुक्तिभाग्भवेत्॥"

इति **स्कान्दात्**। भगवन्तम् अष्टगुणैश्वर्ययुक्तम्। अनादिनिधनं जन्ममरणरहितम्। एताभ्यां विशेषणाभ्यामस्य देवतान्तरादुत्कर्षोऽभिहितः। वासुदेवं सर्वभूताधारम्; "वासुदेवः सर्वम्" इति **स्मरणात्**। तमभिमुखीकृत्य अर्चयेत्॥ १॥

**अश्विनोः [1]प्राणस्तौ त इति जीवादानं दत्त्वा युञ्जते मन इत्यनुवाकेनावाहनं कृत्वा जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्यात्॥ २॥**

तत्प्रकारमाह। "अश्विनोः प्राणस्तौ ते" इति काठकीयमन्त्रेण च यष्टव्यजीवस्य भगवतः; "जीवो विनयिता साक्षी" इति **स्मरणात्**। आदानम्; ध्यानेनान्तःकरणे संनिधानं कृत्वा "युञ्जते मन उत युञ्जते धियः" इति तैत्तिरीयसंहितारण्यकान्यतरपठितेनावाहनं स्थण्डिलादिष्वसतः संनिधानं कृत्वा जानुद्वयमवाच्य भूमावञ्जलिं कृत्वा तदुपरि शिरसा प्रणमेत्। चकारात् मनसा वाचा च 'ओं नमो भगवते वासुदेवाय' इति। आवाहनं च स्थण्डिलादिविषयम्;

"उद्वासावाहने न स्तः स्थिरायास्तूद्धवार्चने।
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु द्वयं भवेत्॥"

इति **भागवतात्**। सालग्रामे तु नैव;

"सालग्रामशिलायां तु नावाहनविसर्जने।
सालग्रामशिलायां तु नित्यं संनिहितो हरिः॥"

इति **स्कान्दात्**। कथं तर्हि षोडशोपचारक्लृप्तिरिति चेत्; सत्यम्, पुष्पाञ्जलिनेति ब्रूमः।

"आवाहनऋचा दद्यात् पूर्वं पुष्पाञ्जलिं हरेः।
तस्यैवोन्मुखतां प्राप्ते यागे चोद्वासने ऋचा।
अन्ते पुष्पाञ्जलिं दद्याद्यागसंपूर्तिसिद्धये॥"

इति **अनुष्टुब्विधानात्**॥ २॥

[1] प्राणस्वौत—घ, च.

**आपो हि ष्ठेति तिसृभिरर्घ्यं निवेदयेत् ॥ ३ ॥ हिरण्यवर्णा [1]इति चतसृभिः पाद्यम् ॥ ४ ॥ शं न आपो धन्वन्या इत्याचमनीयम् ॥ ५ ॥ इदमापः प्रवहतेति स्नानीयम् ॥ ६ ॥ [2]रथे अक्षेषु वृषभस्य वाजे इत्यनुलेपनालंकारौ ॥ ७ ॥ युवा सुवासा इति वासः ॥ ८ ॥ पुष्पावतीरिति पुष्पम् ॥ ९ ॥ धूरसि धूर्वेति धूपम् ॥ १० ॥ तेजोऽसि शुक्रमिति दीपम् ॥ ११ ॥ दधिक्राव्ण इति मधुपर्कम् ॥ १२ ॥ [3]हिरण्यगर्भ इत्यष्टाभिर्नैवेद्यम् ॥ १३ ॥**

"आपो हि ष्ठा मयो भुवः" इति तृचेनार्घ्यं करशुद्धिकरं वारि निवेदयेत्। निवेदनं नामाग्रतः स्थापनम् ॥ ३ ॥ "हिरण्यवर्णाः शुचयः पावकाः" इत्यारभ्य "मयि वर्चो बलमोजो नियत्त" इत्यन्तेन ऋक्चतुष्टयेन पाद्यं पादशौचकरं वारि निवेदयेदिति प्रत्येकं संबध्यते। यद्यपि "पाद्यं तृतीयया चैव चतुर्थ्यार्घ्यं प्रदापयेत्" इत्यत्र पाद्यार्घ्ययोर्विपर्यासः श्रूयते, तथाप्यसौ पुरुषसूक्तेनार्चन एव। अत्र तु यथोक्त एव क्रमः;

"आपो हि ष्ठेति तिसृभिस्ततोऽर्घ्यं विनिवेदयेत्।
हिरण्यवर्णेति च तथा पाद्यं चतसृभिर्द्विज ॥"

इति **विष्णुधर्मोत्तरात्**।

"प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे।
तृतीयां वामपादे च चतुर्थीं दक्षिणे तथा ॥"

इति न्यासे करयोः प्राथम्याच्च ॥ ४ ॥ "शं न आपो धन्वन्याः" इति कठशाखीययैकर्चा आचमनार्हं जलमाचमनीयम् ॥ ५ ॥ "इदमापः प्रवहत" इत्येकयर्चा स्नानीयं स्नानार्हं जलम् ॥ ६ ॥ "रथे अक्षेषु" इति कठशाखीयैः चतुर्भिः अनुलेपनं चन्दनम्; अलंकारः कटकमुकुटादिः ॥ ७ ॥ "युवा सुवासाः" इत्येकयर्चा वासः वस्त्रम्। यद्यपि "पञ्चम्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च" इति **स्मृत्यन्तरे** स्नानानन्तरमेव वस्त्रदानं श्रूयते, तथापि तत् पुरुषसूक्तेनार्चन एव। अत्र तु यथोक्त एव क्रमः;

"इदमापः प्रवहत स्नानमन्त्रः प्रकीर्तितः।
रथे अक्षेषु च तथा चतस्रस्त्वनुलेपने।
युवा सुवासा इति च मन्त्रो वाससि कीर्तितः ॥"

[1] इति omitted in घ.
[2] रथेष्वक्षेषु वृषभराजा—क, घ, च and Jolly's edition.
[3] This Sūtra omitted in ख.

इति **विष्णुधर्मोत्तरात्** ॥ ८ ॥ "पुष्पावतीः प्रसूवतीः" इति तैत्तिरीयर्चा पुष्पम् ॥ ९ ॥ "धूरसि धूर्व धूर्वन्तम्" इति तैत्तिरीययजुषा धूपम् ॥ १० ॥ "तेजोऽसि शुक्रम्" इति कठशाखीययैकर्चा दीपम् ॥ ११ ॥ "दधि क्राव्णो अकारिषम्" इत्येकयर्चा मधुपर्कम् ; मधुसंपृक्तं दधि ॥ १२ ॥ "हिरण्यगर्भः समवर्तत" इत्यारभ्य "यश्चिदापो महिना" इत्यन्ताभिरष्टाभिः ऋग्भिः नैवेद्यं निवेदयेदिति प्रत्येकं संबध्यते ॥ १३ ॥

**[1]चामरं व्यजनं मात्रां छत्रं यानासने तथा ।**
**सावित्रेणैव तत् सर्वं [2]देवाय विनिवेदयेत् ॥ १४ ॥**

चामरव्यजने प्रसिद्धे । मात्रा आदर्शः; "चामरव्यजनादर्शाश्छत्रं यानासने तथा" इति **विष्णुधर्मोत्तरात्** । यानं शिबिकादि । आसनं सिंहासनादि । तत्सर्वमित्यनेन शुद्धाचमनकरोद्वर्तनताम्बूल-नीराजनादीनां ग्रहणम् । एतानि सावित्रेण गायत्र्या भगवते निवेदयेत् । यथा **गारुडे**—

"अथ भुक्तवते दद्याच्छुद्धाचमनमम्भसा ।
पुनराचमनं दद्यात् करोद्वर्तनमेव च ।
सकर्पूरं च ताम्बूलं कुर्यान्नीराजनं तथा ॥"

इति । अनुवृत्तावपि पुनर्निवेदनवचनमुक्तसंख्योपचारतो न्यूनाधिकसंख्योपचारान्तरप्रदर्शनार्थम् । यथोक्तं **पुराणसमुच्चये**—

"पञ्च वा दश वा कार्यास्तथा वै षोडशापि वा ।
उपचारा भगवते चतुःषष्टिरथापि वा ॥"

इति । ते चास्मत्कृते **स्मृतिसिन्धौ** द्रष्टव्याः ॥ १४ ॥

**एवमभ्यर्च्य तु जपेत् सूक्तं वै पौरुषं ततः ।**
**तेनैव चाज्यं [3]जुहुयाद्यदीच्छेच्छाश्वतं पदम् ॥ १५ ॥**

**इति [4]श्रीविष्णुस्मृतौ पञ्चषष्टितमोऽध्यायः**

[1] चामरव्यजने छत्रं मात्रां—ठ.
[2] देवनाम्यो निवेदयेत्—ठ.
[3] जुहुयाद्य इच्छेत्—ठ.
[4] वैष्णवे धर्मशास्त्रे अर्चनप्रकरणं पञ्चषष्टितमम्—ज, ठ.

पूजोत्तराङ्गमाह । एवमुक्तैः षोडशोपचारैः भगवन्तं संपूज्य षोडशर्चं पुरुषसूक्तं जपेदेवेति वैशब्दात् नित्यमङ्गम् । ततः जपानन्तरं शाश्वतपदकामश्चेत् तेनैव सूक्तेन प्रत्यृचं लौकिकेऽग्नौ इध्माधानाद्याज्यभागान्तं वक्ष्यमाणविधिना कृत्वा आज्यं जुहुयादिति काम्यमङ्गम् ॥ १५ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
पञ्चषष्टितमोऽध्यायः

[1] विष्णुस्मृतिविवृतौ पञ्चषष्टितमोऽध्यायः—घ, च.

## षट्षष्टितमोऽध्यायः

**न नक्तं [1]गृहीतेनोदकेन [2]देवपितृकर्म कुर्यात् ॥ १ ॥**

उक्तोपचारद्रव्यविवेचनं षट्षष्टितमेन कर्तुमादौ जलनिर्णयमाह । दैवं देवपूजादि । पित्र्यं श्राद्धादि । पर्युषितेन जलेन गङ्गोदकव्यतिरिक्तेन न कुर्यात ;

" जलं पर्युषितं त्याज्यं पत्राणि कुसुमानि च ।
तुलस्यगस्त्यबिल्वानि गाङ्गं वारि न दुष्यति ॥ "

इति **स्मरणात्** ॥ १ ॥

**[3]चन्दनमृगमददारुकर्पूरकुङ्कुमजातीफलवर्जमनुलेपनं न दद्यात्[4] ॥ २ ॥ न वासो नीलीरक्तम्[5] ॥ ३ ॥**

चन्दनं मलयजम् । मृगमदः कस्तूरी । दारु सुगन्धिर्देवदारुः । कर्पूरः चन्द्रः । कुङ्कुमं केसरम् । जातीफलं तद्वृक्षकाष्ठम् । एतान्येवानुलेपनार्थे देयानि ; नान्यानि तुलसीकाष्ठागरुवर्जितानि ;

" कलौ यच्छन्ति ये विष्णोस्तुलसीकाष्ठचन्दनम् ।
विष्णुप्रीतिकरं मर्त्या उत्तरां यान्ति ते भुवम् ॥ "

इति **विष्णुधर्मोत्तरात्** ; " गन्धेभ्यश्चन्दनं पुण्यं चन्दनादगरुर्वरः " इति **याम्यात्**[6] ॥ २ ॥

नीलीरागेण रक्तं वस्त्रं न देयम् । वासोग्रहणात् पट्टवस्त्राद्यनिषेधः ; " ऊर्णायां पट्टवस्त्रे च नीलीदोषो न विद्यते " इति **स्मरणात्** । इदं चान्यस्याप्युपलक्षणम् ;

" आखुदष्टानि दग्धानि जीर्णान्यन्यैर्धृतानि च ।
क्रिमिदष्टानि शीर्णानि स्थूलान्यपहृतानि च ॥

[1] गृहीतोदकेन—घ.
[2] देवकर्म—ठ.
[3] चन्दनकुङ्कुमागरुकर्पूरमृगमदजातीफल—ठ.
[4] कुर्यात्—ज.
[5] नीलरक्तम्—ठ.
[6] पाद्मे—ख.

दुष्कर्मसु प्रयुक्तानि देवताभिर्धृतानि च ।
स्यूतान्यन्यायलब्धानि न स्युः शस्तानि जातुचित् ॥"

इति **भारद्वाजस्मरणात्** । शस्तान्यप्याह स एव—

"श्रेष्ठानि पट्टवस्त्राणि देववासांसि सर्वदा ।
एषामलाभे कार्पासवासांसि प्रयतानि च ॥"

इति ॥ ३ ॥

**न मणिसुवर्णयोः प्रतिरूपमलंकरणम् ॥ ४ ॥**

कृत्रिममणिसुवर्णादिनिर्मितमलंकारं न दद्यात् । अलंकाराश्च **नारसिंहे**—

"सुवर्णाभरणैर्दिव्यैर्हारकेयूरकुण्डलैः ।
मुकुटैः कनकाद्यैश्च यो विष्णुं पूजयेन्नृप ॥
सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः ।
इन्द्रलोके वसेच्छ्रीमान् यावदिन्द्राश्चतुर्दश ॥"

इति ॥ ४ ॥

**[1]नोग्रगन्धि ॥ ५ ॥ नागन्धि ॥ ६ ॥ न कण्टकिजम् ॥ ७ ॥**
**[2]कण्टकिजमपि शुक्लं [3]सुगन्धिकं तु दद्यात्[4] ॥ ८ ॥**

उग्रः घ्राणग्लानिकरः[5] गन्धो यस्येति तत् धत्तूरादि ॥ ५ ॥ गन्धशून्यं गिरिकर्णिकादि ।

"कोशातक्यर्कधत्तूरशाल्मली गिरिकर्णिका ।
कपित्थं लाङ्गली शिग्रुकोविदारौ शिरीषकम् ।
अज्ञानात् पूजयेद्विष्णुं नरो नरकमाप्नुयात् ॥"

इति ॥ ६ ॥ कण्टकिवृक्षोद्भवं कण्टकारिकादि ;

"कण्टकारिकया शोकं [6]कुटजैर्दुःखसंगमः ।
शाल्मलीकुसुमारोपे स्वपापैरनुलिप्यते ॥"

इति **पुष्पसारस्मरणात्** ॥ ७ ॥ तस्यापवादमाह । कण्टकिजमपि केतकादि शुक्लं सुगन्धि च देयम् ;

1 नागन्धि । नोग्रगन्धि । न दुर्गन्धि । पुष्पं न कण्टकिजम्—ज, ठ.
2 This Sûtra omitted in ख.
3 तु यत् तत्—ज, ठ.
4 देयम्—ग.
5 म्लानिकरः—ग.
6 कुजन्यैः—घ.

"एकया वापि केतक्या यदा संपूज्यते हरिः ।
पूजितो द्वादशाब्दं तु केशवस्तेन निश्चितम् ॥"

इति **तत्त्वसागरस्मरणात्** । पुनर्दद्यादिति वचनं निषेधानुषङ्गनिरासाय ॥ ८ ॥

**[1]रक्तमपि [2]कुङ्कुमं जलजं च दद्यात् ॥ ९ ॥**

कुङ्कुमं केसरम् । [3]जलजं रक्तोत्पलम् । चकारात् करवीरादिः ;

"करवीरकपुष्पेण रक्तेनाथ सितेन वा ।
मुचुकुन्दस्य चैकेन पूजयित्वा दिवं व्रजेत् ॥"

इति **स्मरणात्** । जलजत्वविशेषणात् अरक्तमपि । **तत्त्वसागरे**—

"वैष्णवान्यथ पुष्पाणि संक्षेपेण निबोध मे ।
पद्मं गन्धोत्पलं चान्यदुत्पलं नीलमेव च ॥
श्वेतं चैव तथा रक्तमुत्पलं कुमुदं तथा ।
पुष्पाण्येतानि राजेन्द्र शस्तानि जलजेष्वपि ॥"

इति । अनेन विहितरक्तातिरिक्तरक्तं निषिद्धमिति गम्यते । पुनर्दद्यादिति वचनं पुष्पसंख्यातिरेकेण फलातिशयद्योतनाय । तच्च लक्षपूजायां सिद्धम् ॥ ९ ॥

**न धूपार्थे जीवजातम् ॥ १० ॥ न [4]घृततैलं विना किंचन दीपार्थे ॥ ११ ॥**

प्राण्यङ्गं नखश‍ृङ्गादि धूपत्वेन न देयम् । सर्जरसादि च वृक्षरसो धूपत्वात् देयम् । [5]**रत्नकोशे**—

"गुग्गुलुं चागरुं चैव सकोष्ठं चैव चन्दनम् ।
उशीरं च गुडं चैव घृतकर्पूरकैर्युतम् ॥"

इति ॥ १० ॥ घृतम् ; गोमहिष्यजानां निर्दशाहानाम् ; "गोमहिष्यजानामनिर्दशाहानाम्" इति **वसिष्ठस्मरणात्** । पयोनिषेधे तद्विकाराणामपि निषेधः । अन्येषाम् "औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्" इति विकारमात्रस्यैव निषेधः । तैलं तिलोद्भवम् ;

[1] न रक्तं दद्यात् । रक्तमपि—ठ.
[2] कुङ्कुमजं—अ, ठ.
[3] जलजं omitted in ग.
[4] घृततैलैर्विना किंचित्—ठ.
[5] तरलकोशे—घ, च.

"तैलं तिलोद्भवं चैव वार्क्षं तैलं तथैव च।
कापिलादिघृतं चैव दीपद्रव्यमिति स्मृतम् ॥"

इति वचनात्। आदिपदात् वनतिलजानां ग्रहणम्;

"ग्राम्येण वापि तैलेन वनजन्येन वा नरः।
दीपं [1]दत्त्वा महाविष्णोर्विष्णुलोकमवाप्नुयात् ॥"

इत्युक्तेः। एतदुभयातिरिक्तं दीपं न देयम्; "करञ्जं चापि चिञ्चं च एरण्डादीनि वर्जयेत्" इति **स्मरणात्** ॥११॥

**नाभक्ष्यं नैवेद्यार्थे ॥ १२ ॥**

अभक्ष्यप्रकरणोक्तं सर्वम् 'अनर्चितं वृथा मांसम्' इत्यादि नैवेद्ये न देयम्। **बृहन्नारदीये**—

"शाल्योदनं दिव्यमाज्ययुक्तं चैव सशर्करम्।
नैवेद्यं देवदेवाय विष्णवे विनिवेदयेत् ॥
संस्कृतं चान्नमाज्याद्यैर्दधिक्षीरमधूनि च।
फलमूलव्यञ्जनानि मोदकं च निवेदयेत् ॥"

इति। **भरद्वाजोऽपि**—

"परमान्नमतिश्रेष्ठं श्रेष्ठमन्नं तु केवलम्।
अपूपा मण्डकाद्यास्तु नवगोधूमपिष्टजाः ॥"

इति ॥ १२ ॥

**न भक्ष्ये [2]अप्यजामहिषीक्षीरे ॥ १३ ॥**

भक्ष्येष्वपि विशेषमाह। अजामहिष्योः ग्राम्यारण्ययोः क्षीरे भक्ष्ये अपि न देये;

"गवां प्रशस्तं त्रितयं पीयूषदधिसर्पिषाम्।
अन्यजीवभवानां तु न प्रशस्तमिति स्मृतम् ॥"

इति **स्मरणात्** ॥ १३ ॥

**[3]पञ्चनखमत्स्यवराहमांसानि च ॥ १४ ॥**

मांसेष्वाह। पञ्चनखाः शशादयः पञ्च। मत्स्याः सिंहतुण्डकादयः। वराहः आरण्यः। एते भक्ष्या अपि न देयाः;

[1] दत्त्वा—ग.  [2] अपि omitted in ज.  [3] न पञ्चनख—ठ.

" भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्यकाः ।
शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ।
तथा पाठीनराजीवसशल्याश्च द्विजातिभिः ॥ "

इति **योगिस्मरणात्** । भक्ष्यनिषेधादभक्ष्याणां सुतरां निवृत्तिः ; ' नाभक्ष्यं नैवेद्यार्थे ' इति निषेधात् ॥ १४ ॥

**[1]प्रयतश्च शुचिर्भूत्वा सर्वमेव निवेदयेत् ।**
**तन्मनाः सुमना भूत्वा [2]त्वराक्रोधविवर्जितः ॥ १५ ॥**

## इति [3]श्रीविष्णुस्मृतौ षट्षष्टितमोऽध्यायः

कर्तृनियमानाह । प्रयतः बाह्यशौचवान् । सुस्नातत्वाद्यनुवृत्तावपि पुनर्वचनं पञ्चविधशुद्धिप्राप्त्यर्थम् । यथा **मन्त्रकोशे**—

" प्रथमं देहशुद्धिः स्यात् स्थानशुद्धिरनन्तरम् ।
पात्रशुद्धिस्तृतीया च आत्मशुद्धिश्चतुर्थिका ।
पञ्चमी चित्तशुद्धिः स्याच्छुद्धयः पञ्च वै स्मृताः ॥ "

इति । आत्मा अन्तःकरणम् । चित्तं तद्वृत्तिः । शुचिः ; तीर्थाभिषेकादिना । यथाह **शौनकः**—

" तीर्थाभिषेकपूतात्मा कृत्वा चैवोर्ध्वपुण्ड्रकम् ।
भूषणाद्यैरलंकृत्य दुकूलादींश्च धारयेत् ॥
मौक्तिकानि प्रवालानि पद्माक्षांस्तुलसीमणीन् ।
जपपूजनवेलायां धारयेद्यः स वैदिकः ॥
धारयेदक्षमालां वा सौवर्णीमथवापि वा ।
पवित्रपाणिः पूतात्मा पद्मस्थः स्वस्तिकासनः ।
कुर्यादाराधनं विष्णोर्देवदेवस्य चक्रिणः ॥ "

इति । तीर्थम् ; भगवच्चरणोदकम् । ऊर्ध्वपुण्ड्रं शङ्खचक्राद्युपलक्षणम् ;

" अङ्कितः शङ्खचक्राभ्यामुभयोर्बाहुमूलयोः ।
समर्चयेद्धरिं नित्यं नान्यथा पूजनं भवेत् ॥ "

[1] प्रयतः सुशुचिर्भूत्वा—ठ.
[2] रागक्रोधविवर्जितः—ज, ठ.
[3] वैष्णवे धर्मशास्त्रे पञ्चोपचारप्रकरणं षट्षष्टितमम्—ठ.

इति **स्कान्दात्**। तन्मनाः भगवन्मनाः, सुमनाः प्रसन्नचित्तो भूत्वा व्यासङ्गान्तरपरिहारेण त्वराक्रोधाभ्यां विशेषतो रहितः सर्वं पूर्वोक्तानुपचारान् निवेदयेत् ॥ १५ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-[2]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां[3]

षट्षष्टितमोऽध्यायः

1 श्रीविष्णुस्मृतिविवृतौ षट्षष्टितमोऽध्यायः—घ, च.
2 श्री omitted in ग.
3 वैजयन्त्यां omitted in ग.

## सप्तषष्टितमोऽध्यायः

**अथाग्निं परिसमुह्य [1]पर्युक्ष्य [2]परिस्तीर्य परिषिच्य सर्वतः पाकादग्रमुद्धृत्य जुहुयात् ॥ १ ॥**

देवपूजानन्तरं वैश्वदेवाद्यभिधातुं सप्तषष्टितमेनादौ पूजोत्तराङ्गं होममाह । अथशब्दः पुरुषसूक्तजपानन्तर्यार्थः । तेन परिसमूहनादीतिकर्तव्यतानन्तर्यमाज्यहोमस्य सिध्यति । अन्यथा अन्नहोम एव स्यात् । अत एव **शौनकः**—

" आवाहनादिकान् कृत्वा वैष्णवाग्निं समर्चयेत् ।
जुहुयात् पुरुषसूक्तेन षोडशाज्यतिलान्नकैः ॥ "

इत्युभयसाधारण्येन तन्त्रक्लृप्तिमाह । अग्निं लौकिकं परिसमुह्य पाणिना सोदकेनाग्नेः समन्तात् परिमार्ज्य, पर्युक्ष्य अग्नेः समन्तात् जलेनाभ्युक्ष्य, परिस्तीर्य अग्नेः समन्तात् दर्भानास्तीर्य, परिषिच्य परितो दर्भानभिषिच्य । एतावदुपादानादङ्गान्तरनिवृत्तिः, गृहमेधीये " आज्यभागौ यजति " इतिवत् । **भागवते** तु इज्यादानादिकमुक्तम्—" ध्यायन्नभ्यर्च्य दारूणि हविषाभिघृतानि च " इति । हविषाभिघृतानि घृताभिघारितानि । सर्वत इत्यहविष्यस्याप्यभ्यनुज्ञानाय ; 'भक्ष्योपभक्ष्याभ्याम्' इति वक्ष्यमाणत्वात् ;

" मुद्गा निष्पावका माषास्तुवर्यश्चणका अपि ।
पञ्चैतेऽतिप्रशस्ताः स्युर्निवेद्या दोषवर्जिताः ॥ "

इत्यहविष्याणामपि निवेद्यत्वाच्च ; होमस्य च निवेद्यशेषद्रव्यकत्वात् । पाकादित्यपक्वपरिहाराय ;

" अतिपक्वं च [3]दुष्पक्वं यत् पक्वं क्रिमिसंयुतम् ।
दुर्भाण्डस्थमसद्यस्कं दुर्गन्धमशुभं स्मृतम् ॥ "

इति **बृहन्नारदीयात्** । सद्यस्कमत्युष्णम् । अग्रम् अष्टाचत्वारिंशद्ग्रासपरिमितमन्नम् ;

" ग्रासमात्रा भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् ।
हन्तेति तैश्चतुर्भिः स्यादग्रं तत् त्रिगुणं भवेत् ॥ "

[1] पर्युक्ष्य omitted in ठ. [2] परिषिच्य परिस्तीर्य—ठ. [3] द्विष्पक्वम्—ग.

इति **शातातपीयात्** । उद्धृत्य; पाकपात्रात् पात्रान्तरे कृत्वा पर्यग्निकरणादिना संस्कृत्य पाणिना जुहुयात्; "द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः" इति **स्मरणात्** ॥ १ ॥

**[1]वासुदेवाय संकर्षणाय प्रद्युम्नायानिरुद्धाय पुरुषाय सत्यायाच्युताय [1]वासुदेवाय ॥ २ ॥**

होमदेवता आह । 'वासुदेवाय' इत्यादिभिर्मन्त्रैः[2] अष्टावन्नाहुतीः जुहुयात् । द्वावेतौ आज्यान्नहोमौ पूजाङ्गभूतौ ॥ २ ॥

**[3]अथाग्नये, सोमाय, मित्राय, वरुणाय, इन्द्राय, इन्द्राग्निभ्यां, विश्वेभ्यो देवेभ्यः, प्रजापतये, अनुमत्यै, धन्वन्तरये, वास्तोष्पतये, अग्नये स्विष्टकृते च ॥ ३ ॥**

कण्ठाग्न्यानुसारेण वैश्वदेवमाह । अथेति आनन्तर्यनियमाय । अन्यथा "तमेनं वैश्वदेवहुतशेषेण पृथगन्नेन वा कुर्यान्नास्य शेषेण वैश्वदेवम्" इति **स्मृत्यन्तरेण** नैवेद्यात् प्रागपि स्यात् । तेन चैकैवेति-कर्तव्यता । तत्रापि तन्त्रेणोपकरोति प्रयाजादिवत् आग्नेयादित्रिके; "हविरपि तदेवम्" इति **स्मृत्यन्तरे** परिसमूहनादिवत् प्रकरणेनाग्न्युद्धरणस्याप्युभयार्थत्वात्;

"नैवेद्यार्थं पृथग्भाण्डे स्नाता पत्नी पचेत् तथा ।
वैश्वदेवार्थमन्यस्मिन् व्यञ्जनानि पृथक् पृथक् ॥
एकस्मिन् वाप्यशक्तश्चेत् सर्वं विष्णुनिवेदनम् ।
वैश्वदेवं ततः शिष्टाद् व्यासस्य वचनं यथा ॥"

इति **व्यासस्मरणाच्च** । ततश्च तेनैवान्नेनाग्न्यादिभ्यो द्वादशभ्यो द्वादशाहुतीर्जुहुयात् । चकारात् होमान्तेऽपि परिसमूहनम्; "आदौ च कर्मणोऽन्ते च वह्नेः परिसमूहनम् । पर्युक्षणं च कर्तव्यम्" इति **शौनकीयात्** ॥ ३ ॥

**ततोऽन्नशेषेण बलिमुपहरेत् ॥ ४ ॥**

भूतयज्ञमाह । तत इति होमानन्तर्याय । अन्यथा कर्मान्तरत्वेन कालान्तरेऽपि स्यात् । अन्नस्य हुतस्य शेषोऽवशिष्टम्; तेन वक्ष्यमाणदेवताभ्यो बलिं दद्यात्; "देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत्" इति **योगिस्मरणात्** ॥ ४ ॥

1 ओं श्रीवासुदेवाय—ठ.
2 अष्टभिर्मन्त्रैः—ग.
3 ओं अग्नये—ठ.

**[1]भक्षोपभक्षाभ्याम् ॥ ५ ॥**

तत्र विशेषमाह । भक्षम् ओदनादि । उपभक्षं शाकादि । सर्वत इत्यनुवृत्तौ पुनर्वचनं वैश्वदेवहोमे सिद्धहविष्यज्ञापनाय; "सिद्धस्य हविष्यस्य जुहुयात्" इत्याश्वलायनीयात्; "वर्जयित्वा विशेषान्नं शुद्धेनान्नेन तद्भवेत्" इति शौनकीयाच्च । तेन वैष्णवहोमबलिहरणयोरेव सर्वान्नसाध्यतेति सिद्धम् ॥ ५ ॥

**अभितः पूर्वेणाग्निम् ॥६॥ अम्बा नामासीति, दुला नामासीति, [2]नितन्ती नामासीति, [3]चुपुणीका नामासीति[4] सर्वासाम् ॥ ७ ॥**

तत्र देशमाह । हुतस्याग्नेः पूर्वादिचतुर्दिक्षु ॥ ६ ॥ तत्र मन्त्रानाह । 'अम्बा' इत्यादिभिः चतुर्भिर्मन्त्रैः पूर्वादिचतसृणां दिशां बलिं दद्यात् । षष्ठीनिर्देशेन दिशां बलिसंबन्धावगमात् देवतात्वं गम्यते; "रक्षसां भागोऽसि" इतिवत् । तेन च अम्बादिशब्दैः पूर्वादिदिश एवाभिधीयन्ते ॥ ७ ॥

**नन्दिनि सुभगे [5]सुमङ्गलि [6]भद्रंकरीति [7]स्वश्रिष्वभिप्रदक्षिणम् ॥ ८ ॥ स्थूणायां ध्रुवायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्च ॥ ९ ॥ [8]धर्माधर्मयोर्द्वारे मृत्यवे च ॥ १० ॥**

किंच 'नन्दिनि' इत्यादिभिः चतुर्भिर्मन्त्रैः स्वश्रिषु आग्नेयादिकोणेषु प्रादक्षिण्येन बलिं दद्यात् ॥ ८ ॥ किंच ध्रुवा गृहाधारभूता स्थूणा सकर्णस्तम्भः, तस्यां 'श्रियै' इति द्वाभ्याम् । हिरण्यकेशीति श्रीविशेषणम् ॥ ९ ॥ धर्मादिद्वाभ्यां गृहद्वारे । धर्माधर्मयोः मिलितयोः देवतात्वम्, अग्नीषोमवत् ॥ १० ॥

**उदधाने वरुणाय ॥ ११ ॥ विष्णव इत्युलूखले ॥ १२ ॥ मरुद्भ्य इति दृषदि ॥ १३ ॥ उपरि शरणे वैश्रवणाय राज्ञे भूतेभ्यश्च ॥ १४ ॥ इन्द्रायेन्द्रपुरुषेभ्यश्चेति पूर्वार्धे ॥ १५ ॥**

उदधानं जलशाला । तत्र 'वरुणाय' इत्येकेन ॥ ११ ॥ उलूखलं कण्डनशाला । तत्र 'विष्णवे' इत्येकेन ॥ १२ ॥ दृषत् पेषणशाला । तत्र 'मरुद्भ्यः' इत्येकेन ॥ १३ ॥ शरणं गृहम् । तदुपरि अट्टालिकायां 'वैश्रवणाय' इति द्वाभ्याम् । राज्ञे इति वैश्रवणविशेषणम् ॥ १४ ॥ शरणे इत्यनुवर्तते । तस्य पूर्वस्मिन् अर्धभागे 'इन्द्राय' इति द्वाभ्याम् । चकारः प्राक्संस्थतार्थः ॥ १५ ॥

[1] तक्षायोपतक्षायेति—ज, ट. [2] निवष्णी—ड. [3] क्षिप्रणिका—घ.
[4] अभ्रयन्ती नामासि । मेघयन्ती नामासि । वर्षयन्ती नामासि added in ट.
[5] सुमङ्गलेषु—ठ. [6] भद्रकालीति—घ.
[7] स्वश्चिथषु—ख; स्वास्थिषु—ग. [8] धर्मायाधर्माय—ठ.

**यमाय यमपुरुषेभ्य इति दक्षिणार्धे ॥ १६ ॥ वरुणाय वरुणपुरुषेभ्य इति पश्चार्धे ॥ १७ ॥ सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे ॥ १८ ॥ ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ १९ ॥ ऊर्ध्वमाकाशाय ॥ २० ॥ [1]स्थण्डिले दिवाचरेभ्यो भूतेभ्य इति दिवा ॥ २१ ॥ नक्तंचरेभ्य इति नक्तम् ॥ २२ ॥**

गृहस्य दक्षिणार्धभागे 'यमाय' इति द्वाभ्याम् ॥ १६ ॥ गृहस्य पश्चिमार्धभागे 'वरुणाय' इति द्वाभ्याम् ॥ १७ ॥ गृहस्य उत्तरार्धभागे 'सोमाय' इति द्वाभ्याम् ॥ १८ ॥ गृहस्य मध्ये 'ब्रह्मणे' इति द्वाभ्याम् ॥ १९ ॥ ऊर्ध्वे [2]भूमेः 'आकाशाय' इत्येकेन ॥ २० ॥ स्थण्डिलम् अङ्गणमध्यवर्ती चत्वरः। तत्र दिवसे 'दिवाचरेभ्यः' इत्येकम् ॥ २१ ॥ रात्रौ वैश्वदेवे क्रियमाणे 'नक्तंचरेभ्यः' इत्येकम्। अनेन सायंप्रातर्वैश्वदेवकर्तव्यतोक्ता भवति; "अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्" इति **आश्वलायनीयात्**। अत्र सायमिति प्रथमोपादानेऽपि दिवैवोपक्रमः; "वैश्वदेवे गृहस्थस्य प्रातरारम्भणं भवेत्" इति **शौनकीयात्** ॥ २२ ॥

**ततो दक्षिणाग्रेषु दर्भेषु पित्रे पितामहाय प्रपितामहाय मात्रे पितामह्यै प्रपितामह्यै [3]नामगोत्राभ्यां च पिण्डनिर्वापणं कुर्यात् ॥ २३ ॥**

पितृयज्ञमाह। तत इत्यानन्तर्ये। तेन न देवभूतपितृयज्ञानां क्रमः सिद्धः। "वैश्वदेवं ततः कुर्याद् बलिकर्म तथैव च। ततः पितृमखं कुर्यात्" इति **नारसिंहात्**। पितृकर्मत्वात् दक्षिणाग्रता दर्भाणाम्; "पितॄंस्तु दक्षिणाग्रे वा" इति परिभाषणात्। पित्रादित्रयोपादानमेकोद्दिष्टतापरिहाराय। मात्राद्युपादानं मातामहादिपरिहाराय। यत्तु,

> "नित्यश्राद्धं तु यन्नाम दैवहीनं तदुच्यते।
> तच्च षाट्पुरुषं ज्ञेयं दक्षिणापिण्डवर्जितम् ॥"

इति मातामहाभिप्रायेण षाट्पुरुषत्वं, तत् शाखान्तराभिप्रायम्; पिण्डवर्जनसाहचर्यात्। एतेन

> "नित्यश्राद्धेऽपि गन्धाद्यैर्द्विजानभ्यर्च्य शक्तितः।
> सर्वान् पितृगणान् सम्यक् सदैवोद्दिश्य भोजनम् ॥"

[1] दिवाचरेभ्यो भूतेभ्य इति स्थण्डिले—घ. [2] भूमेरधस्ताच्च देशे—घ. [3] स्वनाम—घ.

इत्यपि व्याख्यातम्। नामगोत्राभ्याम्; चकारात् वस्वादिरूपस्वधाकाराभ्यां च पिण्डदानं कार्यम्। पिण्डग्रहणात् ब्राह्मणभोजननिवृत्तिः; "पितॄनुद्दिश्यैकं ब्राह्मणं भोजयेत्, अपि वा दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु पिण्डं ददाति" इति **बोधायनेन** पिण्डब्राह्मणभोजनयोर्विकल्पाभिधानात्। ततश्च ब्राह्मणभोजने न पिण्डदानम्; पिण्डदाने च न ब्राह्मणभोजनमिति पिण्डवर्जनेनाविरोधः॥ २३॥

**पिण्डानां चानुलेपनपुष्पधूपनैवेद्यादि[1] दद्यात्॥ २४॥ उदककलशमुपनिधाय स्वस्त्ययनं वाचयेत्॥ २५॥ श्वकाकश्वपचानां भुवि निर्वपेत्॥ २६॥**

षण्णामपि पित्रादिपिण्डानां गन्धादिचतुष्टयं दद्यात्। आदिशब्दात् ताम्बूलदक्षिणयोर्ग्रहणम्॥ २४॥ समीपे पित्रुद्देशेन जलपूर्णं कलशं निधाय 'स्वस्ति त्वं ब्रूहि' इति यं कंचित् ब्राह्मणं वाचयेत्। तं ब्राह्मणाय दद्यादित्यर्थः; "अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम्" इति **योगिस्मरणात्**॥ २५॥ बल्यन्तरमाह। श्वादीनामर्थे किंचिदन्नमङ्गणभुवि निक्षिपेत्;

"शुनां च पतितानां च श्वपचां पापरोगिणाम्।
वायसानां क्रिमीणां च शनकैर्निक्षिपेद् भुवि॥"

इति **मानवात्**॥ २६॥

**भिक्षां च दद्यात्॥ २७॥ अतिथिपूजने च परं यत्नमातिष्ठेत[2]॥ २८॥ [3]सायमतिथिं प्राप्तं प्रयत्नेनार्चयेत्[4]॥ २९॥ अनाशितमतिथिं गृहे न वासयेत्॥ ३०॥**

मनुष्ययज्ञानुकल्पमाह। भिक्षां ग्रासमात्रां च दद्यात्। चकारात् ब्राह्मणं च भोजयेत्; "अहरहर्ब्राह्मणेभ्योऽन्नं दद्यात्" इति **बोधायनीयात्**। इदं च वक्ष्यमाणातिथ्यभावे;

"ततो गोदोहमात्रं वा कालं तिष्ठेद् गृहाङ्गणे।
अतिथिग्रहणार्थाय तदूर्ध्वं वा यथेच्छया॥"

इति **विष्णुपुराणात्**। ततः श्वादिबलिदानानन्तरम्। तदभावे **मार्कण्डेयः**—

"[5]भोजनं हन्तकारं वाप्यग्रं भिक्षामथापि वा।
अदत्त्वा नैव भोक्तव्यं यथाविभवमात्मनः॥"

[1] नैवेद्यम्—ज, ठ.
[2] आचरेत्—ज.
[3] सायमपि—ज.
[4] आशयेत्—ठ.
[5] From here three lines missing in ख, ग.

इति । अत्राग्रं ग्रासचतुष्टयमानं ज्ञेयम् । पूर्वाभावे चोत्तरोत्तरम् । भिक्षेति सामान्येऽपि तिस्रो देयाः ;

"दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम् ।
स्वेच्छया च ततो दद्याद्विभवे सत्यवारितम् ॥"

इति [1]**पाराशर्यात्** ॥ २७ ॥ मुख्यं मनुष्ययज्ञमाह । वक्ष्यमाणस्यातिथेः वक्ष्यमाणेन प्रतिश्रयादिना पूजने, चकारात् भोजने च परं कायवाङ्मनोभिर्यत्नं कुर्यात ; "चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् । अध्यात्मनः प्रदानेन तोषयेत्" इति **व्याससमरणात्** ॥ २८ ॥ वक्ष्यमाणस्यातिथेर्द्वैविध्यं वक्ष्यति । तत्र सायमतिथेर्विशेषमाह । सायं वैश्वदेवान्ते प्राप्तमतिथिम् [2]अन्नाद्यभावे वाग्भूतृणोदकैरभ्यर्चयेत् ; "अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः" इति **योगिस्मरणात्** । यत्नवचनमसत्कारे दोषाधिक्यज्ञापनाय ;

"दिवातिथौ तु विमुखे गते यत् पातकं नृप ।
तदेवाष्टगुणं पुंसां सूर्योढे विमुखे गते ॥"

इति **विष्णुपुराणात्** ; "सायं समागतो योऽसौ सूर्योढः सोऽतिथिः स्मृतः" इति **प्राचेतसात्** ॥ २९ ॥ किंच अनाशितम् अभोजितमतिथिं स्वयमशक्त्या विना पूजनेन स्वगृहे न स्थापयेत् ; "नास्यानश्नन् गृहे वसेत्" इति **मानवात्** ॥ ३० ॥

**यथा वर्णानां ब्राह्मणः [3]प्रभुर्यथा स्त्रीणां भर्ता तथा गृहस्थस्यातिथिः ॥ ३१ ॥ तत्पूजया स्वर्गमाप्नोति ॥ ३२ ॥**

अतिथिप्रशंसामाह । यथा क्षत्रियादयस्त्रयोऽपि वर्णाः ब्राह्मणायत्ताः धर्मोपदेशकत्वात् तस्य, यथा च स्त्रियो भर्त्रेकदेवताः, तथा गृहस्थोऽतिथिदैवतः ;

"राजन्या विप्रदैवत्या भार्याश्च पतिदेवताः ।
गृहस्थोऽतिथिदैवत्यस्तस्मात्तं पूजयेत् सदा ॥"

इति **स्मरणात्** ॥ ३१ ॥ तत्पूजाफलमाह । स्वर्गः देशकालविषयाविशिष्टः सुखविशेषः तत्पूजाफलम् ॥ ३२ ॥

**अतिथिर्यस्य भग्नाशो [4]गृहात् प्रतिनिवर्तते ।
तस्मात् सुकृतमादाय दुष्कृतं तु प्रयच्छति ॥ ३३ ॥**

एवं काम्यत्वमुक्त्वा नित्यत्वमाह । असत्कृतस्य अतिथेः परावर्तने गृहस्थस्य सुकृतनाशः, तद्दुष्कृतप्राप्तिश्चेति अतिथिसत्कारो नित्यः ॥ ३३ ॥

[1] पराशरीयात्—ख, ग.
[2] All the MSS. except ख omit from here up to दुष्कृतप्राप्तिश्चेति on Sūtra 33.
[3] प्रभुः omitted in ज.
[4] गृहस्थस्य तु गच्छति—ज.

**एकरात्रं हि[1] निवसन्नतिथिर्ब्राह्मणः स्मृतः ।**
**अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते ॥ ३४ ॥**

अतिथिलक्षणं तत्प्रवृत्तिनिमित्तं चाह । यः ब्राह्मणः देशान्तरं गच्छन् एकरात्रं मध्ये यस्य गृहे वसति, तस्यासावतिथिर्ज्ञेयः ;

" क्षुधार्तस्तृषितश्चैव श्रान्तो गृहमुपागतः ।
प्रयत्नेन हि संपूज्यः सोऽतिथिः स्वर्गसंक्रमः ॥ "

इति **वैष्णवात्** । हिशब्दो लक्षणान्तरमपि सूचयति । यथाह **पराशरः**—

" दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥ "

इति । ' नातिथिः पूर्वमागतः ' इति वैश्वदेवोपस्थितस्य प्राशस्त्याय ; " काले वाप्यथवाकाले नास्यानश्नन् गृहे वसेत् " इति **मानवात्** । कालः वैश्वदेवस्य । अकालोऽन्यः कालः । **यमोऽपि**—" व्रती यतिर्वैकरात्रं निवसन्नुच्यतेऽतिथिः " इति ।

यत्तु व्रतियत्योरेवातिथित्वं, न गृहस्थवनस्थयोः, ब्राह्मणपदस्य तत्रैवोपसंहारादिति ; तन्न ;

" यतिर्नैत्यग्निहोत्री च तथा च मखकृद् द्विजः ।
सदैतेऽतिथयः प्रोक्ता अपूर्वाश्च दिने दिने ॥
अपूर्वः सुव्रती विप्रो ह्यपूर्वश्चातिथिः सदा ।
वेदाभ्यासरतो [2]नित्यमपूर्वो हि दिने दिने ॥ "

इति **पराशर**वचोविरोधात् । ब्राह्मण इति अब्राह्मणनिरासाय ; " नैकग्रामीणमतिथिं विन्द्यान्नाब्राह्मणं तथा " इति **विष्णुधर्मोत्तरात्** । तत्र च प्रवृत्तिनिमित्तमनित्यस्थितिकत्वम् ; एकरात्रनिवासात् । तेन च द्वितीयवासे नातिथित्वमित्युक्तं भवति । शब्दस्वरूपं त्वनित्या स्थितिर्यस्येत्यस्मिन्नर्थे मध्यमपदलोपेन वर्णविपर्ययवर्णनाशाभ्यां च सिध्यति । हिशब्देन स्थित्या आगमनाक्षेपात्, " अनित्यमागतो यस्मात् तस्मादतिथिरुच्यते " इत्यपि प्रवृत्तिनिमित्तं सूचितम् । तत्राह **यमः**—

" तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
सोऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः ॥ "

इति । तिथिः प्रतिपदादिः । पर्व संक्रान्त्यादि । उत्सवः विवाहादिः । एतेषु यो नियमेन [3]नायाति, सोऽतिथिः इत्यनेन न विद्यते तिथिर्यस्येत्युक्तं भवति ॥ ३४ ॥

[1] तु—ज. [2] नित्यं त्रयोऽपूर्वे दिने दिने—ख, ग. [3] याति—ग.

**नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा ।**
**उपस्थितं गृहे विन्द्याद्भार्या यत्राग्नयोऽपि वा ॥ ३५ ॥**

उक्तेऽतिथिलक्षणे अन्वयव्यतिरेकमुखेन विशेषान्तरमाह । एकग्रामे भव एकग्रामीणः; तादृशं विप्रम् । तथा ग्रामान्तरस्थमपि, संगतिः पूर्वपरिचयो विद्यते येनासौ सांगतिकः; तं च । यत्र भार्या अग्निहोत्रं वा अस्ति; तादृशेऽपि निवासे उपस्थितम् अतिथिं न जानीयात् । गृहविशेषणोपादानात् प्रवासे यथोक्तविशेषणवतोऽपि नातिथित्वम् । यथाह **बोधायनः**—

" प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते ।
पञ्चानां महतामेष सह यज्ञैः स गच्छति ॥
प्रवासे कुरुते चैतान् यदान्नमुपपद्यते ।
न चेदुत्पद्यते चान्नमद्भिरेतान् समाचरेत् "

इति; गृहकर्तव्यतासंभवे प्रवासे पाक्षिककर्तव्यतादर्शनात् । एतेन ग्रामान्तरवासी, पूर्वापरिचितः, भार्या पतिगृहे, दूरादागतः, एकरात्रवासी, ब्राह्मणः, अतिथिरित्यतिथिलक्षणमुक्तं भवति ॥ ३५ ॥

**यदि त्वतिथिधर्मेण क्षत्रियो गृहमागतः ।**
**[1]भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ॥ ३६ ॥**

अतिथिप्रसङ्गेनाह । अतिथिधर्मः अतिथिलक्षणम् । तद्युक्तः क्षत्रियोऽपि चेत् गृहमायाति, तदा असावपि विप्रातिथिभोजनानन्तरमिच्छया भोजनीयः । कामग्रहणात् अभोजनेऽप्रत्यवायतां च दर्शयति ॥ ३६ ॥

**वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ ।**
**भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥ ३७ ॥**

[2]यद्यतिथिवदेव वैश्यशूद्रावपि कुटुम्बे निवासमागच्छतः, तदा तावप्यनतिथित्वख्यापनाय भृत्यैर्वक्ष्यमाणैः सह भोजनीयौ, न त्वतिथिधर्मेणार्चनीयौ; अब्राह्मणस्यातिथित्वाभावात्; " ब्राह्मणस्यानतिथिरब्राह्मणः " इति **गौतमीयात्** । यत्तु " अतिथित्वे तु वर्णानां देयं शक्त्यानुपूर्वशः " इति वर्णत्रयस्यातिथित्वस्मरणं, तद्भोजनीयत्वाभिप्रायेण, न त्वप्रत्याख्येयत्वेन; शक्तिकामाद्युपबन्धदर्शनात् ॥ ३७ ॥

**इतरानपि सख्यादीन् संप्रीत्या गृहमागतान् ।**
**[3]प्रकृतान्नं यथाशक्ति भोजयेत् सह भार्यया ॥ ३८ ॥**

1 भुक्तवत्स्वपि—ट. From here up to the end of the first half of verse 38 missing in ज.
2 यद्यतिथित्वेन—ग.
3 सत्कृत्यान्नं—ठ.

किंच वैश्वदेवकाले प्रीत्यतिशयेन यथोक्तलक्षणेन गृहं प्राप्तान् इतरान् मूर्धावसिक्तादीन् सखिसंबन्धिनश्च शक्तौ सत्यां प्रकृतं यथोपपादितमेवान्नं भार्याभोजनकाले भोजयेत्। यथाह **योगीश्वरः**— "भोजयेच्चागतान् काले सखिसंबन्धिबान्धवान्" इति। सखा मित्रम्। संबन्धिनः वैवाहिकाः। बान्धवाः पैतृष्वस्रेयादयः। भार्याभोजनकालश्च पतिभोजनानन्तरम्;

"भुङ्क्ते भुक्ते पतौ या तु स्वासीना चापि वासिते।
विनिद्रिते विनिद्राति प्रथमं परिबुध्यते॥"

इति **मानवात्**। इदं च भार्यया सह भोजनं पतिभोजनानन्तरमागतानाम्। पूर्वागतानां तु पत्यैव सह भोजनम्, औचित्यात्। दंपतिभोजनानन्तरमागतानां तु पाकान्तरेणैव; न तद्भुक्तशेषेण; "दंपत्योर्भुक्तशेषं तु भुक्त्वा चान्द्रायणं चरेत्" इति निषेधात्॥ ३८॥

**स्ववासिनीं कुमारीं च रोगिणीं [1]गुर्विणीं तथा।**
**अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्॥ ३९॥**

अतिथिभोजनात् प्राक् अन्यो न भोजनीय इति वक्ष्यति। तस्यापवादमाह। ऊढा पितृगृहस्थकन्या स्ववासिनी। सुवासिनीति पाठे नवोढा कन्या स्नुषा च। कुमारी अविवाहिता। रोगिणी ज्वराद्यभिभूता। गुर्विणी गर्भिणी। तथेति अचिरप्रसूता; "स्वगृह्याणां कुमारीबालवृद्धतरुणप्रजाताः" इति **वासिष्ठात्**। तरुणप्रजाता नवप्रजाता। एतान् अतिथिभ्यः पुरैव भोजयेत्; एतेषां बुभुक्षासहिष्णुत्वात्। किमतिथिभ्योऽग्रे एते भोजनीयाः, न वेत्यविचारयन्; प्रधानाविरोधस्याभ्यर्हितत्वात्। एतानिति पुंस्त्वेन बालवृद्धादीनपि परामृशति। यथाह **योगीश्वरः**—

"बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः।
संभोज्यातिथिभृत्यांश्च दंपत्योः शेषभोजनम्॥"

इति। अनेन च पाठक्रमेण 'अग्रे अनन्तरम्' इति व्याख्या निरस्ता। 'अन्वक्' इति **मानवः** पाठः। तत्र सहेत्यर्थ इति **मेधातिथिः**॥ ३९॥

**अदत्त्वा [2]यस्तु एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः।**
**[3]भुञ्जानो न स जानाति श्वगृध्रैर्जग्धिमात्मनः॥ ४०॥**
**भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि।**
**भुञ्जीयातां ततः पश्चादवशिष्टं तु दंपती[4]॥ ४१॥**

[1] गर्भिणीं—ठ.
[2] तु य एतेभ्यः—ग, ठ.
[3] स भुञ्जानो न जानाति—ठ.
[4] गृहस्थः शेषभुग्भवेत्—ज.

अतिथ्यादिभ्यः प्राक् भोजने प्रतिषेधमाह । अतिथिमारभ्य [1]स्ववासिन्याद्यन्तानभोजयित्वा यो धर्मानभिज्ञः स्वयमेव प्रथमं भुङ्क्ते । भुञ्जान इति णिच् विभावनीयः ; अन्यान् वा भोजयति ; स श्वभिः गृध्रैश्च करिष्यमाणामात्मनो जग्धिं भक्षणक्रियां न जानाति ॥ ४० ॥ भोजनीयभोजकभोजने क्रममाह । विप्राः अतिथयः । चकारात् अतिथिवदागता अभ्यागताः क्षत्रियाश्च । स्वाः सखिसंबन्धिबान्धवाः । भृत्याः भरणीयाः मातापित्रादयः ;

" माता पिता गुरुर्भार्या प्रजा दीनाः समाश्रिताः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ "

इति दक्षस्मरणात् । चकारात् दासीदासाः । एतान् भोजयित्वैव, नाभोजयित्वा । पश्चात् अनन्तरम् ; न सह । ततः तद्भुक्तात् अवशिष्टं, न पक्वान्तरं, भार्यापती भुञ्जीयाताम् ॥ ४१ ॥

**देवान् पितॄन् मनुष्यांश्च भृत्यान् गृह्याश्च देवताः ।**
**पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग्भवेत् ॥ ४२ ॥**

दम्पत्योर्भोजने क्रममाह । देवादीन् तत्तद्यज्ञेषु । चकारात् सख्यादीन् । भृत्यान् उक्तलक्षणान् । गृह्या देवताः पथ्यादयः । चकारात् श्वकाकादयश्च । एतान् तत्तदन्नभागेन तर्पयित्वा, अनन्तरं ततः महायज्ञभृत्यभरणान्नादवशेषं गृहस्थो भुञ्जीत । अर्थात् पत्नी पतिभोजनानन्तरं भुञ्जीतेति सिद्धम् ;

" सेवेत भर्तुरुच्छिष्टमिष्टमन्नफलादिकम् ।
महाप्रसाद इत्युक्त्वा प्रीतिदत्तं प्रतीच्छति ॥ "

इति **मानवात्** । उक्तानामपि देवयज्ञादीनां पुनर्वचनं देवयज्ञात् प्राक् मनूक्तपितृयज्ञनिरासाय ; मनुष्ययज्ञानन्तरमपि मनूक्तभूतयज्ञविधानाय च । तथाच **मनुः**—" कुर्यादहरहः श्राद्धम् " इति पितृयज्ञमुक्त्वा, " वैश्वदेवस्य सिद्धस्य " इति देवयज्ञमाह ।

" स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि ।
पितॄञ्छ्राद्धैरतिथीनन्नैर्भूतानि बलिकर्मणा ॥ "

इति मनुष्ययज्ञानन्तरं भूतयज्ञं चाह ॥ ४२ ॥

**अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।**
**यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते ॥ ४३ ॥**

पञ्चयज्ञाकर्तुर्भोजने [2]प्रत्यवायमाह । यस्तु आत्मार्थमेवान्नं पक्त्वा आत्मनैव भुङ्क्ते, पञ्चयज्ञान् नानुतिष्ठति, स केवलमघमेव भुङ्क्ते ; " केवलाघो भवति केवलादी " इति **श्रुतेः** । तत्र हेतुः—यतो

[1] स्ववासिन्याद्यन्तान् न भोजयति स श्वभिः—घ.
[2] दोषमाह—घ.

यज्ञेभ्यः देवयज्ञादिभ्यः शिष्टमवशिष्टम्; अश्यत इत्यशनं भोज्यम्; सतामन्नमतुं योग्यं विधीयते शास्त्रेषु, तस्मात् पञ्चयज्ञाननुष्ठायैव भोक्तव्यम्; नान्यथेति ॥ ४३ ॥

**स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।**
**न चाप्नोति गृही लोकान् यथा त्वतिथिपूजनात् ॥ ४४ ॥**
**सायं प्रातस्त्वतिथये प्रदद्यादासनोदके ।**
**अन्नं चैव यथाशक्त्या[1] सत्कृत्य विधिपूर्वकम् ॥ ४५ ॥**
**प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम् ।**
**[2]प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम् ॥ ४६ ॥**

इति [3]श्रीविष्णुस्मृतौ सप्तषष्टितमोऽध्यायः

अतिथिभोजने अर्थवादमाह । गृहस्थः अतिथिपूजनेन यादृशान् लोकान् प्राप्नोति, तादृशान् वेदाध्ययनाग्निहोत्रहोमयज्ञतपोभिर्नेति ॥ ४४ ॥ उक्तस्यातिथेर्द्वैविध्यं तत्पूजने प्रकारविशेषं चाह । सायं प्रातः कालभेदेन आगतः अतिथिरपि द्विविधः । तस्मै अन्नं दद्याच्च । विधिपूर्वकम्; मधुपर्कविधिना । आसनोदके; आसनं विष्टरः; उदकं पाद्यार्घ्याचमनीयानि दत्त्वैव । चकारो वाक्यभेदप्रदर्शनाय । यथाशक्त्या; अभिमुखं प्रत्युद्गमनादिना सत्कृत्य मधुपर्कादि दत्त्वैवेत्युक्त एवातिथिभोजने गुणविधिः ॥ ४५ ॥ किंच प्रतिश्रयः निवासः । शय्या खट्वा तूलिका वा । पादयोः प्रक्षालनपूर्वकं घृतादिनाभ्यञ्जनम् । दीपः निवासोद्द्योताय । तथाशब्देन गात्राभ्यङ्गव्यजनस्नानानुलेपनादीनां विष्णुधर्मोत्तरोक्तानां ग्रहणम् । [4]एषां प्रत्येकदानेन गोः प्रकृष्टदानफलसमं फलं प्राप्नोति । प्रतिश्रयादिषु द्वितीयानिर्देशात् प्राप्तिकर्मतापि सिध्यति । तेनेह लोके प्रतिश्रयादिदानेन प्रतिश्रयादि प्राप्नोति । परत्र च गोदानफलमिति ॥ ४६ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[6]श्रीरामपण्डितात्मज[6]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां सप्तषष्टितमोऽध्यायः

[1] यथाशक्ति—ज, ठ.
[2] प्रत्येकदानादाप्नोति—ठ.
[3] वैष्णवे धर्मशास्त्रे पञ्चयज्ञप्रकरणं सप्तषष्टितमम्—ज, ठ.
[4] प्रत्येकमेषां दानेन—ग.
[5] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां सप्तषष्टितमोऽध्यायः—घ, च.
[6] श्री omitted in ग.

## [1]अष्टषष्टितमोऽध्यायः

**चन्द्रार्कोपरागे नाश्नीयात् ॥ १ ॥ स्नात्वा मुक्तयोरश्नीयात् ॥ २ ॥ अमुक्तयोरस्तं गतयोः स्नात्वा दृष्ट्वा चापरेऽह्नि ॥ ३ ॥**

उक्ते भोजने विधिनिषेधावष्टषष्टितमेनाह । चन्द्रसूर्यग्रहणकाले ग्रहणप्रहरात् पूर्वं यामत्रयं यामचतुष्टयं च नाश्नीयात् । तथा च **व्यासः**—"ग्रहकाले च नाश्नीयात्" इति । **वृद्धगौतमोऽपि**—

"सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥"

इति । चन्द्रार्कयोः सर्वग्रहे यामचतुष्टयम् । [2]खण्डग्रहे यामत्रयमित्यर्थः ;

"चन्द्रार्कसर्वग्रासे तु नाद्याद्यामचतुष्टयम् ।
खण्डग्रहे तु यामांस्त्रीन् प्राग्भुजिं परिवर्जयेत् ॥"

इति **ब्रह्मवैवर्तात्** । बालादिषु तु विशेषमाह **मार्कण्डेयः**—

"सायाह्ने ग्रहणं चेत् स्यादपराह्ने न भोजनम् ।
अपराह्ने न मध्याह्ने मध्याह्ने न तु सङ्गवे ;
भुञ्जीत सङ्गवे चेत् स्यान्न [3]पूर्वभुजिमाचरेत् ॥"

इति ॥ १ ॥ यदा तु न पूर्वं भोजनकालस्तदाह । मुक्तेः पूर्वं स्नानवचनं मुक्तिस्नानताभ्रमनिरसाय । तेन मुक्तिस्नानानन्तरं भोजनाङ्गतया स्नात्वाश्नीयात् ; "अस्नाताशी मलं भुङ्क्ते" इति भोजनाङ्गस्नानश्रवणात् । तस्मिंश्च मुक्तिस्नानानन्तरमेवाधिकारात् ;

"आशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः ।
राहुस्पर्शे तयोः स्नात्वा स्नानादौ कल्पते नरः ॥"

इति **ब्रह्माण्डपुराणात्** ॥ २ ॥ ग्रस्तास्ते विशेषमाह । अमुक्तयोरित्यादि कर्मणि षष्ठी । तेन राहुग्रस्तावेव अस्तं गतौ चन्द्रार्कौ परेऽह्नि अर्थादुदितौ दृष्ट्वा, चकारात् मुक्तिनिमित्तं स्नात्वा ; पुनः स्नात्वा अश्नीयात् ।

[1] Adhyāya-s 68 to 70 missing in ठ.  [2] चन्द्रग्रहे—क.  [3] पूर्वं भुजि—घ.

मुक्तिदर्शनोत्कर्षात् स्नानस्याप्युत्कर्षः; तदाद्युत्कर्षन्यायात्। दर्शनात् प्राक् स्नानवचनं तूक्तप्रयोजनमेव। ततश्च रविग्रस्तास्ते अहोरात्रं, चन्द्रग्रस्तास्ते अहर्मात्रं नाश्नीयादिति सिद्धम्। तथाच **भृगुः**—

" ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि।
परेद्युरुदये दृष्ट्वा स्नात्वाभ्यवहरेन्नरः॥ "

इति। दर्शनं शास्त्रीयज्ञानोपलक्षणम्;

" मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते।
आकलय्य ततः कालं स्नात्वा भुञ्जीत वाग्यतः॥ "

इति **स्मृत्यन्तरात्**। ग्रस्तोदये तु **वसिष्ठः**—

" ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्।
रविग्रस्तोदये पूर्वरात्रौ च भुजिवर्जनम्॥ "

इति॥ ३॥

**न गोब्राह्मणोपरागेऽश्नीयात्॥ ४॥ न राज्ञो व्यसने॥ ५॥**

गोब्राह्मणयोरुपरागो बन्दीकरणम्। तद्दिने नाश्नीयात्। अनुवृत्तावपि पुनः क्रियावचनं यावद्बन्दीकरणमुपवासस्याशक्यत्वावगमाय॥ ४॥ राज्ञो व्यसनम् आपदुपगमो मरणं वा। तद्दिनेऽपि नाश्नीयात्॥ ५॥

**प्रवसिताग्निहोत्री यदाग्निहोत्रं कृतं मन्यते तदाश्नीयात्॥ ६॥ यदा कृतं मन्येत वैश्वदेवमपि॥ ७॥ पर्वणि च यदा कृतं मन्येत पर्व॥ ८॥**

आहिताग्नेः प्रवासे विशेषमाह। देशान्तरादागत आहिताग्निः यावता कालेन नित्यहोमं कृतं मन्येत, तावति कालेऽतीते द्वादश्यां प्रातः नित्यं च सायमश्नीयात्। पुनः क्रियावचनं भोजननियमाय;

" आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम्॥ "

इति **स्मरणात्**। अग्निहोत्रवचनं स्मार्ताग्नेरनियमाय॥ ६॥ किंच प्रवासी आहिताग्निः यावता कालेन वैश्वदेवमपि कृतं मन्येत, तावत्कालात्यये अश्नीयात्। वैश्वदेवशब्देन देवभूतपितृयज्ञा उच्यन्ते; " देवभूतपितृयज्ञा वैश्वदेवः " इति **प्राचेतसात्**। अपिशब्दान्मनुष्ययज्ञमपि; " भार्या यत्राग्नयोऽपि वा " इत्यनेन तस्यापि [1]प्रत्यहकर्तव्यत्वात्॥ ७॥ किंच दर्शपूर्णमासयोः पर्वणोः, चकारात् प्रतिपदोश्च अन्वाधानपिण्डपितृयज्ञान्वाहार्यकादि यदा कृतं मन्येत तदाश्नीयात्॥ ८॥

[1] प्रत्यह corrupted in घ.

**नाश्नीयाच्चाजीर्णे ॥ ९ ॥ नार्धरात्रे ॥ १० ॥**

किंच अजीर्णे धूमोद्गारे, चकारात् श्राद्धदशमीद्वादश्यादिभोजने च पुनर्नाश्नीयात्; "पुनर्भोजनमध्वानम्" "एकादशीं समासाद्य त्यजेद्भक्तचतुष्टयम्" इत्यादिस्मरणात् ॥ ९ ॥ अर्धरात्रं निशीथः; "निशीथो घटिकाद्वयम्" इति स्मरणात् । मुहूर्तद्वयमित्यन्ये; द्विरशनोपक्रमे "अहनि च तथा तमस्विन्यां सार्धप्रथमयामान्तम्" इति कात्यायनस्मरणात् । अत्र महानिशाप्युपलक्ष्यते "महानिशा च विज्ञेया [1]मध्यमं प्रहरद्वयम्" इति । तत्र नाश्नीयात् । तथा अर्धरात्रे व्यतीतेऽपि;

"अर्धरात्रे व्यतीते वाप्यर्धरात्रे महानिशि ।
ब्राह्मणः क्षत्रियो वैश्यो भुक्त्वा सांतपनं चरेत् ॥"

इति स्मरणात् ॥ १० ॥

**न मध्याह्ने ॥ ११ ॥ न संध्ययोः ॥ १२ ॥ नार्द्रवासाः ॥ १३ ॥ नैकवासाः ॥ १४ ॥ न नग्नः ॥ १५ ॥ [2]नोदके ॥ १६ ॥ नोत्कुटकः[3] ॥ १७ ॥**

मध्याह्नः कुतपः ॥ ११ ॥ सायंप्रातःसंध्ययोः ॥ १२ ॥ क्लिन्नवस्त्रः; "नार्द्रवासा नार्द्रशिराः" इति ब्राह्मात् ॥ १३ ॥ एकवासा अनुत्तरीयः, अनुपवीती च; "सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत" इति आपस्तम्बीयात् । ब्राह्मेऽपि—

"नैकवस्त्रो द्वयमध्ये सोपानत्कः सपादुकः ।
न चर्मोपरिसंस्थश्च चर्मवेष्टितपार्श्ववान् ॥"

इति ॥ १४ ॥ नग्नो दशविधः प्रागुक्तः ॥ १५ ॥ "जलस्थो नौकास्थो वा न भुञ्जीत" इति आपस्तम्बीयात् ॥ १६ ॥ उत्कुटकः ऊर्ध्वजानुः ॥ १७ ॥

**न भिन्नासनगतः ॥ १८ ॥ न च शयनगतः ॥ १९ ॥ न भिन्नभाजने ॥ २० ॥ नोत्सङ्गे ॥ २१ ॥ न भुवि ॥ २२ ॥ न पाणौ ॥ २३ ॥**

भिन्नं स्फुटितं भिन्नजातीयं वा आसनद्वयम्; तत्रोपविष्टः ॥ १८ ॥ शयनं शय्या; तद्गतः । भूमावपि शयित्वा वा; ब्राह्मे—"नावसक्थिकसंस्थश्च न च पर्यङ्किकास्थितः" इति । पर्यङ्किका मञ्चिका

[1] मध्यस्थं—घ. [2] This Sūtra omitted in ख, ग. [3] नोत्कुट्टकः—ग.

॥ १९ ॥ स्फुटिते भिन्नजातीयैः कृते वा पात्रे । ताम्रादिव्यतिरेकेणैतत्; "ताम्ररजतसुवर्णानां भिन्ने च न दोषः" इति पैठीनसिस्मरणात् ॥ २० ॥ उत्सङ्गे उपस्थे पात्रं संस्थाप्य । भोजनं भक्ष्यभक्षणस्याप्युपलक्षणम्; "न भक्ष्यानुत्सङ्गे भक्षयेत्" इति गौतमीयात् । उत्सङ्गः आसन्द्युपलक्षणम्; "न चासन्दीस्थिते पात्रे" इति विष्णुपुराणात् ॥ २१ ॥ पत्रावल्याद्यनन्तर्हितायां भूमौ; अकृत्रिमायां वा; "कृतभूमौ च भुञ्जीत" इति आपस्तम्बीयात् ॥ २२ ॥ पाणौ पाणितले;

"करे कर्पटके चैव शिलायां ताम्रभाजने ।
वटार्काश्वत्थपत्रेषु गृही भुक्त्वैन्दवं चरेत् ॥"

इति शातातपीयात् । तथा ब्राह्मेऽपि—

"यस्तु पाणितले भुङ्क्ते प्रसृताङ्गुलिभिश्च यः ।
यस्तु फूत्कारसंयुक्तं [1]तस्य गोमांसवच्च तत् ॥"

इति ॥ २३ ॥

**लवणं च यत्र दद्यात् तन्नाश्नीयात् ॥ २४ ॥ न बालकान् निर्भर्त्सयेत् ॥ २५ ॥ नैको मृष्टम् ॥ २६ ॥ नोद्धृतस्नेहम् ॥ २७ ॥ न दिवा धानाः ॥ २८ ॥ न रात्रौ तिलसंबन्धम् ॥ २९ ॥ न दधिसक्तून् ॥ ३० ॥**

यस्मिन् द्रव्ये पाकानन्तरं लवणं दीयते तत्; "प्रत्यक्षलवणं च यत्" इति भविष्यात् । चकारात् द्विपक्वऋजीषपक्वादि च; "पुनः पक्वमृजीषपक्वम्" इति वासिष्ठात् ॥ २४ ॥ स्वपङ्क्तौ भुञ्जानान् बालकान् धिक्कुर्वन् कुत्सयंश्च । ब्राह्मेऽपि—"अन्नस्य जन्मकालुष्यं दुष्पक्तिं च न कुत्सयेत्" इति । जन्मकालुष्यं, दुर्देशोत्पत्त्यादि । दुष्पक्तिः दुष्पाकः ॥ २५ ॥ एकोऽन्यरहितः अन्यपङ्क्तौ च मिष्टान्नम् ॥ २६ ॥ उद्धृतः स्नेहः नवनीतं यस्मात् तत् तक्रम् । उद्धृततैलं तिलकल्कं च । गौतमः— "उद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनां चात्तवीर्याणि नाश्नीयात्" इति । उद्धृतस्नेहस्यैवायं प्रपञ्चः । विलयनं नवनीतमलम् । मथितं निर्जलं तक्रम् । प्रभृतिशब्देन उपात्तरसे दधिपयसी ॥ २७ ॥ दिवसे भृष्टयवान् नाद्यात् । दिवसग्रहणात् रात्रावनिषेधः;

"दिवा धानासु वसति रात्रौ च दधिसक्तुषु ।
अलक्ष्मीः कोविदारेषु कपित्थेषु सदैव हि ॥"

[1] तच्च—घ.

इति **ब्राह्मात्** ॥ २८ ॥ तिलैः संबन्धो यस्य तत् रात्रौ। रात्रिग्रहणात् दिवा अनिषेधः। तिलसंबन्धिनिषेधात् तिलनिषेधोऽर्थसिद्ध एव ॥ २९ ॥ रात्रौ दधि च सक्तूंश्च नाद्यात्। सक्तवः भृष्टयवपिष्टानि।

"आयुष्कामो न कुर्वीत रात्रौ च दधिभोजनम्।
धाना दधि च सक्तूंश्च श्रीकामो वर्जयेन्निशि।
भोजनं तिलसंबद्धं स्नानं चैव विचक्षणः॥"

इति पृथङ् निषेधात् नात्र साहित्यविवक्षा। मधुनोऽप्यत्रोपलक्षणम्;

"अपि प्रस्थानसमये रात्रौ न प्राशयेन्मधु।
मधुपर्कप्रदानं तु वर्जयित्वा तु कामतः॥"

इति **ब्राह्मात्**। अत्रैव वाक्ये दधीत्यपि पाठः पुराणान्तरे ॥ ३० ॥

**न कोविदारवटपिप्पलशाणशाकम् ॥ ३१ ॥**

कोविदारः-काञ्चनारः। शेषं प्रसिद्धम्। एषां [1]कलिकाफलपत्राणां शाकम्। एतेन कुसुम्भादीन्युपलक्ष्यन्ते; "कुसुम्भनालिकाशाकं वृन्ताकं पातिकां तथा" इति **उशनःस्मरणात्** ॥ ३१ ॥

**नादत्त्वा ॥ ३२ ॥ नाहुत्वा ॥ ३३ ॥**

यत् देवद्विजादिभ्यो न दद्यात् तन्न भक्षयेत् ॥ ३२ ॥ यस्य होमार्हस्य न होमः क्रियते, तन्नाद्यात्; "यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम्" इति **आपस्तम्बीयात्** ॥ ३३ ॥

**नानार्द्रपादः ॥ ३४ ॥ नानार्द्रकरमुखश्च ॥ ३५ ॥**

न आर्द्रौ पादौ यस्यासौ तथा ॥ ३४ ॥ करौ च मुखं च तयोः समाहारः करमुखम्। न आर्द्रं तद्यस्यासौ तथा; "प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः" इति **याम्यात्**। चकारात् अद्भिर्हृदयंगमाभिराचमनं गम्यते, "सुप्रक्षालितपाणिपादोऽप आचम्य शुचौ संवृतदेशेऽन्नमुपसंगृह्य[2] कामक्रोधलोभमोहानपहृत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन् प्राश्नीयात्" इति **देवलस्मरणात्** ॥ ३५ ॥

**नोच्छिष्टश्च घृतमाददात्[3] ॥ ३६ ॥**

प्राणाहुत्यनन्तरं यावत्समाप्ति पूर्वमगृहीतं घृतं न गृह्णीयात्। तेन भोजनारम्भात् प्रागेव घृतग्रहणं सिद्धम्; "न भुञ्जीताघृतं नित्यं गृहस्थो भोजनं स्वयम्" इति **देवलेन** अघृतभोजननिषेधात्। ग्रहणवत् त्यागोऽपि निषिद्धो वक्ष्यते। हस्तदत्तस्यापि निषेधः **पराशरीये**—

[1] कालिका—घ. [2] संहृत्य—च. [3] आददीत—ज.

" माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् ।
हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनम् ॥ "

इति ॥ ३६ ॥

**न चन्द्रार्कतारका निरीक्षेत ॥ ३७ ॥ न मूर्धानं स्पृशेत् ॥ ३८ ॥ न ब्रह्म कीर्तयेत् ॥ ३९ ॥**

उच्छिष्टः चन्द्रादीन् न पश्येत् । राहुं च ; " नाशुची राहुतारकाः " इति **योगिस्मरणात्** । निः बुद्धिपूर्वकतां गमयति ॥ ३७ ॥ उच्छिष्टः मस्तकं न स्पृशेत् । शिरः पादोपलक्षणम् ;

" न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥ "

इति **बार्हस्पत्यात्** । स्पर्शनं वेष्टनोपलक्षणम् ; " यद्भुङ्क्ते वेष्टितशिराः सर्वं विद्यात् तदासुरम् " इति **स्मरणात्** ॥ ३८ ॥ उच्छिष्टः वेदं नोच्चारयेत् । उपलक्षणमिदम् ; " नाशुचिर्देवपितृनामानि कीर्तयेत् " इति **गौतमीयात्** ॥ ३९ ॥

**प्राङ्मुखोऽश्नीयात् ॥ ४० ॥ दक्षिणामुखो वा ॥ ४१ ॥**

पूर्वाभिमुखो भुञ्जीतेति नियमविधिरयं नित्यः ॥ ४० ॥ अयमपि नित्यविधिरेव । वाशब्दात् काम्योऽपि ;

" आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ "

इति **मानवात्** । यत्तु **वामनपुराणे**—" भुञ्जीत नैवेह च दक्षिणामुखो न च प्रतीचीमपि भोजनीयम् । " इति, यच्च **हारीतेन**—" नोदङ्मुखो न चाधिशयनासनः " इति, " न कदाचिदुदङ्मुखः " इति च ; तत्र दक्षिणाभिमुखतानिषेधो जीवन्मातृकविषयः, " वाग्यतो दक्षिणामुखो भुञ्जीत । अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति " इति **आपस्तम्बीयात्** । प्रत्यगुदङ्मुखनिषेधस्तु निष्कामविषयः ॥ ४१ ॥

**अभिपूज्यान्नम् ॥ ४२ ॥ सुमनाः स्रग्व्यनुलिप्तश्च ॥ ४३ ॥ न निःशेषकृत् स्यात् ॥ ४४ ॥ अन्यत्र दधिमधुसर्पिःपयःसक्तुपलमोदकेभ्यः ॥ ४५ ॥**

भोजनार्थमुपकल्पितमन्नं सव्याहृतिकगायत्र्या प्रोक्ष्य " सत्यं त्वर्तेन परिषिञ्चामि " इति परिषिच्य, " अमृतोपस्तरणमसि " इत्याचम्य, प्राणादिपञ्चाहुतीर्भुक्त्वा, वाग्यतः अन्नम् अकुत्सयन् सशेषं भुक्त्वा, " अमृतापिधानमसि " इत्याचम्य, आचमनशेषं दक्षिणपादाङ्गुष्ठाग्रे निनयेत्। अन्नग्रहणात् भक्ष्यादावनियमः; " भक्ष्यापूपकन्दमूलफलमांसेष्वेके " इति **प्राचेतसात्** ॥ ४२ ॥ प्रसन्नचेताः पुष्पमालानुलेपनादिभूषितो भुञ्जीत। चकारात् पीठोपविष्टो मण्डलस्थापितपात्रश्चेत्यादिः; " शुचिः पीठमधिष्ठितः " इति **देवलीयात्**;

" चतुरश्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम्।
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥ "

इति **ब्राह्मात्** ॥ ४३ ॥ परिविष्टमन्नं निःशेषं नाद्यात्; " सर्वं सशेषमश्नीयात् " इति **स्मरणात्** ॥ ४४ ॥ अस्यापवादमाह। सर्पिः घृतम्। पलं मांसम्। मोदकाः लड्डुकाः। शेषं प्रसिद्धम्। जलाद्युपलक्षणमेतत्।

" पानीयं पायसं सर्पिर्मधुसक्तुदधीन्यपि।
निरस्यं शेषमेतेषां न प्रदेयं तु कस्यचित् ॥ "

इति **भारतात्**। निरस्यं नितरां रसनीयम् ॥ ४५ ॥

**नाश्नीयाद्भार्यया सार्धं नाकाशे न तथोत्थितः।**
**बहूनां प्रेक्षमाणानां नैकस्मिन् बहवस्तथा ॥ ४६ ॥**

भार्या असवर्णा; तया सह नाश्नीयात्; सवर्णया सहाभ्यनुज्ञानात्;

" ब्राह्मण्या वा सहाश्नीयादुच्छिष्टं वा कदाचन।
न तस्य दोषं मन्यन्ते नित्यमेव मनीषिणः ॥
उच्छिष्टमितरस्त्रीणां योऽश्नीयाद् ब्राह्मणः क्वचित्।
प्रायश्चित्ती स विज्ञेयः संकीर्णो मूढचेतनः ॥ "

इति **आङ्गिरसात्**। सवर्णयापि सह विवाहमार्गे एव;

" ब्राह्मण्या भार्यया सार्धं क्वचिद् भुञ्जीत चाध्वनि।
असवर्णस्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् ॥ "

इति **ब्राह्मात्**। क्वचित् विवाहे। भार्येत्युपलक्षणम्;

"माता वा भगिनी वापि भार्या वान्याश्च योषितः ।
[1]नैताभिः सह भोक्तव्यं भुक्त्वा सांतपनं चरेत् ॥"

इति **व्यासस्मरणात्** । सार्धमिति दर्शनोपलक्षणं वक्ष्यति । नाकाशे ; आकाशम् अनावृतप्रदेशः, अन्तरिक्षं वा, तत्र । भोजनानुवृत्तौ **आश्वलायनः**—"शूद्राद्यैः प्रेक्षितश्चेक्षन्नान्तरिक्षे जपेन्मनून्" इति । **आपस्तम्बोऽपि**—"न नावि भुञ्जीत तथा[2] प्रासादे" इति । न तथोत्थितः ; उत्थितः तिष्ठन् । तथाशब्दार्थः **स्मृत्यन्तरे**—"नाहारमुपभुञ्जीत तिष्ठन् गच्छन् हसन्नपि" इति । बहूनामिति ; बहुषु साभिलाषं प्रेक्षमाणेषु नाश्नीयात् ; "नैकवस्त्रो द्रष्टृमध्ये" इति **ब्राह्मात्** । नैकस्मिन् प्रेक्षमाणे बहवोऽश्नीयुः, किंतु तमपि भोजयेयुः ; "पुनः प्रदायेक्षमाणेभ्यः" इति **हारीतात्** ॥ ४६ ॥

**शून्यालये वह्निगृहे देवागारे कथंचन ।**
**पिबेन्नाञ्जलिना तोयं नातिसौहित्यमाचरेत् ॥ ४७ ॥**

शून्यं निर्जनं यदालयं गृहं तत्र । वह्नीनां गार्हपत्यादीनां गृहे शालायाम् । देवानां शिवविष्ण्वादीनाम् अगारे पूजास्थाने । कथंचन आपद्गतोऽपि नाश्नीयात् । श्मशानाद्युपलक्षणमेतत् । तोयं पेयमात्रोपलक्षणम् ; "पेयं नाञ्जलिना पिबेत्" इति **शङ्खस्मरणात्** । अतिशयेन सौहित्यं तृप्तिं च न कुर्यात ; अजीर्णहेतुत्वात् ॥ ४७ ॥

**न तृतीयमथाश्नीत न चापथ्यं कथंचन ।**
**नातिप्रगे नातिसायं [3]न सायं प्रातराशितः ॥ ४८ ॥**

"सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत" इति **गौतमोक्त**कालद्वयातिरिक्ते तृतीये काले नाश्नीयात् । अथशब्दो निषेधातिरिक्तं काम्यविधानमपि गमयति ;

"अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी भवति यो न भुङ्क्ते कदाचन ॥"

इति **बोधायनीये** सदोपवासफलश्रवणात् । अपथ्यं वाताद्युत्पादकमन्नम् । कथंचन ; तद्रसलोलुपतयापि । अतिप्रगे ; अनुदितार्के । अतिसायम् ; अस्तमयसमीपे च नाश्नीयात् । अनेन पृथङ्निषेधेन 'न संध्ययोः' इत्यत्र

"उदयात् प्राक्तनी संध्या घटिकात्रयमिष्यते ।
सायं संध्या त्रिघटिका अस्तादुपरि भास्वतः ॥"

[1] न ताभिः—ग, [2] तथा omitted in घ. [3] प्रातराशी सदा नरः—घ

इति काले विषयीकृतः। द्वितीयभोजनापवादमाह। प्रातराशितः प्रातर्भोजनेनैवातितृप्तः सायं नाश्नीयात् ॥४८॥

**न भावदुष्टमश्नीयान्न भाण्डे भावदूषिते।**
**शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ॥ ४९ ॥**

**इति [1]श्रीविष्णुस्मृतौ अष्टषष्टितमोऽध्यायः**

यस्मिन् दृष्टे विचिकित्सा भवति, तद्भावदुष्टम्। तच्च जातिदुष्टादेरुपलक्षणम्;

"जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम्।
संसर्गतश्च यद् दुष्टं सहृल्लेखं स्वभावतः ॥"

इति **भविष्यात्**। तल्लक्षणान्यपि **तत्रैव**—

"लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च।
वृन्ताकनालिकालाबु ह्यवेयाज्जातिदूषितम् ॥"

इति। हिशब्दात् सन्धिनीक्षीरादि। "न भक्षयेत् क्रियादुष्टं यद् दृष्टं पतितैः पृथक्" इति। पुनःपाकहस्तदानादिक्रियया वा दुष्टम्। "कालदुष्टं तु विज्ञेयं ह्यस्तनं चिरसंस्थितम्" इति। ह्यस्तनं पर्युषितं पक्वमोदनादि। चिरसंस्थितम् अपक्वमपि काञ्जिकादि।

"सुरालशुनसंस्पृष्टं पीयूषादिसमन्वितम्।
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत्।
अभोज्यान्नं विजानीयादन्नमाश्रयगर्हितम् ॥"

इति। अभोज्याः कदर्यलुब्धादयः।

"विचिकित्सा तु हृदये अन्ने यस्मिन् प्रजायते।
सहृल्लेखं तु तज्ज्ञेयं पीयूषं तु स्वभावतः ॥"

इति। इदमेव भावदुष्टं पीयूषादि। एवं सप्तविधमभोज्यं भावेन चित्तवृत्त्या दूषितम्। म्लेच्छादिभाण्डसदृशे दुर्ब्राह्मणादिभोजनदुष्टे च भाण्डे; "न भिन्नावकीर्णे" इति **हारीतात्**। शयानः भूमावपि तिर्यग्भूतः; शयनगतस्य प्रागेव निषेधात्। प्रौढपादः आसनारूढपादः। अवसक्थिका आसनबन्धः; तद्वांश्च नाश्नी-

[1] विष्णुस्मृतौ भोजनविधिनिषेधप्रकरणमष्टषष्टितमम्—ज.

यादिति प्रत्येकं संबध्यते[1]। चकारात् प्रसारितपादोऽपि; "न प्रसारितपादोऽपि पादारोपितपाणिमान्" इति म्राम्नात् ॥ ४९ ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[3]श्रीरामपण्डितात्मज-[3]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
अष्टषष्टितमोऽध्यायः

1 संबध्यः—ख, ग.
2 श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामष्टषष्टितमोऽध्यायः—ग.
3 श्री omitted in ग.

## एकोनसप्ततितमोऽध्यायः

**नाष्टमीचतुर्दशीपञ्चदशीषु स्त्रियमुपेयात् ॥ १ ॥**

एवं दिनकर्तव्यमुक्त्वा रात्रिकृत्ये स्त्रीसंगमे निषेधविषयमेकोनसप्ततितमेनाह । "ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्जम्" इति **गौतमोक्त्या** ऋतौ अनृतौ वा यदा स्त्रियं गच्छेत्, तदा अष्टमीचतुर्दशी-पौर्णमास्यमावास्या वर्जयेत्;

"अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥"

इति **मानवात्** । अपिशब्दात् अनृतौ । स्नातको गृहस्थः; स्नातकधर्माणां गृहस्थसाधारण्यात् । उपलक्षणमिदं संक्रान्त्यादेरपि;

"अष्टम्यां च चतुर्दश्यां पञ्चदश्यां त्रिजन्मसु ।
व्यतीपाते च संक्रान्त्यां नोपेयाज्जातु योषितम् ॥"

इति **आश्वलायनस्मरणात्** ॥ १ ॥

**न श्राद्धं भुक्त्वा ॥ २ ॥ न दत्त्वा ॥ ३ ॥ नोपनिमन्त्रितः श्राद्धे ॥ ४ ॥ न व्रती ॥ ५ ॥ न दीक्षितः ॥ ६ ॥**

श्राद्धभोजनानन्तरम् ॥ २ ॥ श्राद्धकरणानन्तरम् ॥ ३ ॥ श्राद्धे निमन्त्रणस्वीकारानन्तरम् । उपशब्देन पूर्वेद्युस्तनमेव निमन्त्रणं गृह्यते, न कालान्तरीयम्; "निमन्त्रयीत पूर्वेद्युर्ब्राह्मणानात्मवाञ्छुचिः" इति **स्मरणात्** ॥ ४ ॥ व्रतं श्राद्धदिनात् पूर्वेद्युस्तनमेकादश्यादिकं च । तद्वान्;

"श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वापि निमन्त्रितः ।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥"

इति **आश्वलायनस्मरणात्** । उपोष्य; एकादश्याद्युपवासनियमं कृत्वा । भुक्त्वा; पारणं कृत्वा[1] ॥ ५ ॥ दीक्षितः; अवभृथेष्टिं यावत् दीक्षासंस्कारवान् ॥ ६ ॥

[1] कृत्वा omitted in ग.

**न देवायतनश्मशानशून्यालयेषु ॥ ७ ॥ न वृक्षमूलेषु ॥ ८ ॥ न दिवा ॥ ९ ॥ न संध्ययोः ॥ १० ॥ न मलिनाम् ॥ ११ ॥ न मलिनः ॥ १२ ॥ नाभ्यक्ताम् ॥ १३ ॥ नाभ्यक्तः ॥ १४ ॥ न रोगार्ताम् ॥ १५ ॥ न रोगार्तः ॥ १६ ॥**

देवगृहपितृवनशून्यगृहेषु ॥ ७ ॥ विशेषाविवक्षया वृक्षमात्रमूले। बहुवचनात् गुल्मलतादिग्रहणम् ॥ ८ ॥ दिवा; सूर्योपलक्षिते काले ॥ ९ ॥ संध्ययोः; उक्तलक्षणयोः सायंप्रातःसंध्ययोः ॥ १० ॥ मलिनां मलिनाङ्गवस्त्राम्; "न मलिनवाससा सह संवसेत्" इति **वासिष्ठात्**। रजस्वलोपलक्षणमिदम्; "न रजस्वलया" इति तस्यैव स्मरणात् ॥ ११ ॥ मलिनः अपरिष्कृताङ्गवस्त्रः ॥ १२ ॥ अभ्यक्तां तैलाद्यभ्यज्यास्नाताम् ॥ १३ ॥ अभ्यक्तः तैलादिभिरभ्यक्तोऽस्नातः ॥ १४ ॥ रोगार्ताम्; रोगेण ज्वरादिना दुःखिताम्; "नाकल्यां नारीमभिरमयेत्" इति **गौतमीयात्**। अकल्या अस्वस्था ॥ १५ ॥ रोगार्तः ज्वराद्यभिभूतः; "ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति" इति स्वस्थस्यैवोपदेशात् ॥ १६ ॥

**न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम्।**
**नोपेयाद् [1]गुर्विणीं नारीं दीर्घमायुर्जिजीविषुः ॥ १७ ॥**

**इति [2]श्रीविष्णुस्मृतौ एकोनसप्ततितमोऽध्यायः**

जन्मत एव हीनं हस्तपादाङ्गुल्यादि[3] यस्यास्ताम्। तथैव अधिकमङ्गम् अङ्गुल्यादि यस्यास्ताम्। स्वापेक्षया वयसाधिकां, वृद्धां वा। अपगतरजस्कां वा। गुर्विणीं गर्भिणीं च दीर्घायुष्कामो नोपेयात्। **आश्वलायनोऽपि**—

"नोपेयादात्मनो भार्यामसतीं च बहुप्रजाम्।
स्त्रीप्रजाबहुलां वन्ध्यां द्वेषिणीं च रजस्वलाम् ॥
कृशां विवर्णां नोपेयात् गतप्रत्यागतामपि।
पतितां च परित्यक्तामभिशस्तां च रोगिणीम्।
क्षुत्क्षामां नातिभुक्तां वा स्वयं चैतैर्गुणैर्युतः ॥"

इति। गर्भिणीं सप्तमासादूर्ध्वम्;

"क्षौरं च तीर्थयात्रां च श्राद्धभोजनमैथुने।
मासात्तु सप्तमादूर्ध्वं वर्जयेद् गुर्विणीपतिः[4] ॥"

[1] गर्भिणीम्—ज.
[2] वैष्णवे धर्मशास्त्रे स्त्रीप्रयोगप्रकरणमेकोनसप्ततितमम्—ज.
[3] पादाद्यङ्गुल्यादि—क.
[4] गर्भिणीपतिः—ग.

इति **यमस्मरणात्**। हीनाङ्ग्यादिविवाहनिषेधेनैव गमननिषेधसिद्धौ पुनर्वचनमतिक्रान्तनिषेधस्योद्वाहेऽपि विवाहानन्तरमपि वा हीनाङ्गत्वादौ गमननिषेधार्थम्। यथाह **आश्वलायनः**—"पत्नीमप्यनृतौ नेयादियःद्वाभ्यर्थितस्तया" इति। गमनकालमप्याह **स** एव—

"पत्नीमृतुमतीं स्नातां तृप्तां रोगविवर्जिताम्।
उपेयान्मध्यरात्रान्ते जीर्णेऽन्ने तृप्तमानसः॥"

इति॥ १७॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डिता**त्मज-[2]**श्रीनन्दपण्डित**कृतौ **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्याम्**
एकोनसप्ततितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामेकोनसप्ततितमोऽध्यायः—घ, च.
[2] श्री omitted in ग.

# सप्ततितमोऽध्यायः

**नार्द्रपादः सुप्यात् ॥ १ ॥ नोत्तरापरशिराः ॥ २ ॥ न नग्नः ॥ ३ ॥ नानुवंशम् ॥ ४ ॥ नाकाशे ॥ ५ ॥ न पालाशे शयने ॥ ६ ॥**

शयने निषेधविषयं सप्ततितमाध्यायेनाह । " सुप्रक्षालितचरणः स्वाचान्तः सुप्यात् " इति **हारीतोक्त**चरणक्षालनोत्तरमार्द्रताप्राप्तावनार्द्रपादतोच्यते । " नार्द्रवासा न चाशुचिः " इति **मार्कण्डेयः** । " न तैलाभ्यक्तशिराः " इति **उशना** । स्वपेदिति शेषः ॥ १ ॥ अपरा पश्चिमा ; " न तिर्यगुदक्प्रत्यक्शिराः " इति **हारीतात्** । तिर्यक् कोणः । प्राग्दक्षिणयोरभ्यनुज्ञानमनेन ; " प्राग्दक्षिणशिराः सुप्यान्नोदक्प्रत्यक्शिराः क्वचित् " इति **स्मरणात्** । तस्य व्यवस्था—

" स्वगृहे प्राक्शिराः सुप्याच्छ्वायुष्ये दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः ॥ "

इति **गार्गीयात्** ॥ २ ॥ नग्नः परिधानहीनः । नग्नस्य स्वापनिषेधात् स्वापानन्तरं निद्रया नग्नतायां न दोषः । **आश्वलायनः**—" उत्तानवक्षा न शयेन्नाधोवक्षाश्च कर्हिचित् " इति ॥ ३ ॥ वंशः मेढी । तद्दैर्घ्यमनु ॥ ४ ॥ आकाशः अनाच्छन्नो देशः ॥ ५ ॥ पालाशो ब्रह्मतरुः । **च्यवनः**—" मृतदन्तमये विद्युद्दग्धे दर्भे पलाशजे न शयीत " इति । मृतस्य दन्तिनो दन्तेन कृतः । अनेन " न च दन्तमयीं शय्यामधितिष्ठेदनास्तृताम् " इति व्याख्यातम् ॥ ६ ॥

**न पञ्चदारुकृते ॥ ७ ॥ न [1]गजभग्नकृते ॥ ८ ॥ न विद्युद्दग्धकृते ॥ ९ ॥ न भिन्ने ॥ १० ॥ नाग्निपृष्ठे ॥ ११ ॥ न घटासिक्तद्रुमजे ॥ १२ ॥**

पञ्चभिर्दारुभिः कृते एकस्मिन् शयने । अन्ये तु पञ्च दारूणि

" पञ्च दारूणि चोक्तानि चूतजम्बूद्रुमास्तथा ।
अश्मपीठोत्थितांश्चैव घटसिक्ततरूंस्तथा ।
करिभग्नकृते चैव न शयीत कश्चिन्नरः ॥ "

1 गजभङ्ग—ज.

इति विष्णुपुराणोक्तान्याहुः। वक्ष्यमाणानि पञ्च दारूणीत्यपरे ॥ ७ ॥ गजेन भग्नस्य तरोः काष्ठेन कृते ॥ ८ ॥ विद्युता दग्धस्य तरोः काष्ठेन कृते ॥ ९ ॥ भिन्ने शीर्णादियवे; "न शीर्णखट्वायाम्" इति [1]पैठीनसिस्मरणात् ॥ १० ॥ विद्युद्भिन्नेनाप्यग्निना दग्धे ॥ ११ ॥ घटैः आ सर्वदा सिक्तस्य तरोः काष्ठेन कृते ॥ १२ ॥

**न श्मशानशून्यालयदेवतायतनेषु ॥ १३ ॥ न चपलमध्ये ॥ १४ ॥ न नारीमध्ये ॥ १५ ॥ न धान्यगोगुरुहुताशनसुराणामुपरि ॥ १६ ॥**

पितृवनशून्यगृहदेवगृहेषु। **मार्कण्डेयः**—

"शून्यालये श्मशाने च नैकवृक्षे चतुष्पथे।
महादेवगृहे वापि मातृवेश्मनि न स्वपेत्।
न यक्षनागायतने स्कन्दस्यायतने तथा॥"

इति ॥ १३ ॥ चपलो दुर्व्यसनी; हस्तपादादिविक्षेप्ता वा ॥ १४ ॥ नार्यः स्त्रियः;

"मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥"

इति **मानवात्** ॥ १५ ॥ धान्यं व्रीह्यादिः। गवादिशब्देन तच्छाला उच्यते; धान्यवत् साक्षात् तदुपरि शयनासंभवात्। तेषामुपरि। **मार्कण्डेयः**—

"कूलच्छायासु च तथा शर्करालोष्टपांसुषु।
धान्यगोविप्रदेवानां गुरूणां च तथोपरि॥"

इति। यद्वा धान्यादीन् पादप्रदेशे कृत्वा न शयीतेत्युपरिशब्दार्थः ॥ १६ ॥

**नोच्छिष्टो न दिवा सुप्यात् संध्ययोर्न च भस्मनि।**
**देशे न चाशुचौ नार्द्रे न च पर्वतमस्तके ॥ १७ ॥**

**इति [2]श्रीविष्णुस्मृतौ सप्ततितमोऽध्यायः**

[1] पैठीनसीयात्—ग.

[2] वैष्णवे धर्मशास्त्रे स्वापविधिप्रकरणं सप्ततितमम्—ज.

उच्छिष्टः ऊर्ध्वाधरोच्छिष्टवान्। दिवसे, संध्ययोः उक्तलक्षणयोः, भस्मनि रक्षादौ; "केशभस्मतुषाङ्गारकपालेषु च संस्थितिम्" इति योगिस्मरणात्। अशुचौ मूत्रविष्ठाद्युपहते देशे, आर्द्रे जलप्राये, पर्वतस्य मस्तके शिरोभागे। चकारात् नान्यपूर्वे शयने। "नाश्मपीठोपधाने। नादीक्षितः कृष्णचर्मणि लुप्यात्" इति पैठीनसीयं ज्ञेयम्॥ १७॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-
[2]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
सप्ततितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ सप्ततितमोऽध्यायः—घ, न.

[2] श्री omitted in ग.

## एकसप्ततितमोऽध्यायः

**अथ न कंचनावमन्येत ॥ १ ॥**

एवं गृहस्थधर्मानुक्त्वा इदानीं स्नातकधर्मान् एकसप्ततितमाध्यायेनाह । स्नातकधर्माणामपि केषांचित् गृहस्थादिसाधारण्यमानन्तर्येण स्पष्टयितुमथशब्दः । ते च द्विजानामेव ; न शूद्रस्य ; **मानवे** " चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः " इत्युपक्रम्य " स्नातको द्विजः, व्रतानीमानि धारयेत् " इत्युपसंहारात् । ब्राह्मणक्षत्रिययोरेवेत्येके ; " स विधिपूर्वं स्नात्वा " इति **गौतमीये** तच्छब्देन तयोरेव परामर्शात् । तेन तयोरेव तल्लोपे प्रायश्चित्तम् ;

" स्नातकव्रतलोपे तु प्रायश्चित्तं विधीयते ।
राजब्राह्मणयोरेव नेतरेषां कथंचन ॥ "

इति **स्मरणात्** । ब्राह्मणस्यैवेत्यन्ये ; **मानवे** " विप्रो जीवेदनापदि " इत्युपक्रमात् । कंचन ; सममुत्कृष्टमपकृष्टं वा नावजानीयात् । नायं निषेधः ; " तस्य व्रतम् " इति श्रुतौ व्रतोपक्रमात् । किंतु पर्युदासः । ततश्चास्मिन् प्रकरणे सर्वेष्वपि नञ्युक्तेषु वाक्येषु तत्तदकरणसंकल्पा लक्षणीयाः । ते चोभयसाधारणाः ; " गृहस्थ इमान् धर्माननुवर्तेत, स्नातकश्च " इति **गौतमीयात्** ॥ १ ॥

**न च [1]हीनाधिकाङ्गान् मूर्खान्[2] धनहीनानवहसेत् ॥ २ ॥**

हीनाङ्गाः काणादयः । अधिकाङ्गाः षडङ्गुल्यादयः । मूर्खाः वेदशास्त्राद्यनभिज्ञाः । धनहीनाः दरिद्राः । चकारात् रूपहीनादींश्च नावहसेत् । अवहासः अवक्षेपः ;

" हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान् ।
रूपद्रविणहीनांश्च [3]जातिहीनांश्च नाक्षिपेत् ॥ "

इति **मानवात्** ॥ २ ॥

**न हीनान् सेवेत ॥ ३ ॥ स्वाध्यायविरोधि कर्म नाचरेत् ॥ ४ ॥**

[1] हीनाधिकाङ्गमूर्खधनहीनान्—ठ. [2] मूर्खान् omitted in ज. [3] ज्ञाति—च.

हीनाः स्वापेक्षया हीनजात्यादयः; तान् न सेवेत। वेतनग्रहणेन तदाज्ञाकरणं सेवा; "वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः" इति **योगिस्मरणात्** ॥ ३ ॥ स्वाध्यायः वेदाध्ययनाध्यापनक्रिया। तद्विरोधि कृषिलोकयात्राद्यर्थसाधनमपि कर्म नाचरेत्,

"सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः।
यथा तथाध्यापयंस्तु सा तस्य कृतकृत्यता ॥"

इति **मानवात्** ॥ ४ ॥

**वयोऽनुरूपं वेषं कुर्यात् ॥ ५ ॥ श्रुतस्याभिजनस्य धनस्य देशस्य च ॥ ६ ॥**

वयसः बाल्यवार्धकादेः अनुरूपो यो वेषः उष्णीषादिः, तं कुर्यात्। एतेन बालस्य वृद्धवेषः, वृद्धस्य बालवेषो वा न भवति ॥ ५ ॥ श्रुतं विद्या। अभिजनः कुलम्। धनं सुवर्णादि। देशो जनपदः। चकारात् बुद्ध्यादि। एषामनुरूपं वेषमाचरेत्; "वेषवाग्बुद्धिसारूप्यमाचरन् विचरेदिह" इति **मानवात्**;

"वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम्।
आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथा ॥"

इति **योगिस्मरणाच्च**। वृत्तिराचरणम् ॥ ६ ॥

**नोद्धतः[1] ॥ ७ ॥ नित्यं [2]शास्त्राद्यवेक्षी स्यात् ॥ ८ ॥**

उद्धतः निर्मर्यादो न स्यात् ॥ ७ ॥ शास्यते धर्मो यैस्तानि स्मृतिमीमांसादीनि। आदिशब्दात् धनबुद्ध्यारोग्यादिप्रतिपादकानि च। तेषां नित्यमेवेक्षणशीलः स्यात्। यथाह **मनुः**—

"बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥"

इति ॥ ८ ॥

**सति विभवे न जीर्णमलवद्वासाः स्यात् ॥ ९ ॥ न नास्तीत्यभिभाषेत ॥ १० ॥ न निर्गन्धोग्रगन्धि रक्तं च माल्यं बिभृयात् ॥ ११ ॥ बिभृयाज्जलजं रक्तमपि ॥ १२ ॥**

[1] नोद्धतम्—ठ.

[2] शास्त्रावेक्षी—ज

विभवः धनम्। तस्मिन् सति जीर्णं विशीर्णं मलिनं च वस्त्रं न धारयेत्। विभवविशेषणेन दरिद्रस्य न दोषः ॥ ९ ॥ गृहे इन्धनाद्यभावेऽपि नास्तिशब्दं नोच्चारयेत्। किंतु पूर्णमिति ब्रूयात् ॥ १० ॥ निर्गन्धं कर्णिकारादि। उग्रगन्धि धत्तूरादि। रक्तं करवीरादि। चकारात् [1]कण्टकिजं च माल्यं न धारयेत्। 'न कण्टकिजम्' इति प्राक् निषेधात्[2]। माल्योपादानात् सुवर्णस्रगाद्यनिषेधः; "नागन्धां स्रजं धारयेदन्यत्र हिरण्यस्रजः" इति **गोभिलीयात्**[3] ॥ ११ ॥ अस्य प्रतिप्रसवमाह। रक्तोत्पलं तु धारयेत् ॥ १२ ॥

**यष्टिं च वैणवीम् ॥ १३ ॥ कमण्डलुं च सोदकम् ॥ १४ ॥ कार्पासमुपवीतम् ॥ १५ ॥ रौक्मे च कुण्डले ॥ १६ ॥**

वंशनिर्मितां यष्टिमाधारयोग्याम्। चकारादन्तर्वासश्च। अन्तः उत्तराधरीययोर्मध्ये वस्यत इति अन्तर्वासः। तथान्यदुत्तरीयं प्रावारः; "अथ स्नातकः सान्तर्वासाः सोत्तरीयं वैणवं दण्डं धारयन्" इति **बोधायनीयात्**। एवं च वस्त्रत्रयधारणं नित्यं भवति। इतोऽधिके वस्त्रे बहुवस्त्रता। जीवत्पितृकस्य तु,

"पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणम्।
न जीवत्पितृकः कुर्याज्ज्येष्ठभ्रातर्यथापि वा ॥"

इत्युत्तरीयमेव निषिद्धम्। नान्तर्वासः ॥ १३ ॥ कमण्डलुः मृन्मयः करकः, तम्; "सोदकं च कमण्डलुम्" इति **मनुस्मरणात्** ॥ १४ ॥ कार्पासवचनं शाणाविक्योर्निवृत्त्यर्थम्। तेनौपनायनिकयोः शाणाविक्योः यावत्स्नानमेव धारणं सिध्यति, नोपरिष्टात्; स्नातकस्य कार्पासनियमात्। तयोश्च तत्तद्दण्डाजिनादिसाहचर्यनियमेन ब्रह्मचारिमात्रधर्मत्वाच्च। अत एव **योगीश्वरः**—"दण्डाजिनोपवीतानि मेखलां चैव धारयेत्" इति ब्रह्मचारिण एव तत्तद्दण्डादिनियममाह[4]। न च ब्राह्मणमात्राभिप्रायेण[5] कार्पासवचनम्; उपनयनप्रकरणोक्तकार्पासवचनेन पौनरुक्त्यापत्तेः। तस्मात् यथोक्तमेव साधु। उपवीतमुष्णीषाद्युपलक्षणम्; "यज्ञोपवीती उष्णीषमजिनमुत्तरीयमुपानहौ[6] छत्रं च" इति **बोधायनीयात्**। अजिनमुत्तरीयं वस्त्राभावे ॥ १५ ॥ रौक्मे सौवर्णे; "शुभे रौक्मे च कुण्डले" इति **मानवात्**। चकारात् वेदं च। वेदो दर्भमुष्टिः। बिभृयादिति सर्वत्रानुवर्तते ॥ १६ ॥

**नादित्यमुद्यन्तमीक्षेत ॥ १७ ॥ नास्तं यान्तम्[7] ॥ १८ ॥ न वाससा तिरोहितम् ॥ १९ ॥ न चादर्शजलमध्यस्थम्[8] ॥ २० ॥ न मध्याह्ने ॥ २१ ॥**

[1] कण्टकितं—ज. [2] प्रतिषेधात्—ज. [3] गौतमीयात्—घ.
[4] धारणनियममाह—ख, ग. [5] भिप्रायं—ख, ग. [6] उपानच्छत्रं च—घ.
[7] नोपरक्तम् added in ठ. [8] जलाद्युपगतम्—ज, ठ.

उद्यन्तमादित्यं[1] न पश्येत्। आदित्यग्रहणात् चन्द्राद्यनिषेधः ॥ १७ ॥ अस्तमयेऽपि आदित्यं नेक्षेतेति सर्वत्र संबन्धः ॥ १८ ॥ वस्त्रान्तरितमपि ॥ १९ ॥ जलादर्शयोः प्रतिबिम्बितम्। चकारात् उपरक्तमपि। "नोपरक्तं न वारिस्थम्" इति **मानवात्** ॥ २० ॥ मध्याह्नः कुतपः ॥ २१ ॥

**न क्रुद्धस्य गुरोर्मुखम् ॥ २२ ॥ न तैलोदकयोः [2]स्वां छायाम् ॥ २३ ॥ न मलवत्यादर्शे ॥ २४ ॥**

क्रुद्धः क्रोधाक्रान्तः गुरुः श्रेयान्; "न श्रेयसः क्रुद्धस्य" इति **प्राचेतसात्** ॥ २२ ॥ तैले जले च स्वप्रतिबिम्बम्। **वैद्यकेऽपि** "तैले जले स्वे मूत्रे वा नेक्षेत स्नपनं सुधीः" इति। तैलग्रहणात् घृतानिषेधः; "स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीवितम्" इति **ब्राह्मात्** ॥ २३ ॥ मलाक्रान्ते दर्पणे ॥ २४ ॥

**[3]न पत्नीं भोजनसमये ॥ २५ ॥ [4]न स्त्रियं नग्नाम् ॥ २६ ॥**

स्वस्य पत्न्या वा भोजनकाले पत्नीं न पश्येत्; "न भार्यादर्शनेऽश्नीयात्" इति **योगिस्मरणात्**;

"नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम्।
क्षुवन्तीं जृम्भमाणां च न चासीनां यथासुखम् ॥
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम्।
प्रसवन्तीं च नेक्षेत तेजस्कामो द्विजोत्तमः ॥"

इति **मानवाच्च** ॥ २५ ॥ स्वीयां परकीयां वा नग्नां स्त्रियम्। स्त्रीग्रहणं पत्नीव्यावृत्त्या जातिमात्रप्राप्त्यर्थम्। "न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात्[5]" इति **आश्वलायनीयात्**। कृतमैथुनामनग्नामपि; "न च संसृष्टमैथुनाम्" इति **स्मरणात्**। नग्नदर्शनं च न प्रातः;

"पापिष्ठं दुर्भगं मद्यं नग्नमुत्कृत्तनासिकम्।
प्रातरुत्थाय यः पश्येत् तत्कलेरुपलक्षणम् ॥"

इति **कात्यायनीयात्** ॥ २६ ॥

**न कंचन मेहमानम् ॥ २७ ॥ न चालानभ्रष्टं कुञ्जरम् ॥ २८ ॥**

[1] अर्कं—ख, ग.
[2] स्वच्छायाम्—घ.
[3] Sūtras 25 and 26 are read in inverted order in ज.
[4] न नग्नां स्त्रियम्—ठ.
[5] मैथुनं विना—ख, ग, घ, च.

मूत्रपुरीषे कुर्वाणं यं कंचन। मूत्रपुरीषे च; "न च मूत्रपुरीषं च" इति स्मरणात् ॥ २७ ॥ बन्धनच्युतं गजम्। चकारात् व्याघ्रादींश्च;

"न व्याघ्रं न गजं नाश्वं न वृषं महिषं तथा।
बन्धनात् प्रतिमुक्तं न वीक्षितं पुरतो व्रजेत् ॥"

इति ब्राह्मात् ॥ २८ ॥

**न [1]च विषमस्थो वृषादियुद्धम् ॥ २९ ॥ नोन्मत्तम् ॥ ३० ॥ न मत्तम् ॥ ३१ ॥**

विषमे जनसंमर्दादौ पलायनायोग्ये देशे स्थितः वृषगजमहिषादियुद्धम्। चकारात् शरशक्त्यादिपातं च ॥ २९ ॥ उन्मत्तो वातादिग्रस्तः ॥ ३० ॥ मत्तो मद्यादिना ॥ ३१ ॥

**नामेध्यमग्नौ प्रक्षिपेत् ॥ ३२ ॥ नासृक् ॥ ३३ ॥ न विषम् ॥ ३४ ॥ अम्भस्यपि ॥ ३५ ॥**

अमेध्यं ष्ठीवनादि अग्नौ ज्ञानपूर्वं न प्रक्षिपेत्। अमेध्यनिषेधात् तल्लिप्तस्यापि निषेधः; "अमेध्यलिप्तमन्यद्वा" इति मानवात् ॥ ३२ ॥ असृक् रक्तम्। अमेध्यात् पृथग्वचनं मेध्यस्यापि छागादिरुधिरस्य निषेधार्थम् ॥ ३३ ॥ विषं वत्सनाभादि नाग्नौ प्रक्षिपेत् इति प्रत्येकं संबन्धः ॥ ३४ ॥ अमेध्यादि अम्भस्यपि न प्रक्षिपेत्। यथाह **योगीश्वरः**—"ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत्" इति। **शङ्खोऽपि**—"तुषकेशकरीषभस्मास्थिश्लेष्मनखलोमान्यप्सु न [2]निक्षिपेत्। न पादेन पाणिना वा जलमभिहन्यात्" इति ॥ ३५ ॥

**नाग्निं लङ्घयेत् ॥ ३६ ॥ न पादौ प्रतापयेत् ॥ ३७ ॥ न कुशेषु परिमृज्यात् ॥ ३८ ॥ न कांस्यभाजने धावयेत् ॥ ३९ ॥ न पादं पादेन ॥ ४० ॥**

लङ्घनम् उपरिष्टात् गमनम्। देवादिच्छायामपि;

"देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा।
नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च ॥"

[1] चाति—ठ. [2] क्षिपेत्—ग.

इति **मानवात्** । बभ्रुः नकुलः । नपुंसकनिर्देशात् गोब्राह्मणयोरपि कपिलयोः ; " न गोब्राह्मणयोः कपिलयोः " इति **स्मरणात्** । छायालङ्घननिषेधात् लङ्घनं निषिद्धमेव । मुखेऽपधमनाद्यपि वर्ज्यम् ;

" नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥
अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् ।
न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेत् ॥ "

इति **मानवात्** ॥ ३६ ॥ अमाविति शेषः । प्रकर्षः सुखातिशयः । प्रचयशिष्टेयं संख्या नावच्छेदिका ॥ ३७ ॥ कुशैः कुशेषु वा पादतलं न शोधयेत् ॥ ३८ ॥ कांस्यपात्रे अभोजनीयेऽपि पादौ न प्रक्षालयेत् । स्वार्थे णिच् । स्वनिषेधात् प्रयोजकतापि निषिध्यते ॥ ३९ ॥ धावयेत् ॥ ४० ॥

**न भुवमालिखेत् ॥ ४१ ॥ न लोष्टमर्दी स्यात् ॥ ४२ ॥ न तृणच्छेदी स्यात्[1] ॥ ४३ ॥ न दन्तैर्नखलोमानि छिन्द्यात् ॥ ४४ ॥**

काष्ठादिभिः ॥ ४१ ॥ करेण मृत्पिण्डमर्दनशीलो न स्यात् ॥ ४२ ॥ नखदन्तादिभिस्तृणच्छेदनशीलो न स्यात् । पुनः स्याद्वचनं निष्फलकर्मवर्जनार्थम् ; " न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम् " इति **मानवात्** ॥ ४३ ॥ नखान् करपादजान्, लोमानि श्मश्र्वादीनि, दन्तैर्न छिन्द्यात् ; नोत्पाटयेच्च ; " न छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान् " इति **मानवात्** । तेन कर्तनमभ्यनुज्ञायते ; " क्लृप्तकेशनखश्मश्रुः " इति **मानवात्** । न मुण्डनम् ; " न समावृत्ता मुण्डेरन्नन्यत्र विहारात् " इति **आपस्तम्बीयात्** । विहारो दर्शादिः ; " औपासनो दर्शपूर्णमासौ पर्वसु च केशश्मश्रुलोमनखवापनम् " इति **बोधायनीयात्** । औपासनः स्मार्ताग्निमान् । दर्शपूर्णमासौ च कुर्वाणः श्रौताग्निमान् । तावुभावपि पर्वसु केशादिवापनं कुर्यातामिति ॥ ४४ ॥

**द्यूतं च वर्जयेत् ॥ ४५ ॥ [2]बालातपसेवां च ॥ ४६ ॥ वस्त्रोपानहमाल्योपवीतान्यन्यधृतानि न धारयेत् ॥ ४७ ॥**

द्यूतं पणपूर्विका क्रीडा । प्राणिभिरप्राणिभिर्वा तां वर्जयेत् ॥ ४५ ॥ बालातपः प्रातरातपः । संगवातप इत्यन्ये । शारदातप इत्यपरे । तत्सेवां वर्जयेत् । चकारात् प्रेतधूमादि च ; " बालातपः प्रेतधूमो वर्ज्यं भिन्नं तथासनम् " इति **मानवात्** ॥ ४६ ॥ वस्त्रादीनि गुरोरन्येन धृतानि न धार्याणि ; " उच्छिष्टमगुरोः " इति **वासिष्ठात्** । अलंकारकरकावपि ; " उपवीतमलंकारं स्रजं करकमेव च " इति **मानवात्** । अन्यालाभे तान्यपि प्रक्षाल्य धार्याणि ; " निर्णिज्याशक्तौ " इति **गौतमीयात्** ॥ ४७ ॥

[1] स्यात् omitted in ज, ठ.

[2] न बालातपसेवी स्यात्—ठ.

**न शूद्राय मतिं दद्यात् ॥ ४८ ॥ [1]नोच्छिष्टहविषी ॥ ४९ ॥ न तिलान् ॥ ५० ॥ न चास्योपदिशेद्धर्मम् ॥ ५१ ॥ न व्रतम् ॥ ५२ ॥**

मतिं दृष्टार्थकर्मनीतिविषयां शूद्राय न दद्यात् ॥ ४८ ॥ उच्छिष्टं भुक्तावशिष्टम् । हविः पुरोडाशादिशेषः ; "नेहाब्राह्मणस्य" इति **श्रुतेः** । शूद्रोऽत्र दासव्यतिरिक्तः ; "उच्छिष्टमन्नं दासार्थम्" इति **मानवात्** ; "द्विजोच्छिष्टं च भोजनम्" इति दासधर्माच्च । गृहस्थो वा,

"उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने ।
गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने ॥"

इति **व्याघ्रस्मरणात्** ॥ ४९ ॥ तिलान् श्वेतान् कृष्णांश्च शूद्राय न दद्यात् ॥ ५० ॥ धर्मोपदेशश्च शूद्रस्य न कार्यः । चतुर्थ्यनुवृत्तौ पुनः षष्ठ्युपादानं शूद्रासाधारणधर्मोपदेशवर्जनार्थम् । कथं तर्हि तस्यानुष्ठानम् ? ब्राह्मणेन ब्राह्मणमन्तरा कृत्वोपदिष्टेनेति ॥ ५१ ॥ व्रतं प्रायश्चित्तं साक्षान्नोपदिशेच्छूद्राय । किंतु ब्राह्मणमन्तरा कृत्वा,

"तथा शूद्रं समासाद्य सदा धर्मपथे स्थितम् ।
अन्तरा ब्राह्मणं कृत्वा प्रायश्चित्तं समादिशेत् ॥"

इति **अङ्गिरःस्मरणात्** । व्रतशब्दोपादानात् एकादश्यादिव्रतमपि ग्राह्यम् ;

"यो ह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम् ।
सोऽसंवृतं नाम तमः सह तेनैव मज्जति ॥"

इति **मानवात्** ॥ ५२ ॥

**न संहताभ्यां पाणिभ्यां[2] शिर उदरं च कण्डूयेत् ॥ ५३ ॥**

युगपत् हस्तद्वयेनात्मनो नोदरशिरसोः कण्डूयनं कार्यम् ; "न संहताभ्यां पाणिभ्यां कण्डूयेतात्मनः शिरः" इति **मानवात्** । चकारात् कूर्चस्य च ; "न संहताभ्यां पाणिभ्यां नरः कूर्चमुपस्पृशेत्" इति **ब्राह्मात्** । केशग्रहाद्यपि वर्जयेत् ; "केशग्रहान् प्रहारांश्च सदा शिरसि वर्जयेत" इति **मानवात्** ॥ ५३ ॥

**न दधिसुमनसी प्रत्याचक्षीत ॥ ५४ ॥ नात्मनः स्रजमपकर्षेत् ॥ ५५ ॥**

[1] नोच्छिष्टं न हविष्कृतम्—ज, ठ.

[2] पाणिभ्यां कण्डूयेत—ज.

सुमनसः पुष्पाणि। समासात् कुशादि चोपस्थितं न प्रत्याचक्षीत। यथाह **योगीश्वरः—**

"कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च॥"

इति। "मणीन् दधि" इति **मनुः**। यद्यपि सप्तपञ्चाशत्तमेऽध्याये 'एधोदक' इत्यादिवाक्ये दधिपुष्पयोरप्यप्रत्याख्येयत्वमुक्तमेव, तथापि तत्रास्य गृहस्थधर्मत्वेन स्नातकेष्वप्राप्त्या अत्र पुनर्वचनं युक्तम्। तर्हि अत्रैव तद्वचनमस्तु; स्नातकधर्माणां गृहस्थसाधारण्यादिति चेत्—मैवम्; प्रायश्चित्तार्थमुभयत्र वचनात्। तथाहि गृहस्थप्रकरणोक्तनिषेधातिक्रमस्य प्रकीर्णकत्वेन तत्प्रायश्चित्तं गृहस्थानाम्; स्नातकव्रतलोपे तु अभोजनं स्नातकानामिति उभयत्रवचनमर्थवत्॥ ५४॥ स्वधृतां पुष्पस्रजं नापकर्षयेदित्यन्तर्भावितो ण्यर्थो द्रष्टव्यः। अन्यथा "शीर्ष्णः स्रजमिवोन्मुच्य" इति श्रौतलिङ्गविरोधः स्यात्। तेन नान्यानपनाययेत्। किंतु स्वयमेवापनयेत्। यत्तु "नात्मनोऽपहरेत् स्रजम्" इति **मानवं,** तत्राप्यन्तर्भावितो ण्यर्थो द्रष्टव्यः; अन्यथा "शीर्ष्णः स्रजमिवोन्मुच्य" इति श्रौतलिङ्गविरोधापत्तेः। उपहरेदिति वात्र छेदः। तेनात्मना ग्रथितां स्रजमात्मना नोपहरेत्;

"स्वहस्तलिखितं स्तोत्रं स्वघृष्टमपि चन्दनम्।
स्वहस्तग्रथिता माला शक्रस्यापि श्रियं हरेत्॥"

इति **स्मरणात्**॥ ५५॥

**[1]सुप्तं न प्रबोधयेत्॥ ५६॥ न रक्तं विरागयेत्॥ ५७॥ नोदक्यामभिभाषेत॥ ५८॥ न म्लेच्छान्त्यजान्॥ ५९॥**

स्वापेक्षया विद्यादिभिरधिकं शयानं न प्रबोधयेत्; "श्रेयांसं न प्रबोधयेत्" इति **मानवात्**॥ ५६॥ आत्मन्यनुरक्तं रूक्षभाषणादिभिर्न विरक्तं कुर्यात्। "न च रक्तो विरावयेत्" इति **मनुः**। स्वयं यस्मिन् सानुरागः, तं प्रति न विरुद्धभाषणं कुर्यात्। रक्तानिति वा पाठः। विरावयेदिति वा॥ ५७॥ उदक्या रजस्वला। अभिराभिमुख्ये। तेन तदभिमुखीभूय भाषणनिषेधः, नान्तरितस्य। एवं सूतिकामपि, रजस्वलात्वात्॥ ५८॥ म्लेच्छा यवनादयः। अन्त्यजाः रजकादयः। तानपि साक्षात् न संभाषेत॥ ५९॥

**अग्निदेवब्राह्मणसंनिधौ[2] दक्षिणं पाणिमुद्धरेत्[3]॥ ६०॥**

अग्निः श्रौतः स्मार्तश्च। देवो विष्ण्वादिप्रतिमा। ब्राह्मणो गुर्वादिः। तेषां परिचरणे दक्षिणं बाहुं कण्ठप्रावृतादुत्तरीयात् बहिः कुर्यात्; "गुरुदर्शने कण्ठप्रावृतादि वर्जयेत्" इति **गौतमीयात्**। गोष्ठादिष्वपि;

[1] न सुप्तं प्रतिबोधयेत्—ज, ठ. [2] ब्राह्मणगोसंनिधौ—ज, ठ. [3] बाहुं समुद्धरेत्—ठ.

"अभ्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्॥"

इति **मानवात्**॥ ६०॥

**न परक्षेत्रे चरन्तीं गामाचक्षीत ॥ ६१ ॥ न पिबन्तं वत्सकम्[1] ॥ ६२ ॥ नोद्धतान्[2] प्रहर्षयेत् ॥ ६३ ॥**

परकीये यवादिक्षेत्रे विरूढं धान्यं भक्षयन्तीं गां परस्मै नाचक्षीत। परग्रहणात् स्वीये, गोग्रहणात् महिष्यादि चाचक्षीतेति गम्यते। पिबन्तीं च नाचक्षीत, न वारयेच्च; "न वारयेद्धयन्तीं गां न चाचक्षीत कस्यचित्" इति **मानवात्**॥ ६१॥ परशब्दोऽनुषज्यते। गोस्तन्यं पिबन्तं च वत्सं गोस्वामिने नाचक्षीत॥ ६२॥ उद्धतान् उन्मार्गवर्तिनः तदनुकूलाचरणेन नोत्साहयेत॥ ६३॥

**न शूद्रराज्ये निवसेत् ॥ ६४ ॥ नाधार्मिकजनाकीर्णे ॥ ६५ ॥ [3]न संवसेद्वैद्यहीने ॥ ६६ ॥ नोपसृष्टे ॥ ६७ ॥ न चिरं पर्वते[4] ॥ ६८ ॥**

यत्र शूद्रो राजा, तस्मिन् देशे नात्यन्तं वसेत्। शूद्रग्रहणात् म्लेच्छादिराज्यं दूरापास्तम्॥ ६४॥ अधार्मिकाः धर्मविरोधिनः पाषण्डादयः पतितादयो वा। तत्समूहव्याप्ते राज्ये ग्रामे वा न निवसेत्; "न पाषण्डजनाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः" इति, "नाधार्मिके वसेद् ग्रामे" इति च **मानवात्**॥ ६५॥ वैद्यो भिषक्। तद्रहिते देशे ग्रामे वा न संवसेत्। पुनः क्रियोपादानमन्येषामपि निषेधार्थम्। तथाच **स्मृतिः**—

"धनिकः श्रोत्रियो राजा नदी वैद्यस्तथैव च।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत्॥"

इति॥ ६६॥ उपसृष्टो व्याध्यभिभूतः। तस्मिन् देशे ग्रामे वा न संवसेत्। "न व्याधिबहुले भृशम्" इति **मानवात्**॥ ६७॥ पर्वते विन्ध्यादौ बहुकालम्॥ ६८॥

**न वृथाचेष्टां कुर्यात् ॥ ६९ ॥ न नृत्यगीते ॥ ७० ॥ [5]नास्फोटनम् ॥ ७१ ॥ नाश्लीलं कीर्तयेत् ॥ ७२ ॥ [6]नानृतम् ॥ ७३ ॥ नाप्रियम् ॥ ७४ ॥**

1 वत्सम्—ठ. 2 नोत्पातान्—ठ. 3 न सांवत्सरवैद्यहीने—ठ.
4 न सर्पावृते added in ज, ठ. 5 नास्फोटम्—ठ. 6 Sūtra-s 73 to 79 omitted in ज.

दृष्टादृष्टार्थशून्यो व्यापारो वृथाटनादिः वृथाचेष्टा ॥ ६९ ॥ अशास्त्रीये नृत्यगीते न कुर्यात्; शास्त्रीययोर्मोक्षसाधनत्वात् । यथाह **योगीश्वरः**—

" वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ "

इति । समासात् वादित्रवादनं च ; " न च नृत्येन्न गायेच्च न वादित्राणि वादयेत् " इति **मानवात्** ॥ ७० ॥ दक्षिणांसारोपिते वामबाहौ दक्षिणपाणिना शब्दकरणमास्फोटनम् ; तन्न कुर्यात् । न च क्ष्वेडनम् ; " नास्फोटयेन्न च क्ष्वेडेत् " इति **मानवात्** । क्ष्वेडनं सिंहनादः ॥ ७१ ॥ अश्लीलम् असभ्यम् ॥ ७२ ॥ अनृतं मिथ्यावचनम् । तच्च द्वेधा—शब्दार्थाभ्याम् । तत्र शब्दानृतम् अवाचकेनासाधुना वा । अर्थानृतम् अन्यथा प्रतिपादनम् । तन्न कार्यम् ॥ ७३ ॥ अप्रियम् उद्वेगकरम् ॥ ७४ ॥

**न [1]कंचिन्मर्मणि स्पृशेत् ॥ ७५ ॥ नात्मानमवजानीयाद्[2] दीर्घमायुर्जिजीविषुः ॥ ७६ ॥**

मर्माणि प्राणायतनानि ;

" नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ तथा ।
मूर्धा सकण्ठहृदयं प्राणस्यायतनानि तु ॥ "

इति वक्ष्यमाणानि । तत्र कंचिदपि न स्पृशेत् नाभिहन्यात् । कस्यचिदपि मर्म दुश्चरितं न प्रकाशयेदित्यन्ये ॥ ७५ ॥ दीर्घायुष्कामः आत्मनोऽवज्ञां न कुर्यात् । तथा विप्रादीनामपि ; " विप्रा हि क्षत्रियात्मानो नावज्ञेयाः कदाचन " इति **योगिस्मरणात्** ॥ ७६ ॥

**चिरं संध्योपासनं कुर्यात् ॥ ७७ ॥ न सर्पशस्त्रैः क्रीडेत् ॥ ७८ ॥ [3]अनिमित्ततः खानि न स्पृशेत् ॥ ७९ ॥**

दीर्घायुष्कामो दीर्घकालं संध्यामुपासीत ; " ऋषयो दीर्घसंध्यत्वाद् दीर्घमायुरवाप्नुयुः " इति **मानवात्** ॥ ७७ ॥ सर्पो विषधरः । शस्त्राणि खड्गादीनि । बहुवचनादन्यैरपि मृत्युहेतुभिः व्याघ्रादिभिर्न च क्रीडेत् ॥ ७८ ॥ स्वस्थो मलापसरणं विना चक्षुरादीनीन्द्रियाणि न स्पृशेत् ।

" अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः ।
रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत् ॥ "

इति **मानवात्** ॥ ७९ ॥

[1] कंचन—ठ
[2] न स्तुयात् added in ठ.
[3] नानिमित्ततः स्वानि खानि स्पृशेत्—ठ.

**परस्य दण्डं नोद्यच्छेत्[1] ॥ ८० ॥ शास्यं शासनार्थं ताडयेत् ॥ ८१ ॥ [2]तं वेणुदलेन रज्ज्वा वा पृष्ठे ॥ ८२ ॥**

परताडनार्थं दण्डलोष्टादि नोत्थापयेत्, न पातयेच्च; "परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैनं निपातयेत्" इति **मानवात्** ॥ ८० ॥ अस्यापवादमाह। शासनार्हं शिष्यपुत्रादिकं शिक्षार्थमेव ताडयेत्, न क्रोधादिना, यदि वाङ्मात्रेण शिक्षितुं न शक्यते। "शिष्यशिष्टिरवधेन" इति **गौतमीयात्** ॥ ८१ ॥ ताडनसाधनं चाह। पाटितस्य वेणोरर्धं दलं; रज्जुः वरत्रा; तयोरन्यतरेण सूक्ष्मेण तं शास्यमेव पृष्ठे अधोभागे वा ताडयेत्। नान्यत्रान्यमन्येन; "अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्। अन्येन घ्नन् राज्ञा शास्यः" इति **गौतमीयात्**;

"अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि।
अतोऽन्यथा तु प्रहरन् पापयुक्तो भवेन्नरः॥"

इति स्मरणात् ॥ ८२ ॥

**देवब्राह्मणशास्त्रमहात्मनां परिवादं परिहरेत् ॥ ८३ ॥ धर्मविरुद्धौ चार्थकामौ ॥ ८४ ॥ लोकविद्विष्टं च धर्ममपि ॥ ८५ ॥**

देवाः विष्ण्वादयः। ब्राह्मणाः जातिमात्रेण। शास्त्रं स्मृत्यादि। तद्ग्रहणात् [3]तन्मूलभूतवेदस्यापि ग्रहणम्। महात्मानः ऋषयः। तेषां निन्दां च वर्जयेत्;

"नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्।
द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत्[4] ॥"

इति **मानवात्** ॥ ८३ ॥ धर्मविरुद्धोऽर्थः अयाज्ययाजनाद्यर्जितः। धर्मविरुद्धः कामः [5]परस्त्रीगमनादि। चकारात् एतत्त्रयविरुद्धो मोक्षश्च;

"अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्।
अनिष्ट्वा चैव यज्ञैस्तु मोक्षमिच्छन् पतत्यधः॥"

इति **मानवात्** ॥ ८४ ॥ धर्मं विहितमपि लोकनिन्दितं मधुपर्कीयगोवधादिकं च वर्जयेत्। अतिथ्यादिप्रीतिजनकत्वेनाग्नीषोमीयादिवदस्वर्ग्यत्वात्। तदेव हेतुगर्भविशेषणेनाह **योगीश्वरः**—"अस्वर्ग्यं लोकविद्विष्टं

[1] नोपयच्छेत्—घ, च. [2] तं च—घ, च, ठ. [3] तन्मूलभूतस्य—ग.
[4] विवर्जयेत्—ग. [5] परस्त्री—घ.

धर्म्यमप्याचरेन्न तु" इति। चकारात् असुखोदर्कं च; "धर्मं चाप्यसुखोदर्कम्" इति **मानवात्**। वातुलस्योदवासादिरसुखोदर्कः॥ ८५॥

**पर्वसु च शान्तिहोमान्[1] कुर्यात्॥ ८६॥ न तृणमपि छिन्द्यात्॥ ८७॥ अलंकृतश्च तिष्ठेत्॥ ८८॥ एवमाचारसेवी स्यात्॥ ८९॥**

"अथ कूश्माण्डैर्जुहुयात्" इत्युपक्रम्य "अमावास्यायां पौर्णमास्यां वा" इति **बोधायनीयात्**। गायत्रीजपांश्च; "सावित्रान् शान्तिहोमांश्च कुर्यात् पर्वसु नित्यशः" इति **मानवात्**॥ ८६॥ पर्वसु तृणम्, अपिशब्दात् वृक्षादींश्च न छिन्द्यात्;

"तुरीयं ब्रह्महत्याया धाता वृक्षेष्ववासृजत्।
ततस्तान् पर्वणि च्छित्त्वा ब्रह्महत्यामवाप्नुयात्॥"

इति ब्रह्महत्यास्मरणात्॥ ८७॥ स्रक्चन्दनादिभिरलंकृतो भवेत्। चकारात् "मङ्गलाचारयुक्तः स्यात्" इति **मानवं** ज्ञेयम्॥ ८८॥ उक्तव्रतानां नित्यतामाह। एवमुक्तानामाचाराणां नित्यं सेवनशीलो भवेत्; "स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम्" इति [2]**मानवे** प्रायश्चित्तदर्शनात्॥ ८९॥

**[3]श्रुतिस्मृत्युदितं धर्म्यं साधुभिश्च निषेवितम्।
तमाचारं निषेवेत धर्मकामो जितेन्द्रियः॥ ९०॥**

अनुष्ठेयमाचारं विशिनष्टि। "मातुलस्येव योषा" इत्यादिश्रुतिलिङ्गावगतोऽपि मातुलकन्यापरिणयो नानुष्ठेयः; स्मृतिनिषेधविरोधात्। ततश्च स्मृत्युपसंहृतमेव श्रौतलिङ्गाद्यनुमापकम्, नानुपसंहृतम्; "योषा जारमिव प्रियम्" इत्यादावपि स्मृतिकल्पनाप्रसङ्गात्। "ओं कल्पयत" इत्यादिस्मृतिविहितोऽपि मधुपर्कगवालम्भः "मा गामनागामदितिं वधिष्ट" इति श्रुतिविरोधादननुष्ठेयः। श्रुतिस्मृतिविहितोऽपि श्येनाद्यभिचारः दृष्टार्थत्वात् धर्माजनक इति नानुष्ठेयः। श्रुतिस्मृतिविहितं धर्मजनकं च दर्शपूर्णमासयोः [4]जाघन्या पत्नीसंयाजनं शिष्टापरिग्रहादननुष्ठेयमिति श्रुतिस्मृतिभ्यां विहितमदृष्टसाधनं शिष्टानुष्ठितमाचारं संध्यास्नानादिकं दृष्टार्थानीन्द्रियाणि तत्परिपन्थीनि जित्वा कुर्वीतेति॥ ९०॥

1 पर्वसु शान्तिहोमं—घ, च.
2 मानवे omitted in घ.
3 श्रुतिस्मृत्युदितो यश्च साधुभिर्यश्च सेवितः—ठ.
4 Refer to आप. श्रौ. सू., III. 8. 10 and कात्या. श्रौ. सू., VI. 212., Chow. edition.

**आचाराल्लभते चायुराचारादीप्सितां गतिम्[1] ।**
**आचाराद्धनमक्षय्यमाचाराद्धन्त्यलक्षणम्[2] ॥ ९१ ॥**

इदानीं तत्तत्फलसाधनीभूतकर्माङ्गतया आचारस्य नैमित्तिकत्वमाह । दीर्घायुष्यस्वर्गादीप्सितगत्यक्षय्यधनदुर्लक्षणसूचितदुःखध्वंससाधनानां कर्मणामाचारानुगृहीतानामेव तत्तत्फलनिष्पादकत्वम्; नान्यथा । चकारात् संततिसाधनत्वमपि; "आचारादीप्सितां प्रजाम्" इति मानान्तरात् । न च साक्षादेवाचारस्य तत्तत्साधनत्वं साधु; आचाराभावे फलस्यैवासिद्ध्या तत्तत्फलश्रवणविरोधात् । यथा—

"दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥"

इति ॥ ९१ ॥

**सर्वलक्षणहीनोऽपि [3]यः सदाचारवान्नरः ।**
**श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ ९२ ॥**

**इति [4]श्रीविष्णुस्मृतौ एकसप्ततितमोऽध्यायः**

आचारानुगृहीतेनापि तत्साधनेन कर्मणा न तत्सिद्धिः, प्राचीनादृष्टरूपसहकार्यभावादित्यत आह । आयुरादिफलसूचकलक्षणरहितस्यापि आचारादनीर्ष्याद्यङ्गानुगृहीतायुरादिसाधनकर्मजन्यैहिकादृष्टेनैवायुष्यादिफलसिद्धेः न प्राचीनादृष्टापेक्षेति । यद्वा आचारवत् श्रद्धानसूययोरपि सर्वकर्माङ्गत्वमाह—सर्वलक्षणहीनोऽपि यः सदेति; "यच्छ्रद्धया करोति तदेवास्य वीर्यवत्तरं भवति" इति[5] श्रुतेः ॥ ९२ ॥

इति [6]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[7]श्रीरामपण्डितात्मज[7]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
एकसप्ततितमोऽध्यायः

[1] प्रजाम्—ज. [2] आचारो हन्त्यलक्षणम्—ठ. [3] समुदाचारवान्—ज, ठ.
[4] वैष्णवे धर्मशास्त्रे आचारप्रकरणमेकसप्ततितमम्—ज, ठ. [5] इत्यादि—ग.
[6] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यामेकसप्ततितमोऽध्यायः—घ. [7] श्री omitted in ग.

## द्विसप्ततितमोऽध्यायः

**[1]दमयमेन तिष्ठेत् ॥ १ ॥ दमश्चेन्द्रियाणां [2]प्रकीर्तितः ॥ २ ॥ दान्तस्यायं लोकः परश्च ॥ ३ ॥ नादान्तस्य क्रिया काचित् समृध्यति ॥ ४ ॥**

एवं गृहस्थसाधारणं स्नातकधर्ममभिधाय, आश्रमचतुष्टयसाधारणं धर्मं द्विसप्ततितमाध्यायेनाह । दमः अन्तःकरणनियमः । यमः बाह्येन्द्रियनियमः । समाहारेण ब्रह्मचर्यादयो गृह्यन्ते ;

" ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसास्तेयमाधुर्ये[3] दमश्चेति यमा स्मृताः ॥ "

इति योगिस्मरणात् । तेनान्वितो भवेत् ॥ १ ॥ अन्तःकरणनियमेन चक्षुरादीन्द्रियाणामपि नियमः प्रसिद्ध एव ; तदधीनप्रवृत्तिकत्वात् तेषाम् ॥ २ ॥ दमफलमाह । ऐहिकामुष्मिकफलसाधनानां कर्मणां दमेनैव फलसिद्धेः ॥ ३ ॥ व्यतिरेके अनिष्टमाह । ऐहिकी पारलौकिकी वा क्रिया दमं विना फलं न साधयति ॥ ४ ॥

**[4]दमः पवित्रं परमं मङ्गल्यं परमं दमः ।**
**दमेन सर्वमाप्नोति यत्किंचिन्मनसेच्छति[5] ॥ ५ ॥**

पवेः पापात् त्रायते इति पवित्रम् । मङ्गल्यं मङ्गलकारणम् । मनोऽभिलषितं यत्किंचित् ऐहिकं पारलौकिकं वा तत्सर्वं दमेनाप्नोति ॥ ५ ॥

**दशार्धयुक्तेन रथेन यातो**
**मनोवशेनार्यपथानुवर्तिना ।**
**तं चेद्रथं नापहरन्ति वाजिन-**
**स्तथा गतं नावजयन्ति शत्रवः ॥ ६ ॥**

1 दमे यत्नमातिष्ठेत्—ज, ठ. 2 अप्रकीर्णता—ठ. 3 मास्तिक्यं—घ.
4 This verse omitted in ख, ग, च, ज. 5 मनसेप्सितम्—ठ

यमं स्तौति। दशार्धेन पञ्चभिरिन्द्रियलक्षणैर्वाजिभिर्युक्तेन प्रज्ञालक्षणेन रथेन मनोलक्षणसारथिना वशीकृतेन सत्पथगामिना यो याति, तं तथा वर्तमानं, शत्रवः कामक्रोधादयः नावजयन्ति ; यदि तं रथं ते वाजिनः सारथिना अनुगृहीताः न अपथे प्रवर्तयन्ति। यथोक्तं भगवता—

" इन्द्रियाणां विचरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ "

इति ॥ ६ ॥

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत्।**
**तद्वत् कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७ ॥**

इति [1]श्रीविष्णुस्मृतौ द्विसप्ततितमोऽध्यायः

शान्तिप्राप्त्युपायमाह। अद्भिः आपूर्यमाणमपि अचलतया अविक्षोभिततया[2] प्रतिष्ठा यस्य तम् अविक्रियं सन्तं समुद्रं सर्वतो गता आपः यथा प्रविशन्ति, तथा सर्वे कामाः विषयेच्छाविशेषाः विषयसंनिकर्षेऽप्यविकुर्वन्तं यं प्रविशन्ति अन्तरेव प्रलीयन्ते, स एव शान्तिं तितिक्षाम् एति प्राप्नोति। तल्लक्षणं च स्मृत्यन्तरे—

" आक्रुष्टोऽभिहतो वापि नाक्रोशेन्न च ताडयेत्।
अदुष्टो वाङ्मनःकायैः सा तितिक्षा क्षमा स्मृता ॥ "

इति। नेतरः कामकामी ; काम्यन्त इति कामाः विषयाः, तान् कामयितुं शीलमस्य ॥ ७ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[4]श्रीरामपण्डितात्मज[4]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां द्विसप्ततितमोऽध्यायः

[1] वैष्णवे धर्मशास्त्रे दमप्रकरणं द्विसप्ततितमम्—ज, ठ.
[2] अविक्षुभितम्—ग.
[3] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां द्विसप्ततितमोऽध्यायः—घ, च.
[4] श्री omitted in ग.

# त्रिसप्ततितमोऽध्यायः

**अथ श्राद्धेप्सुः पूर्वेद्युर्ब्राह्मणानामन्त्रयेत्**[1] ॥ १ ॥

गृहस्थधर्मेषु श्राद्धं विवक्षुः त्रिसप्ततितमाध्यायमारभते । अथेति त्रयोदशभिरध्यायैः श्राद्धप्रस्तावः । तत्र ब्राह्मणनिमन्त्रणकालमाह । श्राद्धं चिकीर्षुः श्राद्धदिनात् पूर्वदिने वक्ष्यमाणलक्षणसंख्यान् ब्राह्मणान् आमन्त्रयेत् श्राद्धभोजनमङ्गीकारयेत् । तत्र श्राद्धं नाम [2]पित्रुद्देशेन ब्राह्मणेभ्योऽन्नादिदानम् ;

" देशे काले च पात्रे च श्रद्धया विधिना च यत् ।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥ "

इति **ब्राह्मात्** । तच्च नित्यं नैमित्तिकं काम्यं चेति त्रिधा । यत्तु **विश्वामित्रेण**—

" नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥ "

इति द्वादशविधत्वमुक्तं, तत् तस्यैव प्रपञ्चाय; न विधान्तरोपदर्शनाय । तत्र नित्यम् अहरहः क्रियमाणम् । यथाह **कात्यायनः**—

" मृताहेऽहरहर्दर्शे श्राद्धं यच्च महालये ।
तन्नित्यमुदितं सद्भिर्नित्यवत् तद्विधानतः ॥ "

इति । नैमित्तिकं संक्रान्त्यादौ । यथा **गालवः**—

" प्रेतश्राद्धं सपिण्डान्तं संक्रान्तिग्रहणेषु च ।
संवत्सरोदकुम्भं च वृद्धिश्राद्धं निमित्ततः ॥ "

इति । काम्यं प्रतिपदादितिथिषु । यथाह **स एव**—

" तिथ्यादिषु च यच्छ्राद्धं मन्वादिषु युगादिषु ।
अलभ्येषु च योगेषु तत्काम्यं समुदाहृतम् ॥ "

[1] निमन्त्रयेत्—ठ.

[2] पित्राद्युद्देशेन—ख, ग.

इति। आदिशब्दात् नक्षत्रवारयोगकरणानां ग्रहणम्। तत्र नैमित्तिकं द्विविधम्—एकोद्दिष्टं, पार्वणं च। एकमुद्दिश्य क्रियमाणमेकोद्दिष्टम्। त्रिपुरुषोद्देशेन पार्वणमिति। पूर्वेद्युः असंभवे सद्योऽपि निमन्त्रयेत्, "असंभवे परेद्युर्वा ब्राह्मणांस्तु निमन्त्रयेत्" इति **देवलीयात्**। ब्राह्मणान्, न क्षत्रियादीन्, "राजन्य-वैश्ययोश्चैव नैतत् कर्म प्रचक्षते" इति **मानवात्**॥ १॥

**द्वितीयेऽह्नि शुक्लपक्षस्य पूर्वाह्णे कृष्णपक्षस्यापराह्णे विप्रान् सुस्नातान् स्वाचान्तान् यथाभूयो [1]वयःक्रमेण कुशोत्तरेष्वासनेषूपवेशयेत्॥ २॥**

श्राद्धाहःकृत्यमाह। निमन्त्रणदिनात् द्वितीयं श्राद्धीयमहः; तस्मिन् शुक्लपक्षसंबन्धिनि कृतपस्य पूर्वघटिकायां कृष्णपक्षसंबन्धिनि उत्तरघटिकायाम् उपक्रम्य तैलोद्वर्तनादिना सम्यक् स्नातान्; "तैलमुद्वर्तनं विप्रे दद्यात् पूर्वाह्ण एव तु" इति **प्राचेतसात्**। स्वाचान्तानिति नियमेन आचमनप्रतिनिधिनिरासः। स्वयं गोमयमण्डलयोः कृतपादप्रक्षालनवतः;

"प्राङ्गणे मण्डले कुर्याद् दैवे पित्र्ये च गोमयैः।
विप्राणां क्षालयेत् पादांस्तत्र भक्त्या यथाक्रमम्॥"

इति **मात्स्यात्**। यथाभूयः यथावयोबाहुल्यं पित्र्यब्राह्मणादधिकवयसं पैतामहे, ततोऽप्यधिकं प्रपैतामह इति। कुशा उत्तरे येषां तेषु कुशाच्छन्नेषु। तत्र विशेषो **देवलीयः**—

"द्वौ दर्भौ प्राङ्मुखौ दैवे पित्र्ये त्रीन् दक्षिणामुखान्।
आसनेषु नियुञ्जीत प्रोक्षितेषु तिलोदकैः"

इति। मुखम्; अग्रम्। आसनानि वक्ष्यन्ते; तदुपवेशयेत्। "आसध्वमिति तान् ब्रूयादासनं संस्पृशन्नपि" इति स्मरणात्॥ २॥

**द्वौ दैवे प्राङ्मुखौ त्रींश्च पित्र्ये उदङ्मुखान्॥ ३॥ एकैकमुभयत्र वेति॥ ४॥**

ब्राह्मणसंख्यादाह। दैवे देवस्थाने द्वौ विप्रौ प्राङ्मुखौ। पित्र्ये पित्रादिस्थाने त्रीन् उदङ्मुखानुपवेशयेत्। चकारात् संख्यान्तरमपि प्रदर्श्यते; "एकैकमेकैकस्य द्वौ द्वौ त्रींस्त्रीन् वा। वृद्धौ फलभूयस्त्वम्" इति **आश्वलायनीयात्**। द्वौ द्वाविति दैवे। त्रींस्त्रीनिति पित्र्ये॥ ३॥ अनुकल्पमाह। उभयत्र दैवपित्र्ययोः एकैकं

[1] विद्याक्रमेण—Jolly's edition.

वा। वेत्यनुकल्पे ; न विकल्पे, तुल्यबलत्वाभावात्। इतिः पक्षसमाप्तौ। नोभयत्रैकम्; "न त्वेवैकं सर्वेषाम्" इति **आश्वलायनीयात्**। अत एव **वसिष्ठः**—

"यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत्।
प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे॥"

इति पृथक्पात्रप्रयोगमाह। इदमपि सपिण्डीकरणं विना; "काममनाद्ये" इति **आश्वलायनीयात्**। आद्यं सपिण्डीकरणम्॥ ४॥

**आमश्राद्धेषु काम्येषु च प्रथमपञ्चकेनाग्निं हुत्वा॥ ५॥ पशुश्राद्धेषु मध्यमपञ्चकेन॥ ६॥ अमावास्यासूत्तमपञ्चकेन॥ ७॥ आग्रहायण्या ऊर्ध्वं कृष्णाष्टकासु च क्रमेणैव प्रथममध्यमोत्तमपञ्चकैः॥ ८॥**

श्राद्धविशेषे काठकानुसारेणेतिकर्तव्यताविशेषमाह। "कृणुष्व पाजः" इति रक्षोघ्नं पञ्चदशर्चं सूक्तं काठके प्रसिद्धम्। तस्य आद्येन पञ्चकेन आमश्राद्धकाम्यश्राद्धयोः वैश्वदेविकपूजानन्तरं पित्रावाहनात् पूर्वमेव अग्निहोमः कार्यः। अनुक्तद्रव्यकत्वादाज्यहोम इति **प्राञ्चः**॥ ५॥ पशुद्रव्यके श्राद्धे मध्यमपञ्चकेनोक्तकाले होमः॥ ६॥ बहुवचनं द्वादशाभिप्रायेण। उत्तमपञ्चकेनावाहनात् पूर्वं होमः॥ ७॥ आग्रहायणी मार्गशीर्षी पौर्णमासी। सा च पौषीमाघ्योरुपलक्षणम्। ताभ्य ऊर्ध्वं यास्तिस्रः कृष्णाष्टकाः कृष्णपक्षाष्टम्यः, तासु यथाक्रमं प्रथममध्यमोत्तमपञ्चकैरुक्तकाले होमः॥ ८॥

**अन्वष्टकासु च॥ ९॥**

ताभ्योऽष्टमीभ्यः अनु पश्चात् जाताः नवम्योऽन्वष्टकाः; तासु। चकारात् पूर्वेद्युर्भवासु सप्तमीषु च यथाक्रमं पञ्चकत्रिकेण होमः। तत्र प्रथमाष्टकायां सप्तम्यादिदिनत्रयेऽप्याद्यपञ्चकेन; द्वितीयाष्टकायां दिनत्रयेऽपि द्वितीयेन; तृतीयाष्टकायां दिनत्रयेऽप्यन्त्येनेति। यद्यप्यत्रानेकानि श्राद्धानि प्रक्रान्तानि, तथापि दर्शश्राद्धमेवात्र प्रकृतिः; श्राद्धकालेऽपि प्रथममभावास्याया निर्देशात्; स्मृत्यन्तराच्च॥ ९॥

**ततो ब्राह्मणानुज्ञातः पितृनावाहयेत्॥ १०॥**

काठकीयश्राद्धप्रयोगमाह । ततः होमानन्तरं वक्ष्यमाणरीत्या यातुधानान् अपसार्य ब्राह्मणान् 'पितॄन् भवन्तु आवाहयिष्ये' इत्यनुज्ञाप्य 'आवाहय' इति तैरनुज्ञातः पितॄनावाहयेत् । पितृग्रहणात् देवावाहनाद्याच्छदनान्ते कृते होम इति सिध्यति ॥ १० ॥

**अपयन्त्वसुरा इति द्वाभ्यां तिलैः यातुधानानां[1] विसर्जनं कृत्वा ॥ ११ ॥ एत पितरः सर्वांस्तानग्न आ मे यन्त्वेतद्वः पितर इत्यावाहनं कृत्वा, कुशतिलमिश्रेण गन्धोदकेन यास्तिष्ठन्त्यमृता वागिति यन्मे मातेति च पाद्यं[2] निवेद्य, अर्घ्यं कृत्वा निवेद्य चानुलेपनं कृत्वा[3] [4]कुशतिलवस्त्रपुष्पालंकारधूपदीपैर्यथाशक्त्या विप्रान् समभ्यर्च्य [5]घृतप्लुतमन्नमादाय आदित्या रुद्रा वसव इति वीक्ष्य, अग्नौ करवाणीत्युक्त्वा तच्च[6] विप्रैः कुर्वित्युक्ते आहुतित्रयं दद्यात्[7] ॥ १२ ॥**

[8]यदावाहनमुक्तं तत्किं कृत्वेत्यत आह । उक्तहोमसमाप्त्यनन्तरम् "अपयन्तु" इति मन्त्रद्वयेन तिलैः श्राद्धविघ्नकर्तॄन् यातुधानान् अपसार्यावाहयेत् ॥ ११ ॥ समन्त्रावाहनक्रममाह । उक्तप्रतीकेन मन्त्रेणावाहनमुक्तप्रतीकाभ्यां मन्त्राभ्यां पाद्यासनादिभिरर्घ्यं संपाद्य निवेद्य गन्धादिभिः [9]नैवेद्यान्तैर्यथोक्तप्रकारेण शक्त्या देवपितृब्राह्मणान् संपूज्य गृहीतमन्नम्; "आदित्याः" इति मन्त्रेणावेक्ष्य, पृष्ट्वा, उत्तरे लब्धे; "आदित्येभ्यो रुद्रेभ्यो वसुभ्यः" इति मन्त्रत्रयेण "सोमाय पितृमते स्वधा नमः; यमायाङ्गिरसे स्वधा नमः; अग्नये कव्यवाहनाय [10]स्वधा नमः" इति मन्त्रत्रयेणाहुतित्रयं जुहुयात् ॥ १२ ॥

**ये मामकाः पितर एतद्वः पितरोऽयं यज्ञ इति च हविरनुमन्त्रणं कृत्वा यथोपपन्नेषु पात्रेषु विशेषाद्रजतमयेष्वन्नं नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत् ॥ १३ ॥**

अन्नसंकल्पमाह । "ये मामकाः" "एतद्वः पितरः" "अयं यज्ञः" इति त्रिभिर्मन्त्रैरन्नमनुमन्त्र्य, यथामिलितेषु सौवर्णेषु दैवे राजतेषु पित्र्ये वा "नमः" इति मन्त्रेण वैश्वदेविकयोर्ब्राह्मणयोः प्रथमं

[1] यातुधानविसर्जनं—ठ.
[2] निर्वर्त्य added in Jolly's edition.
[3] अनुलेपनं कृत्वा omitted in Jolly's edition.
[4] कुशतिल omitted in घ.
[5] घृतप्लुतमन्नमादाय omitted in ग.
[6] तत्र—Jolly's edition.
[7] अनुज्ञातश्च विप्रैः प्राग्वत् वह्नौ आहुतित्रयं हुत्वा—ठ.
[8] एवमावाह—घ.
[9] दीपान्तैः—ग.
[10] स्वधा omitted in घ.

निवेदयेत्। तच्चोपवीतिना कार्यम्; "उपवीतं देवानां प्राचीनावीतं पितॄणाम्" इति **श्रुतेः**। तच्च प्रादक्षिण्येन; "प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम्" इति **कात्यायनीयात्**। तच्च ऋजुदर्भैः; "देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः" इति **स्मरणात्**। विश्वेभ्यो देवेभ्यः इति सामान्यवचनेऽपि तत्तत्संज्ञकेभ्य इति वाच्यम्। संज्ञाश्चाह **शङ्खः**—

"इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः।
नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ[1]।
पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ॥"

इति। ततश्च 'पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः' इत्यादिना सर्वत्रोह्यम्॥ १३॥

**[2]पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु॥ १४॥**

तदनन्तरं पित्र्यमाह। यद्यपि—

"गोत्रसंबन्धनामानि इदमन्नं ततः स्वधा।
पितृक्रमादुदीर्येति स्वसत्तां विनिवर्तयेत्॥"

इति **अत्रिणा** गोत्रसंबन्धानन्तरं नामोक्तं, तथापि काठकानुसारित्वान्मूलस्मृतेः तदभिप्रायोऽयं क्रम इति ध्येयम्। ततश्च 'अमुकशर्मणेऽस्मत्पित्रेऽमुकगोत्राय वसुरूपायेदमन्नं स्वधा नमः' इति वाक्यप्रयोगेणान्नं विवेदयेत्। चकारात् मातामहेभ्यश्चापि;

"पितरो यत्र पूज्यन्ते तत्र मातामहा अपि।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत्॥"

इति **स्मरणात्**। वक्ष्यति च 'मातामहानामप्येवम्' इत्यादिना॥ १४॥

**तदद्त्सु ब्राह्मणेषु यन्मे प्रकामादहोरात्रैर्यद्वः क्रव्यादिति जपेत्॥ १५॥**

तन्निवेदितमन्नम् अदत्सु[3] ब्राह्मणेषु देवपितृब्राह्मणेषु; "यन्मे प्रकामात्" [4]इत्यादिमन्त्रजातं जपेत्। इतिकरणादन्यानप्याह **कात्यायनः**—"अश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत् त्रिर्वा रक्षोघ्नीः

[1] लोचने—ग.
[2] ततः पित्रे—ज, ठ.
[3] भुञ्जानेषु added in ग.
[4] इत्यादिमन्त्रान् पुरुषसूक्तं—ख, ग.

पित्र्यान् मन्त्रान् पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि" इति। **मात्स्येऽपि**—"इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः" इति ॥ १५ ॥

**[1]इतिहासपुराणधर्मशास्त्राणि चेति ॥ १६ ॥**

इतिहासाः [2]महाभारताद्याः। पुराणानि ब्राह्मादीनि। धर्मशास्त्राणि मानवादीनि। यथाह **योगीश्वरः**—

"श्लोकत्रयमपि ह्यस्माद्यः श्राद्धे श्रावयिष्यति।
पितॄणां तस्य तृप्तिः स्यादक्षय्या नात्र संशयः॥"

इति। **जमदग्निः**—

"अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि।
सूक्तस्तोत्रजपं मुक्त्वा विप्राणां च विसर्जनम्॥"

इति ॥ १६ ॥

**उच्छिष्टसंनिधौ दक्षिणाग्रेषु कुशेषु[3] पृथिवी दर्विरक्षिता[4] इत्येकं पिण्डं पित्रे निदध्यात् ॥ १७ ॥**

पाणिहोमपक्षे उच्छिष्टसंनिधौ उच्छिष्टपात्रात् अरत्निमात्रम् अरत्नित्रयं वोत्सृज्य, "पृथिवी" इत्यादिमन्त्रेण पितृपिण्डं दद्यात्। तदाह **प्रचेताः**—

"अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत्,
यत्रोपस्पृशतां वापि प्राप्नुवन्ति न बिन्दवः॥"

इति। **अत्रिः**—

"पितॄणामासनस्थानाद्व्यतस्त्रिष्वरत्निषु।
उच्छिष्टसंनिधानं तन्नोच्छिष्टासनसंनिधौ॥"

इति। यथावकाशमयं विकल्पः। एकमिति वचनात् द्विपितृकेणाप्युभयोरेक एव पिण्डो देयः; "यदि हि द्विपिता स्यात् एकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयत्" इति **आपस्तम्बीयात्**। एकविभक्तिनिर्देशाच्चोभयनामान्ते एकैव विभक्तिः [5]प्रयोक्तव्या; अमुकामुकशर्मभ्यामिति। पिण्डद्रव्यं च भुक्तशेष एव;

[1] इतिहासधर्मशास्त्र पुराणानि चेति—घ. [2] भारतादयः—घ.
[3] दर्भेषु—Jolly's edition. [4] अक्षता—Jolly's edition. [5] प्रयोज्या—ग.

"सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसंनिधौ पिण्डान् दद्याद्वै पितृयज्ञवत् ॥"

इति योगिस्मरणात् । सर्वं माषवर्जम् ;

"माषाः श्राद्धेषु वै ग्राह्या वर्जयित्वाग्निपिण्डयोः ।
ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिण्डयोः ॥"

इति व्याघ्रस्मरणात् ॥ १७ ॥

**अन्तरिक्षं दर्विरक्षिता[1] इति द्वितीयं [2]पिण्डं पितामहाय ॥ १८ ॥ द्यौर्दर्विरक्षिता[1] इति तृतीयं प्रपितामहाय ॥ १९ ॥ [3]ये अत्र पितरः प्रेता इति वासो देयम् ॥ २० ॥ वीरान्नः पितरो धत्त इत्यन्नम् ॥ २१ ॥**

द्वितीयमित्यपि एकशब्दवत् । तेन च पितामहद्वित्वेऽप्येक एव पिण्डः ॥ १८ ॥ तृतीयमित्यप्युक्तार्थम् ॥ १९ ॥ "ये अत्र पितरः" इति मन्त्रेण पिण्डोपरि वस्त्रं दद्यात् ॥ २० ॥ "वीरान्नः" इति मन्त्रेण पिण्डशेषमन्नं पिण्डोपरि दद्यात् ॥ २१ ॥

**अत्र पितरो मादयध्वं [4]यथाभागमिति दर्भमूले करावघर्षणम् ॥ २२ ॥ ऊर्जं वहन्तीरित्यनेन सोदकेन प्रदक्षिणं पिण्डानां विकिरणं कृत्वा अर्घपुष्पधूपालेपनान्नादिभक्ष्यभोज्यानि निवेदयेत् ॥ २३ ॥ उदकपात्रं [5]मधुघृततिलैः संयुक्तं च ॥ २४ ॥**

"अत्र पितरः" इति मन्त्रेण पिण्डाधःस्थितदर्भमूले करलेपावघर्षणं कुर्यात् ॥ २२ ॥ "ऊर्जम्" इति मन्त्रेण सोदकेन पिण्डशेषेण प्रादक्षिण्येन पिण्डानां परितो विकिरणं सेचनं कृत्वा अर्घादीन् पञ्च भोज्यान्तान् निवेदयेत् ॥ २३ ॥ जलपूर्णं करकं मध्वादियुक्तं च निवेदयेत् । चकारात् अञ्जनाभ्यञ्जनादीनि ; "पिण्डेष्वञ्जनाभ्यञ्जने वासः" इति आश्वलायनीयात् ॥ २४ ॥

**भुक्तवत्सु ब्राह्मणेषु तृप्तिमागतेषु, मा मे क्षेष्ठेत्यन्नं सतृणमभ्युक्ष्यान्नविकिरमुच्छिष्टाग्रतः[6] कृत्वा,[7] तृप्ता भवन्तः संपन्नमिति**

[1] अक्षता—Jolly's edition.
[2] पिण्डं omitted in घ and Jolly's edition.
[3] ये omitted in घ.
[4] यथाभागमावृषायध्वमिति—Jolly's edition.
[5] मधुतिलाभ्यां—ठ.
[6] विकरणम् for विकिरम्—ठ.
[7] प्रत्येत्य added in ठ.

**च पृष्ट्वा उदङ्मुखेष्वाचमनमादौ [1]दत्त्वा, ततः प्राङ्मुखेषु दत्त्वा, [2]ततश्च सुप्रोक्षितमिति [3]श्राद्धदेशं संप्रोक्ष्य, दर्भपाणिः सर्वं कुर्यात् ॥ २५ ॥**

तृप्त्यन्तं भुक्तवत्सु "मा मे" इति मन्त्रेण श्राद्धशेषमन्नं सतृणं कुशसहितं जलेनाभ्युक्ष्य, तस्यान्नस्य ब्राह्मणोच्छिष्टाग्रतो विकिरणं कृत्वा, ब्राह्मणतृप्तिं श्राद्धसंपत्तिं च पृष्ट्वा, पित्र्येष्वादौ आचमनं दत्त्वा, पश्चाद्दैवेषु, अनन्तरं "सुप्रोक्षितम्" इति मन्त्रेण श्राद्धदेशं प्रोक्षेत् । इदं च सर्वं दर्भपाणिना कार्यम् ॥ २५ ॥

**ततः [4]प्राङ्मुखाग्रतो यन्मे [5]राम इति प्रदक्षिणं कृत्वा प्रत्येत्य च, यथाशक्ति दक्षिणाभिः समभ्यर्च्य, अभिरमन्तु भवन्त इत्युक्त्वा, [6]तैरुक्तेऽभिरताः स्म इति, देवाश्च पितरश्चे-त्यभिजपेत् ॥ २६ ॥**

ततः सुप्रोक्षितानन्तरं देवविप्राग्रतः "यन्मे [7]रामः" इति मन्त्रेण प्रदक्षिणमावृत्य, प्रत्यावृत्य च, स्वशक्त्या दक्षिणां दत्त्वा, "अभिरमन्तु" इति मन्त्रेण ब्राह्मणान् विसृज्य, "अभिरताः स्मः" इति तैरप्युक्ते "देवाश्च" इति तदभिमुखीभूय जपेत् ॥ २६ ॥

**अक्षय्योदकं च नामगोत्राभ्यां दत्त्वा विश्वे देवाः प्रीयन्ता-मिति प्राङ्मुखेभ्यस्ततः प्राञ्जलिरिदं तन्मनाः सुमना याचेत ॥२७॥**

यत् दत्तमन्नोदकादि, तत् 'अक्षय्यमस्तु' इति दैवे पित्र्ये च नामगोत्राभ्यामुदकं दत्त्वा, 'विश्वे देवाः प्रीयन्ताम्' इति दैवे चोदकं दत्त्वा, अनन्तरमञ्जलिं कृत्वा प्रसन्नचेताः ब्राह्मणेषु दत्तचित्तः आशिषो याचेत ॥ २७ ॥

**दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च ।**
**श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥ २८ ॥**

[1] दद्यात्—घ.
[2] From here the further portion of this Sūtra missing in ज.
[3] श्राद्धदेशे—घ.
[4] प्राङ्मुखेषु—ज.
[5] नाम—घ.
[6] तैरुक्तः—घ.
[7] नाम—घ.

ता एवाह । नः अस्माकं कुले दातारः दानशीलाः पुरुषाः वेदाश्च अध्ययनाध्यापनाविच्छेदेन वर्धन्ताम् । संततिश्च पुत्रपौत्रपरंपरा वर्धताम् । श्रद्धा श्राद्धविषया आस्तिक्यबुद्धिः मा व्यगमत् अपयातु । देयं च अन्नपानादि अस्माकं कुले बहुलमस्त्विति याचेत ॥ २८ ॥

**[1]तथास्त्विति ब्रूयुः ॥ २९ ॥**

**अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।**

**याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ ३० ॥**

**इत्येताभ्यामाशिषः प्रतिगृह्य ॥ ३१ ॥**

**वाजे [2]वाजेति च ततो ब्राह्मणांश्च विसर्जयेत् ।**

**पूजयित्वा यथान्यायमनुव्रज्याभिवाद्य च ॥ ३२ ॥**

इति [3]श्रीविष्णुस्मृतौ त्रिसप्ततितमोऽध्यायः

ते च याचिताः तथास्त्विति प्रतिब्रूयुः ॥ २९ ॥ किंच अन्नम् अदनीयम् अस्माकं बहु भूयात् । अतिथींश्च अपेक्षितकाले लभेमहि । याचकाश्च अस्माकं बहवः सन्तु । वयं च कंचनापि मा याचिष्म ॥ ३० ॥ इत्येताभ्याम् अभिहिताभ्यां मन्त्राभ्यामुक्ता आशिषः तथास्त्विति प्रतिवचनेन प्रतिगृह्य विप्रान् विसर्जयेत् ॥ ३१ ॥ आशिषः प्रतिगृह्य प्रियवचनैर्यथायथं संतोष्य आसीमान्तमनुव्रज्य, "वाजे वाजे" इति मन्त्रेण पितृब्राह्मणपूर्वकं विसर्जयेत्; "पितृपूर्वं विसर्जनम्" इति **योगिस्मरणात्** ॥ ३२ ॥

इति [4]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[5]**श्रीरामपण्डित**ात्मज-[5]**श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** त्रिसप्ततितमोऽध्यायः

[1] Sūtra-s 29 to 31 omitted in ज; Sūtra-s 29, 30 omitted in ठ.

[2] वाज इति—Jolly's edition.

[3] वैष्णवे धर्मशास्त्रे श्राद्धप्रकरणं त्रिसप्ततितमम्—ज, ठ.

[4] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां त्रिसप्ततितमोऽध्यायः—घ, च.

[5] श्री omitted in ग.

## चतुःसप्ततितमोऽध्यायः

[1]अष्टकासु दैवपूर्वं शाकमांसापूपैः श्राद्धं कृत्वान्वष्टकास्वष्टकावद्वह्नौ [2]हुत्वा दैवपूर्वमेव[3] मात्रे पितामह्यै प्रपितामह्यै च पूर्ववद्ब्राह्मणान् भोजयित्वा [4]दक्षिणाभिश्चाभ्यर्च्यानुव्रज्य विसर्जयेत् ॥ १ ॥

एवं प्रकृतिभूतमन्नश्राद्धं निरूप्य तद्विकृतिभूतमष्टकाश्राद्धं चतुःसप्ततितमेनाह। अष्टकास्तिस्रो वक्ष्यमाणाः। दैवपूर्वमिति; प्रकृतिप्राप्तानामपि देवानां पुनर्वचनमदैवत्वभ्रमनिरासाय। यथाह **मार्कण्डेयः**—" वैश्वदेवविहीनं तु केचिदिच्छन्ति सत्तमाः" इति। तासु यथाक्रमं शाकमांसापूपैः;

" ऐन्द्र्यां तु प्रथमायां तु शाकैः संतर्पयेत् पितॄन्।
प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत्।
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम् ॥ "

इति **ब्राह्मात्**। अनेन च,

" आद्यापूपैः सदा कार्या मांसैरन्या भवेत्तथा।
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः ॥ "

इति **वायवीयः** क्रमो निरस्तः। यथोक्तविधिना श्राद्धं कृत्वा, परेद्युरन्वष्टकासु अष्टकावत् यस्यामष्टकायां येन पञ्चकेन होमः, तेनैवान्वष्टकास्वपि होमः। पुनर्दैववचनं मातृश्राद्धे पृथग्विश्वेदेवप्राप्त्यर्थम्; " मातृश्राद्धं सदैवं तु पृथगन्वष्टकासु तु " इति **हारीतीयात्**। मात्रादिष्वेकवचनं मात्रादिद्वित्वेऽपि एकपिण्डप्राप्त्यर्थम्। चकारात् पित्रादित्रिकं मातामहादित्रिकं च गृह्यते। तेन च " अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् " इति **स्मृतिरनुगृह्यते**। पूर्ववत्; प्रकृतिवत् ब्राह्मणभोजनादि विसर्जनान्तं कुर्यात्। दक्षिणादीनां पुनर्वचनं क्रमनियमाय। ततश्च भोजनानन्तरं दक्षिणावचनात् " यन्मे [5]रामः " इति प्रदक्षिणप्रत्यावर्तनयोर्निवृत्तिः,

[1] अथाष्टकासु—क.
[2] देवपूर्वमेवं हुत्वा—Jolly's edition.
[3] एव omitted in ठ.
[4] दक्षिणाभिश्च शक्त्याभ्यर्च्य—ज.
[5] नामेति—ख ; माता—च.

दक्षिणानन्तरमनुव्रजनविधानाच्च "अभिरमन्तु" इत्याद्यान्तरालिकतन्त्रनिवृत्तिः। अनुव्रजनानन्तरं विसर्जनविधानाच्च पूजनाभिवादनयोर्निवृत्तिः ॥ १ ॥

**ततः [1]कर्षूः कुर्यात् ॥ २ ॥ तन्मूले [2]प्रागुदगग्न्युपसमाधानं कृत्वा पिण्डनिर्वपणम् ॥ ३ ॥ [3]कर्षूत्रयमूले पुरुषाणां कर्षूत्रयमूले स्त्रीणाम् ॥ ४ ॥**

वैशेषिकधर्मानाह। ततो विसर्जनानन्तरं कर्षूः गर्तान् नव चतुरङ्गुलविस्तृतान् चतुरङ्गुलखातान् वितस्त्यायतान् कुर्यात्; नवानां पूरणश्रवणात् ॥ २ ॥ तासां कर्षूणां मूले प्रागुदग्देशे ऐशान्याम् अग्निमाधाय पिण्डान् निर्वपेत् ॥ ३ ॥ पिण्डदेशमाह। एकैककर्षूमूले एकैकं पिण्डं पुरुषेभ्यः स्त्रीभ्यश्च दद्यात्। पुरुषाणामिति सामान्यवचनं मातामहप्राप्त्यर्थम्। तेन पितृपिण्डानन्तरं मातृपिण्डान् दत्त्वा मातामहपिण्डा देयाः;

"केवलास्तु क्षये कार्या वृद्धावादौ प्रकीर्तिताः।
अन्वष्टकासु मध्ये च नान्त्याः कार्यास्तु मातरः॥"

इति **स्मरणात्**। अन्ये तु "अन्वष्टकासु [4]क्रमशो मातृपूर्वं तदिष्यते" इति [5]ब्राह्मवाक्यात् मातृपूर्वकत्वमिच्छन्ति ॥ ४ ॥

**पुरुषकर्षूत्रयं सान्नेनोदकेन पूरयेत् ॥ ५ ॥ स्त्रीकर्षूत्रयं सान्नेन पयसा ॥ ६ ॥**

यासां संनिधौ पितृपिण्डा दत्ताः, ताः पुरुषकर्ष्वः। तासां त्रयमन्नसहितेनोदकेन पूरयेत्। यद्यपि मातामहकर्ष्वोऽपि पुरुषकर्ष्वः, तथापि तासां पृथगुपादानात् पितृपर एवात्र पुरुषशब्दो ज्ञेयः। सहयोगाच्चान्नस्य गुणत्वम् ॥ ५ ॥ यत्संनिधौ मातृपिण्डा दत्ताः, ताः स्त्रीकर्ष्वः। तत्त्रयमन्नसहितेन दुग्धेन पूरयेत् ॥ ६ ॥

**दध्ना मांसेन पयसा[6] प्रत्येकं [7]कर्षूत्रयम् ॥ ७ ॥ पूरयित्वा जपेदेतद्वद्वयो भवतीभ्योऽस्तु चाक्षयम् ॥ ८ ॥**

**इति [8]श्रीविष्णुस्मृतौ चतुःसप्ततितमोऽध्यायः**

1 षट् कर्षूः—ग, ज, ठ.
2 प्रागुदगग्न्युपसमाधानं कृत्वा हुत्वा च पिण्डनिर्वापणं प्रत्येकस्मिन् कर्षूमूले कुर्यात्—ठ.
3 कर्षूत्रयं पुरुषाणां स्त्रीणां त्रयं च—ठ.
4 क्रमतो—घ.
5 वसुवाक्यात्—घ.
6 पयसा च—ग.
7 कर्षूत्रयं omitted in ठ.
8 वैष्णवे धर्मशास्त्रे अष्टकाप्रकरणं चतुःसप्ततितमम्—ज, ठ.

मातामहकर्षूत्रयं प्रत्येकं दध्यादीनामेकैकेन पूरयेत् । यद्यप्यत्र मातामहशब्दो न श्रूयते, तथापि अन्वष्टकानां [1]नवदैवत्यत्वावगमात् मातृपिण्डकर्षूणां मध्येऽभिधानात् स्थानप्रमाणाच्च पारिशेष्यान्मातामहविषयत्वमासां सिध्यति । न च पूर्वोक्तानामेव षण्णां दध्यादिभिरपि पूरणमिति [2]मन्तव्यम्; तासां [3]द्रव्यान्तरावरोधेन नैराकाङ्क्ष्यात्; षट्संख्यावरोधेन त्रित्वसंख्यानर्हत्वाच्च ॥ ७ ॥ एवं नवापि कर्षूस्तत्तद्द्रव्येण पूरयित्वा, "एतद् [4]भवद्भ्यः" इत्यादिमन्त्रं जपेत् ॥ ८ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीलम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[6]श्रीरामपण्डितात्मज-
[6]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
चतुःसप्ततितमोऽध्यायः

[1] नवदैवत्यावगमात्—घ.
[2] सभ्यम्—ग.
[3] द्रव्यान्तराविरोधेन—घ.
[4] भवतीभ्यो यन्मद्रम्—ग.
[5] श्रीविष्णुस्मृतिविवृतौ चतुःसप्ततितमोऽध्यायः—घ, च
[6] श्री omitted in ग.

# पञ्चसप्ततितमोऽध्यायः

**पितरि जीवति यः [1]श्राद्धं कुर्यात्, स येषां पिता कुर्यात् तेषां कुर्यात् ॥ १ ॥**

उक्ते श्राद्धविधौ देवतानिर्णयाय पञ्चसप्ततितममध्यायमारभते । तत्र जीवत्पितृककर्तव्यश्राद्धे[2] तमाह । जीवत्पितृकस्य

"उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥"

इत्यादौ यत्र यत्र श्राद्धं प्राप्नोति, तत्र तत्रासौ पितृकर्तृकश्राद्धदेवताभ्यः कुर्यात् । पितुरेव पितरो मातरो मातामहाश्च जीवत्पितृककर्तव्यश्राद्धे [3]देवता इत्यर्थः । यत्तु,

"सपितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किंचिद्द्यादिति श्रुतिः ॥"

इति **कात्यायनीयं**, तत् "उद्वाहे" इत्यादि**मैत्रायणीयपरिशिष्टा**दिपरिगणितनिमित्तव्यतिरिक्तविषयम् । यच्च,

"अष्टकासु च संक्रान्तौ मन्वादिषु युगादिषु ।
चन्द्रसूर्यग्रहे पाते स्वेच्छया पूज्ययोगतः ॥
जीवत्पिता नैव कुर्यात् [4]काम्यं श्राद्धं तथाखिलम् ।
दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात् तिलैः कृष्णैश्च तर्पणम् ॥"

इति **क्रतुलौगाक्ष्योः** विशेषपरिगणनं, तत् निषिद्धातिरिक्तमातृसपिण्डनैकोद्दिष्टाद्यभ्यनुज्ञानाय । अन्यथा

"अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातृश्राद्धं ततः कुर्यात् पितर्यपि च जीवति ॥"

1 श्राद्धे—घ.
2 श्राद्धमेवाह—घ.
3 श्राद्धदेवता—घ.
4 श्राद्धं काम्यं—ग.

इत्यनेन मृताहादिश्राद्धमेवापद्येत, न नवश्राद्धादि; प्रतिप्रसवाभावात्। तस्मात् यथोक्तमेव साधीयः। न जीवत्येवेति नियमः; पतिते पितरि मृतेऽपि पितामहादीनामेव देवतात्वस्मरणात्। यथाह **कात्यायनः**—

" वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात् तेभ्यो दद्यात् स्वयं सुतः॥"

इति। पतितश्चात्र अपपात्रितः; अनपपात्रितस्य तु

" गोब्राह्मणहतानां तु पतितानां तथैव च।
ऊर्ध्वं संवत्सरात् कुर्यात् सर्वमेवौर्ध्वदेहिकम्॥"

इत्यादिना श्राद्धविधानात्। तथा ब्राह्मणादिहतेऽपि;

" ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्ययम्॥"

इति **स्मरणात्**। अस्यार्थः—ब्राह्मणादिहते पितरि संवत्सरानन्तरं तदौर्ध्वदेहिकविधानात् तेन सह पितामहादिश्राद्धासंभवात् तावत्कालं पितामहश्राद्धलोपप्रसक्तौ पौत्रेण तदधिकारप्राप्तं श्राद्धं स्वयं कर्तव्यमित्युच्यते। एवमपपात्रिते पतिते पितरि जीवति पूर्वोक्तन्यायेन पितामहश्राद्धं कर्तव्यम्। मृते तु तस्मिन् **देवलमते** तत्स्थाने विष्णुमुच्चार्य ततः पराभ्यां द्वाभ्यां श्राद्धं कर्तव्यम्। यथाह स एव—" माता म्लेच्छत्वमापन्ना पिता चापि कदाचन" इत्युपक्रम्य,

" पितरं विष्णुमुच्चार्य तदूर्ध्वं च पितामहम्।
तृतीयं च ततो ब्रूयात् पिण्डान् दद्यात् पृथक् पृथक्॥"

इति। **कात्यायनमते** तु " येभ्य एव" इति बहुत्वश्रवणात् पितामहादिभ्य एव त्रिभ्य इति। अनपपात्रिते तु तस्मिन् प्रायश्चित्तं चिकीर्षति कुर्वति वा तच्छुद्धिपर्यन्तं तदधिकारप्राप्तं पौत्रेण श्राद्धं न कर्तव्यम्। शुद्ध्यनन्तरं मृते तु तस्मिन् तस्यैव। एवं संन्यस्ते पितरि जीवति तदधिकारप्राप्तं सर्वश्राद्धं पौत्रेण कर्तव्यम्। मृते तु तस्यैव। एवं व्युत्क्रममृते सपिण्डनाभावपक्षे प्रेतत्वानपायेन वृद्धिश्राद्धाद्ययोग्यतया पुत्रजन्मादौ वृद्धिश्राद्धादिलोपे प्राप्ते प्रपितामहादीनामेव श्राद्धं प्रपौत्रेण कार्यम्। मृते तु पितामहे तेन सह पितुः सपिण्डनात् तस्यैव श्राद्धमित्येवमर्थवदेव वचनम्। अन्यथा उक्तनिमित्तेषु पितामहादीनामेव श्राद्धं कर्तव्यमिति नियमे तत्तच्छ्राद्धप्रतिपादकानेकवचनविरोधः स्यात्। तेषु तावत् " **गोब्राह्मणहतानाम्**" इत्येकमनन्तरमेवोदाहृतं **षट्त्रिंशन्मतीयम्**। तत्र गवादिहते पितरि पितामहस्यैव श्राद्धकरणे संवत्सरानन्तरं तदौर्ध्वदेहिकविधानमनर्थकमापद्येत; श्राद्धरूपप्रयोजनाभावात्। तथा

" संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तत् ॥ "

इत्यपरं **वायुपुराणीयं** वचनम् । तथा सपिण्डीकरणपक्षे 'यस्य पिता प्रेतः स्यात्' इत्यादि तृतीयं मूल एव स्पष्टमित्यलम् ।

'यः कुर्यात्' इत्यनेन पक्षान्तराणि सूचयति[1] । तत्र पित्रादित्रिकेऽन्यतरस्यापि जीवत्त्वे नाधिकार एवेत्येकः । तथाच **निगमे**—" एकस्मिन्नपि जीवत्यदानमिति कात्यायनः " इति । जीवन्तमुल्लङ्घ्ये-तरेभ्यस्त्रिभ्यो दद्यात् इति द्वितीयः । स च मूल एवाभिहितः । मृतमात्रस्यैव जीवदतिक्रमेण दद्यादिति तृतीयः । तथाच **भविष्यत्पुराणे**[2]—

" जीवमानेन देयं स्याद्यस्माद्भरतसत्तम ।
तस्माज्जीवत्पिता कुर्याद् द्वाभ्यामेव न संशयः ॥ "

इति । जीवदनुज्ञया ततोऽन्येषामिति चतुर्थः ; " कामं वा तदनुज्ञातः " इति **मनु**स्मरणात् । जीवन्तं भोजयित्वा परयोरिति पञ्चमः ; " पितरं भोजयित्वा तु पिण्डौ निपृणुयात् परौ " इति **यज्ञपार्श्वपरिशिष्टात्** । पितरमित्युपलक्षणम् । तेन पितामहं वा जीवन्तं भोजयित्वान्ययोः पिण्डौ देयौ ; " यो जीवति पितॄणां तं भोजयेत् स्वपितृस्थान इत्येके " इति **निगमात्**[3] । त्रीन् पिण्डान् निरुप्य जीवतः पिण्डं तेनैवादयेदिति षष्ठः । तथाच **यज्ञपार्श्वः**—

" त्रीन् वा पिण्डान् समारोप्य मध्यमं तेन भोजयेत्[4] ।
द्वौ पिण्डौ ब्राह्मणे दद्यादप्स्वावम्भसि वा क्षिपेत् ॥
उभौ यदि व्यतीतौ तु जीवेच्च प्रपितामहः ।
पिण्डौ निपृणुयात् पूर्वौ भोजयेत् प्रपितामहम् ॥ "

इति । मध्यम इति प्रथमस्याप्युपलक्षणम् ; द्वौ पिण्डाविति लिङ्गात् । जीवति होमान्तं कृत्वा अन्येषां कुर्यादिति सप्तमः । तथाच **यज्ञपार्श्वः**—

" होमान्तः पितृयज्ञः स्याज्जीवे पितरि नामतः ।
पितरं भोजयित्वा वा पिण्डौ निपृणुयात् परौ ॥ "

इति । जीवतो होममात्रं पाणौ नाम्ना कार्यम् । नाम्नोत्सर्गपिण्डदानादि । परयोस्तु पिण्डादि सर्वं कार्यमिति । विशेषान्तरं च **श्राद्धकल्पलतायाम्** अस्माभिः प्रपञ्चितमिति नेहोच्यते ॥ १ ॥

1 करणं सूचयति । तत्रादित्रिके—ख, ग.
2 विष्णुपुराणे—घ.
3 मानवात्—ख, ग.
4 योजयेत्—घ.

**पितरि पितामहे च जीवति येषां पितामहः ॥ २ ॥ पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात् ॥ ३ ॥**

किंच जीवत्पितृपितामहकः पितामहकर्तृकश्राद्धदेवताभ्यो दद्यात्। तत्रापि पितामहस्यैव पितरो मातरो मातामहाश्च यथायथं ज्ञेयाः ॥ २ ॥ पितरि जीवतीत्यस्यापवादमाह। अयमभिसंधिः— पितुर्जीवत्पितृपितामहकत्वे पितामहीयपितृपितामहप्रपितामहानामेव श्राद्धदेवतात्वेन चतुर्थादिष्वपि 'येषां पिता' इति वचनात् तेषामेव श्राद्धप्राप्ताविदमुच्यते। पित्रादिषु त्रिषु जीवत्सु श्राद्धमेव न कुर्यात्। किंतु यत्र श्राद्धप्राप्तिस्तत्र तानेवार्चयेत् ॥ ३ ॥

**यस्य पिता प्रेतः स्यात् [1]स पित्रे पिण्डं निधाय पितामहात् परं द्वाभ्यां दद्यात् ॥ ४ ॥ यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां [2]पिण्डौ दत्त्वा पितामहपितामहाय दद्यात् ॥५॥ [3]यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात् ॥ ६ ॥**

व्युत्क्रममृते त्वाह। मृतपितृको जीवत्पितामहकश्च पितृपिण्डं दत्त्वा प्रपितामहवृद्धप्रपितामहाभ्यां पिण्डं दद्यात्। पितृमात्रस्यैव वा दद्यात्; "पितामहोऽपि जीवेद्वै पितर्येव समापयेत्" इति हारीतीयात् ॥ ४ ॥ मृतपितृपितामहको जीवत्प्रपितामहकश्च पितृपितामहयोः पिण्डौ दत्त्वा वृद्धप्रपितामहाय पिण्डं दद्यात् ॥ ५ ॥ यो जीवत्पितृप्रपितामहकः स पितामहपिण्डं दत्त्वा वृद्धप्रपितामहतत्पित्रोः पिण्डं दद्यात् ॥ ६ ॥

**मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः।**
**मन्त्रोहेण यथान्यायं शेषाणां मन्त्रवर्जितम् ॥ ७ ॥**

**इति [4]श्रीविष्णुस्मृतौ पञ्चसप्ततितमोऽध्यायः**

पूर्वोक्तविध्यतिदेशमाह। येन विधिना यत्राष्टकादौ व्युत्क्रममृतौ च यथा पित्रादिश्राद्धमुक्तम्, तथैव तत्र तेन क्रमेण मातामहानामपि श्राद्धं कुर्यात्। तद्यथा—"पितरो यत्र पूज्यन्ते तत्र मातामहा अपि" इति

[1] पितामहः प्रपितामहश्च जीवेत् स पित्रे पिण्डं निधाय प्रपितामहात्परं—ठ. [2] पिण्डं—घ.

[3] यस्य पितामहः प्रेतः प्रपितामहो जीवेत् स पित्रे पिण्डं निधाय पितामहात् परमेकस्मै पिण्डं दद्यात्। यस्य पिता प्रपितामहश्च प्रेतौ स्यातां पितामहो जीवेत् स पित्रे पिण्डं निधाय पितामहादूर्ध्वं द्वाभ्यां दद्यात्। यस्य पितामहो वृद्धप्रपितामहश्च प्रेतौ स्यातां पिता प्रपितामहश्च जीवेत् स पितामहाय पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्—ठ.

[4] वैष्णवे धर्मशास्त्रे श्राद्धयुक्तिप्रकरणं पञ्चसप्ततितमम्—ज, ठ.

वचनेन जीवदर्जं वत्पितृकयोरविशेषेण मातामहश्राद्धं प्राप्तम्। तत्र सर्वं पूर्वोक्तं विश्वेदेवादिविसर्जनान्तमतिदिश्यते। मातामहे जीवति तत्पितृणामेव। मातामहप्रमातामहयोर्जीवतोः प्रमातामहपितृणाम्। त्रिषु जीवत्सु नैव श्राद्धम्। किंतु पूजनभोजनयोरन्यतरदित्याद्युन्नेयम्। एवमन्वष्टकावृद्ध्यादौ यत्र मातृश्राद्धं पृथक् प्राप्तं, तत्रान्यतरस्या जीवित्वे अयमेव प्रकारस्तुल्यन्यायत्वादित्याहुः। बहुवचनं त्रित्वाभिप्रायेण। यथाह **पुलस्त्यः**—

"मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः॥"

इति। पितृवत्; नित्यं पार्वणं चेत्यर्थः;

"पार्वणं कुरुते यस्तु केवलं पितृकारणात्।
मातामहं न कुरुते पितृहा स प्रजायते॥"

इति **ब्राह्मात्**। अस्यापवादमाह **कात्यायनः**—

"कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम्।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः॥"

इति। कर्षूसमन्वितं सपिण्डीकरणम्। पुत्रिकापुत्रे विशेषमाह **मनुः**—

"मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः॥"

इति। विशेषान्तरमाह **जातूकर्ण्यः**—

"प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश॥"

इति। तच्च यत्र नाममन्त्रेषु वैदिकमन्त्रेषु वा 'पितॄनावाहयिष्ये' "शुन्धन्तां पितरः" इत्यादौ पितृशब्दः तत्र यथान्वयं प्रथमान्ते प्रथमान्तं द्वितीयान्ते द्वितीयान्तमित्यादिप्रकारेण मातामहशब्दस्योहेन कार्यम्। ऊहापवादमाह। शेषाणां पितृव्यमातुलभ्रात्रादीनां श्राद्धममन्त्रकमेव; पितृपदवन्मन्त्ररहितमेव कुर्यात्। तेन च "शुन्धन्तां पितरः" इत्यादिमन्त्रसाध्यं क्रियामात्रमेव कार्यम्; न मन्त्रप्रयोग इति॥ ७॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डिता**त्मज-[2]**श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां**
**पञ्चसप्ततितमोऽध्यायः**

[1] श्रीविष्णुस्मृतिविवृतौ पञ्चसप्ततितमोऽध्यायः—घ, च.

[2] श्री omitted in ग.

**अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ चेति ॥ १ ॥**

**[1]एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।**
**श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥ २ ॥**

**इति [2]श्रीविष्णुस्मृतौ षट्सप्ततितमोऽध्यायः**

श्राद्धकालान् षट्सप्ततितमाध्यायेनाह । अमावास्याः द्वादश । तिस्र इति "हेमन्तशिशिरयोः चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इति शाखान्तरीयचतुष्ट्वनिराकरणार्थम् । तत्र च फाल्गुनकृष्णपक्षीया निरस्यते; "ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः" इति **कात्यायनीयात्** । अष्टकानामनु भवाः अन्वष्टकाः नवम्य इति । अनेनैव त्रित्वसिद्धौ पुनर्वचनं तिसृणां सप्तमीनां ग्रहणार्थम्; "पूर्वेद्युः पितृभ्यो दद्यात्" इति **आश्वलायनीयात्** । माघीति आषाढीकार्त्तिकीवैशाखीनामुपलक्षणम्;

"आषाढीकार्त्तिकीमाघीवैशाखीषु नराधिप
श्राद्धं कुर्यात् प्रयत्नेन तदनन्तफलं स्मृतम् ॥"

इति **ब्राह्मात्** । अन्ये तु माघीति प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशीविशेषणमाहुः । तत्र माघी मघायुक्तेत्यर्थः । प्रौष्ठपद्याः पौर्णमास्या ऊर्ध्वं कृष्णा त्रयोदशी केवलैव; 'प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः' इति वक्ष्यमाणत्वात् । मघायोगे तु फलविशेषः; **ब्राह्मे** "आश्वयुज्यां च कृष्णायां त्रयोदश्यां मघासु च" इत्युपक्रम्य "यत्र साक्षात्तु पितरो गृह्णन्त्यमृतमक्षयम्" इत्यभिधानात् । तत्र हस्तसंस्थे रवौ गजच्छायेति;

"यदेन्दुः पितृदेवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत् सा हि गजच्छाया प्रकीर्तिता ॥"

[1] एतानि श्राद्धकालानि—ज, ठ.
[2] वैष्णवे धर्मशास्त्रे नित्यश्राद्धप्रकरणं षट्सप्ततितमम्—ज, ठ

इति **स्मरणात्** । व्रीहिपाकः शरत् । यवपाको वसन्तः । तत्र नवाभ्यां व्रीहियवाभ्यां श्राद्धं नित्यम्;

"व्रीहिपाके च कर्तव्यं यवपाके च पार्थिव ।
न तानद्युर्महाराज विना श्राद्धं कथंचन ॥"

इति **विष्णुधर्मोत्तरात्** । चकारात् महालयापरपक्षादीनां ग्रहणम्; "शाकेनाप्यपरपक्षं नातिक्रामेत्" इति **स्मरणात्** ।

[1]अत्रैव पाठान्तरमप्याहुः—"तिस्रोऽष्टकास्तिस्रः पूर्वेद्युः प्रोष्ठपदे हेमन्तशिशिरयोरप्यपरपक्षेषु त्रयोदशी व्रीहिभिर्यवैर्वा योगे" इति । हेमन्तशिशिरयोस्त्रिष्वपरपक्षेषु तिस्रोऽष्टका इत्याद्यन्वयः । प्रोष्ठपदे त्रयोदशीत्यन्वयः । यद्यपि प्रोष्ठपदेनाप्यष्टकान्वयः संभवति, संनिधानात् शास्त्रान्तरदर्शनाच्च; तथापि नासावभिप्रेतः, त्रित्वविरोधात् । योगः; व्रीहियवयोः प्राप्तिः । अन्ये पुनरन्यथा पठन्ति—"माघीपौर्णमासीप्रौष्ठपद्यूर्ध्वंकृष्णत्रयोदशी मघात्रयोदशी व्रीहिभिर्यवैर्वा यागः[2]" इति । यागः; आग्रयणेष्टिः । तदनन्तरं श्राद्धमित्यर्थः ॥ १ ॥

एषां नित्यत्वमाह । एतान् पूर्वोक्तान् अमावास्यादीन् श्राद्धविषयान् प्रजापतिः परमात्मा प्राहेति प्रसिद्धौ । तत्र हेतुमाह—एतेषु कालेषु श्राद्धमकुर्वन् नरकमाप्नोति[3] इति । यथाह **मनुः**—

"न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः ।
इन्दुक्षये मासि मासि प्रायश्चित्तीयते हि सः ॥

इति । [4]एवमन्यत्राप्यकरणे प्रत्यवाय ऊह्यः ॥ २ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[6]**श्रीरामपण्डिता**त्मज-[6]**श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां** षट्सप्ततितमोऽध्यायः

1 तत्रैव—ख. 2 योगः—घ. 3 आप्नुयात्—ङ.
4 This passage omitted in घ.
5 श्रीविष्णुस्मृतिविवृतौ षट्सप्ततितमोऽध्यायः—घ, च. 6 श्री omitted in ग.

# सप्तसप्ततितमोऽध्यायः

**आदित्यसंक्रमणम् ॥ १ ॥ विषुवद्द्वयम् ॥ २ ॥ विशेषेणायन-द्वयम् ॥ ३ ॥ व्यतीपातः ॥ ४ ॥ जन्मर्क्षम् ॥ ५ ॥ अभ्युदयश्च ॥ ६ ॥**

नित्यश्राद्धकालानुक्त्वा नैमित्तिकश्राद्धकालान् सप्तसप्ततितमाध्यायेनाह । आदित्यस्य राशेः राश्यन्तर-गमनं संक्रमणम् । अदित्यग्रहणं चन्द्रादिसंक्रमणनिवृत्त्यर्थम् ; तत्र **जैमिनिना**

"नक्षत्रराश्यो रविसंक्रमे स्युरर्वाक् परत्रापि रसेन्दुनाड्यः (१६) ।
पुण्यास्तथेन्दोस्त्रिधरापलैर्युगेकैव नाडी (१/१३) मुनिभिः शुभोक्ता ॥
नाड्यश्चतस्रः सपलाः कुजस्य (४/१) बुधस्य तिस्रो मनवः पलानि (३/१४) ।
सार्धाश्चतस्रः पलसप्तयुक्ताः (४½/७) गुरोश्च शुक्रे सपलाश्चतस्रः (४/१) ॥
द्विनागनाड्यः पलसप्तयुक्ताः (८२/७) शनैश्चरस्याभिहिताः सुपुण्याः ।
आद्यन्तभागे जपदानहोमं कुर्वन्नवाप्नोति नरेन्द्रधाम ॥"

इति कालत्रयेऽपि कर्मत्रयाभिधानेन श्राद्धकालाभावात् ॥ १ ॥ विषुवतोस्तुलामेषयोर्द्वयम् । यद्यपि संक्रमणेनैव प्राप्तिः, तथापि [1]फलातिशयाय पृथङ् निर्देशः ; "अनन्तं विषुवे श्राद्धम्" इति **स्मरणात्** ॥ २ ॥ अयनयोर्मकरकर्कटयोर्द्वयं विशेषेण श्राद्धकालः ; "अयने चाक्षयं स्मृतम्" इति **स्मरणात्** ॥ ३ ॥ व्यतीपातः ; सप्तदशो योगः । पारिभाषिको योगविशेषो वा ; यथाह **वृद्धमनुः**—

"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥"

इति । नागदैवतम् आश्लेषा । मस्तकं मृगशिरः । परिभाषान्तरमप्याह **नरसिंहः**—

"पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्यादिति शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥"

इति । पञ्चाननः सिंहः । पाशाभिधाना द्वादशी । करभं हस्तः ॥ ४ ॥ आत्मनः पुत्रस्य भार्यायाश्च जन्मनक्षत्रम् ; "आत्मपुत्रकलत्राणां जन्मर्क्षे श्राद्धमाचरेत्" इत्यादि**पुराणात्** । यद्यपि जन्मर्क्ष इति

[1] फललिप्सया—ग.

सामान्येनोक्तं, तथापि दुष्टग्रहपीडित इति द्रष्टव्यम्; "जन्मर्क्षे ग्रहपीडायां सर्वमानन्त्यमश्नुते" इति **मानवात्**; तद्व्यतिरेकेण जन्मर्क्षे श्राद्धनिषेधात्। यथा **महाभारते**—"नक्षत्रे च न कुर्वीत यस्मिन् जातो भवेन्नरः" इति; श्राद्धमित्यनुवर्तते ॥ ५ ॥ अभ्युदयः; पुत्रजन्मादिः। यथाह **गार्ग्यः**—

"गर्भाधाने पुंसवने सीमन्तोन्नयने तथा।
जातकर्माननालोकनामनिष्क्रमणादिषु ॥
अन्नप्राशनचूडासु तथोपनयनेऽपि च।
वेदव्रते समावृत्तौ विवाहे पुत्रकाम्ययोः ॥
गृहप्रवेशे चाधाने यज्ञे नव्यान्नभोजने।
देवारामतडागादिप्रतिष्ठासूत्सवेषु च ॥
महादानेषु सर्वेषु पाकयज्ञक्रियासु च।
आश्रमग्रहणे चैव होमेष्ट्यारम्भयोरपि ॥
वैश्वदेवारम्भणे चोपाकर्मोत्सर्गयोरपि।
दीक्षादिषु च सर्वेषु नान्दीश्राद्धं समाचरेत् ॥"

इति। चकारात् क्षयाहादीनां ग्रहणम्;

"मातापित्रोः क्षयाहे च श्राद्धार्हद्रव्यविप्रयोः।
कृष्णपक्षे श्राद्धरुचौ श्राद्धं कुर्यात् प्रयत्नतः ॥"

इति **स्मरणात्** ॥ ६ ॥

**[1]एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः।**
**श्राद्धमेतेषु [2]यद्दत्तं तदानन्त्याय कल्पते ॥ ७ ॥**

एषां नैमित्तिकत्वमाह। एते संक्रान्त्यादयः कालाः काम्याः। काम इच्छा श्राद्धरुचिः; तामनुसरन्तीति काम्याः। यथा श्राद्धेच्छायां सत्यामैच्छिकं श्राद्धमनुष्ठीयते, तथा संक्रान्त्यादिकालप्राप्तावपीदमनुष्ठेयमित्येषां नैमित्तिकत्वं वाच्यम्। अत एवैषामिच्छासमभिव्याहारेण नैमित्तिकत्वं स्पष्टीकृतं **मार्कण्डेयेन**—

"विशिष्टब्राह्मणप्राप्तौ सूर्येन्दुग्रहणेऽयने।
विषुवे रविसंक्रान्तौ व्यतीपाते च पुत्रक ॥

[1] एतानि—ठ. [2] कर्तव्यं पितृणां तृप्तिकारकम्—ज.

श्राद्धार्हद्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने ।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छया ॥"

इति । यथा श्राद्धेच्छारूपे निमित्ते श्राद्धं क्रियते, तथा ग्रहणादिनिमित्तेष्वपि कार्यमित्यर्थः ; अन्यथा अकरणे प्रत्यवायश्रवणानुपपत्तेः । तथाच **लिङ्गपुराणे**—

"सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥"

इति । यद्वा नैमित्तिककाम्यत्वमेषाम् ; जातेष्टिवत् संवलिताधिकारत्वात् । तदेव च स्पष्टीकृतं **कूर्मपुराणे**—

"नैमित्तिकं तु कर्तव्यं ग्रहणे चन्द्रसूर्ययोः ।
बान्धवानां च मरणे नारकी स्यादतोऽन्यथा ॥
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु ।
अयने विषुवे चैव व्यतीपातेऽप्यनन्तकम् ॥
संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि ।
नक्षत्रेषु च सर्वेषु कार्यं काम्यं विशेषतः ॥"

इति । तत्प्रशंसामाह । एतेषु संक्रान्त्यादिकालेषु यद्दत्तं श्राद्धं तदनन्ततृप्तिकं भवति ॥ ७ ॥

**संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।**
**[1]तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥ ८ ॥**
**राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।**
**गुणवत्सर्वकामीयं पितॄणामुपतिष्ठते ॥ ९ ॥**

## इति [2]श्रीविष्णुस्मृतौ सप्तसप्ततितमोऽध्यायः

श्राद्धे निषिद्धकालमाह । विचक्षणैः निषेधशास्त्रविद्भिः संध्यायां रात्रौ च श्राद्धं न कार्यम् । संध्यानिषेधात् संध्यासामीप्यमपि निषिध्यते "सायाह्नेऽप्यथवा कुर्युर्नातिसंध्यासमीपतः" इति **स्मरणात्** । गौणकालतया तु तस्यापि ग्रहणम्; "स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वतया विधिः" इति **स्मरणात्** । आरम्भवत् समापनमपि निषिद्धम्; "न च नक्तं श्राद्धं कुर्वीत; आरब्धे चाभोजनमा समापनात्"

[1] द्वयोरपि—ठ.

[2] वैष्णवे धर्मशास्त्रे काम्यश्राद्धप्रकरणं सप्तसप्ततितमम्—ज, ठ.

इति **आपस्तम्बीयात्** । अस्यार्थः—श्राद्धे समारब्धे कुतश्चित् कारणात् विलम्बे मध्ये यदि सूर्यास्तमयस्तदा श्राद्धकर्तुरभोजनमुपवासो यावत् परेद्युः पिण्डदानं भवति; न तु रात्रौ समापनमिति । प्रतिप्रसवमाह । संध्यायां रात्रौ वा यदि सूर्याचन्द्रमसोर्ग्रहणं भवति, तदा तन्निमित्तं श्राद्धं भवत्येव । राहुदर्शनं पुत्रजन्मनोऽप्युपलक्षणम्;

"पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि ।
राहोश्च दर्शने श्राद्धं प्रशस्तं नान्यदा निशि ॥"

इति **स्मरणात्** ॥ ८ ॥

ग्रहणश्राद्धं प्रशंसति । राहुदर्शनं चन्द्रसूर्योपरागः । तत्र कृतं श्राद्धं पितॄणां यावच्चन्द्रतारकावस्थानमुपतिष्ठते । कर्तुश्च गुणातिशयवत्सर्वकामसाधनं भवतीति ॥ ९ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[2]**श्रीरामपण्डिता**त्मज-[2]**श्रीनन्दपण्डित**कृतौ **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां**
सप्तसप्ततितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां सप्तसप्ततितमोऽध्यायः—घ, च.    [2] श्री omitted in ग.

## अष्टसप्ततितमोऽध्यायः

**सततमादित्येऽह्नि श्राद्धं कुर्वन्नारोग्यमाप्नोति ॥ १ ॥ सौभाग्यं चान्द्रे ॥ २ ॥ समरविजयं कौजे ॥ ३ ॥ सर्वान् कामान् बौधे ॥ ४ ॥ विद्यामभीष्टां जैवे ॥ ५ ॥ धनं शौक्रे ॥ ६ ॥ जीवितं शानैश्चरे ॥ ७ ॥**

क्रमप्राप्तान् काम्यश्राद्धकालान् अष्टसप्ततितमाध्यायेनाह । आदित्यवारे श्राद्धं सार्वकालिकारोग्यहेतुः[1] ॥ १ ॥ चन्द्रवारे सौभाग्यं जनप्रियत्वम् ॥ २ ॥ भौमवारे संग्रामे शत्रुजयम् ॥ ३ ॥ बुधवारे धनपुत्रादिकामान् ॥ ४ ॥ गुरुवारे स्वाभीष्टां विद्याम् ॥ ५ ॥ शुक्रवारे [2]धनं सुवर्णादि ॥ ६ ॥ शनिवारे दीर्घमायुः प्राप्नोतीति प्रत्येकं संबध्यते । बवादिकरणेष्वप्येतान्येव फलानि ज्ञेयानि ;

> " सूर्यादिवासरे यद्यच्छ्राद्धकृल्लभते फलम् ।
> बवादिकरणेऽप्येतच्छ्राद्धकृल्लभते फलम् ॥ "

इति **बार्हस्पत्यात्** ॥ ७ ॥

**स्वर्गं कृत्तिकासु ॥ ८ ॥ अपत्यं रोहिणीषु ॥ ९ ॥ ब्रह्मवर्चस्यं सौम्ये ॥ १० ॥ कर्मसिद्धिं [3]रौद्रे ॥ ११ ॥ भुवं पुनर्वसौ ॥ १२ ॥ पुष्टिं पुष्ये ॥ १३ ॥ श्रियं सार्पे ॥ १४ ॥ सर्वान् कामान् पैत्र्ये[4] ॥ १५ ॥ सौभाग्यं भाग्ये ॥ १६ ॥ धनमार्यमणे ॥ १७ ॥ [5]ज्ञातिश्रैष्ठ्यं हस्ते ॥ १८ ॥**

नक्षत्राण्याह । स्वर्गम् इन्द्रादिलोकसुखम् ॥ ८ ॥ अपत्यं पुत्रादि ॥ ९ ॥ सौम्यं मृगशिरः ; तस्मिन् ब्रह्मवर्चस्यं ब्रह्मतेजः । ओजो वा ॥ १० ॥ कर्मणाम् ऐहिकानां सिद्धिः फलप्राप्तिः । शौर्यं वा । रौद्रम् आर्द्रा ॥ ११ ॥ भुवम् ; क्षेत्रादिरूपाम् ॥ १२ ॥ पुष्टिः ; अवयवोपचयः । बलं वा ॥ १३ ॥

[1] सौभाग्यहेतुः added in ख.
[2] सुवर्णादिधनम्—ख, ग.
[3] रौद्रे कर्मणां सिद्धिम्—ज, ठ.
[4] पित्र्ये—ठ.
[5] जाति—ज, ठ.

सार्पम् आश्लेषा। तत्र शोभां संपदं च। पुत्रं वा ॥ १४ ॥ पैत्र्यं मघा; [1]तस्मिन् सर्वान् कामान्। श्रैष्ठ्यं वा ॥ १५ ॥ भाग्यं पूर्वफल्गुनी। सौभाग्यं व्याख्यातम् ॥ १६ ॥ आर्यमणम् उत्तरफल्गुनी। तत्र धनं समृद्धिं वा ॥ १७ ॥ ज्ञातिषु सपिण्डेषु श्रेष्ठत्वम् ॥ १८ ॥

**रूपवतः सुतांस्त्वाष्ट्रे ॥ १९ ॥ वाणिज्यसिद्धिं स्वातौ ॥ २० ॥ कनकं विशाखासु ॥ २१ ॥ मित्राणि मैत्रे ॥ २२ ॥ राज्यं शाक्रे ॥ २३ ॥ कृषिं मूले ॥ २४ ॥ समुद्रयानसिद्धिमाप्ये ॥ २५ ॥ सर्वान् कामान् वैश्वदेवे ॥ २६ ॥**

त्वाष्ट्रं चित्रा। रूपवतः सुन्दरान्। शुभं वा ॥ १९ ॥ वाणिज्यं क्रयविक्रयौ। तयोः सिद्धिः फलप्राप्तिः। अप्रतिहताज्ञतां वा ॥ २० ॥ कनकं सुवर्णम्। वाणिज्यकृषिकुसीदगोरक्षा वा ॥ २१ ॥ मैत्रम् अनुराधा। तत्र मित्राणि सुहृदः। अरोगित्वं वा ॥ २२ ॥ शाक्रं ज्येष्ठा। तत्र राज्यम्। यशो वा ॥ २३ ॥ कृषिं कृषिफलम्। निःशोकतां वा ॥ २४ ॥ समुद्रयानं पोतः। तत्फलप्राप्तिः आप्ये पूर्वाषाढासु। ब्रह्मलोकप्राप्तिं वा ॥ २५ ॥ वैश्वदेवम् उत्तराषाढा। तत्र सर्वान् कामान्। धनं वा ॥ २६ ॥

**श्रैष्ठ्यमभिजिति ॥ २७ ॥ सर्वान् कामान् श्रवणे ॥ २८ ॥ [2]लवणं वासवे ॥ २९ ॥ आरोग्यं वारुणे ॥ ३० ॥ कुप्यद्रव्यमाजे ॥ ३१ ॥ गृहमाहिर्बुध्न्ये ॥ ३२ ॥ गाः पौष्णे ॥ ३३ ॥ [3]तुरङ्गमानाश्विने ॥ ३४ ॥ जीवितं याम्ये ॥ ३५ ॥**

अभिजित् उत्तराषाढायाश्चतुर्थः पादः श्रवणस्याद्यं घटीचतुष्टयम्। एवमेकोनविंशतिदण्डात्मकः संधिभागः[4]। तत्र श्रेष्ठत्वम् ॥ २७ ॥ स्पष्टार्थम्। वेदान् वा[5] ॥ २८ ॥ वासवं धनिष्ठा। लवणं लवणक्रियासिद्धिः। [6]सौन्दर्यनिदानं वा। औषधफलावाप्तिं वा ॥ २९ ॥ वारुणं शतभिषक्। तत्रारोग्यम्। कुप्यं वा ॥ ३० ॥ आजं पूर्वा भाद्रपदा। तत्र कुप्यं ताम्रपित्तलादि। गा वा ॥ ३१ ॥ आहिर्बुध्न्यम् उत्तरा भाद्रपदा। तत्र गृहम्। अजा वा ॥ ३२ ॥ पौष्णं रेवती; तत्र गाः। अवीन् वेति **योगीश्वरः** ॥ ३३ ॥ आश्विनम् अश्विनी ॥ ३४ ॥ याम्यं भरणी। जीवितम् आयुः। आप्नोतीति प्रत्येकमत्रापि सबध्यते। विष्कम्भादियोगेष्वप्येतान्येव फलानीति न पृथगभिधानम्। यथाह **मरीचिः**—

[1] तत्र—ग.
[2] बलं—ज, ठ.
[3] तुरङ्गम्—Jolly's edition; तुरगान्—ठ.
[4] संविभागः—ख.
[5] च—ख.
[6] सौदर्य—घ.

" कृत्तिकादिषु ऋक्षेषु श्राद्धे यत् फलमीरितम् ।
विष्कम्भादिषु योगेषु तदेव फलमश्नुते ॥ "

इति ॥ ३५ ॥

**[1]गृहं सुरूपाः स्त्रियः प्रतिपदि ॥ ३६ ॥ [2]कन्यां वरदां द्वितीयायाम् ॥ ३७ ॥ सर्वान् कामांस्तृतीयायाम् ॥ ३८ ॥ [3]पशूं-श्चतुर्थ्याम् ॥ ३९ ॥ [4]सुरूपान् सुतान् पञ्चम्याम् ॥ ४० ॥ [5]द्यूतविजयं षष्ठयाम् ॥ ४१ ॥ [6]कृषिं सप्तम्याम् ॥ ४२ ॥ वाणिज्यमष्टम्याम् ॥ ४३ ॥ पशून् नवम्याम् ॥ ४४ ॥**

तिथीराह । गृहं [7]वास्तु सुन्दरीर्भार्याश्च प्रतिपच्छ्राद्धेनाप्नोति । कन्या वा ; योगिस्मरणात् । सुरूपान् पुत्रान् वा ; मानवात् ॥ ३६ ॥ वरदाम् ; अभीष्टदां कन्याम् । जामातॄन् वा ॥ ३७ ॥ सर्वे कामाः पशुपुत्रादयः । पशून् वा ; योगिस्मरणात् । वन्दिनः ; मानवात् ॥ ३८ ॥ पशून् ; अजादीन् क्षुद्रान् । सत्सुतान् वा[8] ॥ ३९ ॥ सुन्दरान् पुत्रान् । द्यूतजयं वा ॥ ४० ॥ द्यूतमक्षादिभिः । तत्र ग्लहविजयम्[9] । कृषिफलं वा ॥ ४१ ॥ कृषिम् ; कृषिफलम् । वाणिज्यं वा ॥ ४२ ॥ वाणिज्यम् ; क्रयविक्रयफलम् । द्विशफान् वा ॥ ४३ ॥ पशून् ; एकशफान् अश्वादीन् ; " एकशफांस्तथा " इति योगिस्मरणात् ॥ ४४ ॥

**वाजिनो दशम्याम् ॥ ४५ ॥ [10]पुत्रान् ब्रह्मवर्चस्विन एकादश्याम् ॥ ४६ ॥ कनकरजतं[11] द्वादश्याम् ॥ ४७ ॥ सौभाग्यं त्रयोदश्याम् ॥ ४८ ॥**

वाजिनः अश्वान् । ब्रह्मवर्चस्विनः पुत्रान् वा ; योगिस्मरणात् । द्विखुरान् वा ; मानवात् ॥ ४५ ॥ ब्रह्मतेजोयुतान् पुत्रान् । स्वर्णरूप्ये वा ; योगिस्मरणात् । केवलं रूप्यं वा ; मानवात् ॥ ४६ ॥ कुप्यं वा ; योगिस्मरणात् । ब्रह्मवर्चस्विनः पुत्रान् वा । [12]स्वर्णरूप्ये वा ; मानवात् ॥ ४७ ॥ सौभाग्यं ज्ञातिश्रैष्ठ्यम् ; योगिस्मरणात् ॥ ४८ ॥

[1] गृहे—ठ. [2] कन्यावरं—ठ. [3] यशः—ज, ठ.
[4] श्रियं पञ्चम्याम्—ठ. [5] सुत—ज. [6] पुष्टिं—ज, ठ.
[7] वा सुखहेतु—ख, ग. [8] कृषिफलं वा added in ख, ग. [9] ग्लहविषयम्—घ.
[10] ब्रह्मवर्चस्विनः पुत्रान्—Jolly's edition ; ब्रह्मवर्चस्विनस्तु—ठ.
[11] रजतं omitted in ज ; रजते—ठ. [12] स्वर्णरूप्यं—ख, ग.

**[1]सर्वान् कामान् पञ्चदश्याम् ॥ ४९ ॥**

सर्वे कामाः पूर्वोक्ताः । पञ्चदश्यमावास्या । यद्यप्यविशेषेण मासपक्षौ गम्येते, तथापि माघभाद्रपदयोः कृष्णपक्षोऽवधेयः ;

"कालतः पूजितौ मासौ माघप्रोष्ठपदावुभौ ।
[2]पक्षयोरुभयोः पक्षो बहुलः श्राद्धपूजितः ॥"

इति **देवलस्मरणात्** । यस्तु,

"नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत [3]गृही पुत्रधनक्षयात् ॥
प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा ।
भरणीं कृत्तिकां चैव सर्पं चैव विशेषतः ।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति ।"

इत्यादिना तिथिवारर्क्षविशेषे **गार्गीयः** श्राद्धनिषेधः, स सपिण्डकश्राद्धविषयः ;

"भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात् तिलतर्पणम् ॥"

इति **तस्यैव** वचनात् । स चायं निषेधः तत्तन्निमित्तक एव श्राद्धे; नान्यनिमित्तके ;

"तिथिवारर्क्षयुक्तोऽयं दोषो यः समुदाहृतः ।
स तन्निमित्तके श्राद्धे नान्यश्राद्धे कदाचन ॥"

इति **अत्रिस्मरणात्** ॥ ४९ ॥

**शस्त्रहतानां [4]श्राद्धकर्मणि चतुर्दशी शस्ता ॥ ५० ॥**

[5]चतुर्दशीश्राद्धविषयमाह । शस्त्रमपमृत्युमात्रप्रदर्शनाय ;

"वृक्षारोहणलोष्टाद्यैर्विद्युज्ज्वालाविषादिभिः ।
नखिदंष्ट्रिविपन्नानां तेषां शस्ता[6] चतुर्दशी ॥"

1 सर्वकामान्—Jolly's edition.
2 पक्षयोः श्राद्धपक्षो हि—ग.
3 गृहे—ग.
4 श्राद्धकर्मणि omitted in ज.
5 चतुर्दश्योः—ग.
6 चैव—घ.

**इति प्राचेतसात्** । कर्मपदम् एकोद्दिष्टताप्रदर्शनाय ;

"चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणात् परम् ।
एकोद्दिष्टविधानेन तत् कार्यं शस्त्रघातिनः ॥"

**इति पाराशर्यात्** । चतुर्दश्याः प्राशस्त्येनान्यतिथावप्यभ्यनुज्ञायते :

"तेषां प्रत्याब्दिकं श्राद्धं स्मृत्युक्तं पार्वणं भवेत् ।
प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टविधानतः ॥"

**इति स्मरणात्** । तच्चैकोद्दिष्टमपि सदैवम् ;

"दैवयुक्तं तु तच्छ्राद्धं पितृणामक्षयं भवेत् ।
तच्छ्राद्धं दैवहीनं चेत् पुत्रदारधनक्षयः ॥"

**इति स्मरणात्** । शस्त्रहतानामिति बहुवचनात् द्वयोस्त्रयाणां वा शस्त्रघाते एकोद्दिष्टद्वयं त्रयं वा कार्यम् ; "एकस्मिन् द्वयोर्वैकोद्दिष्टविधिः" इति शङ्खस्मरणात् ; "त्रिष्वपि शस्त्रहतेषु पृथगेकोद्दिष्टम्[1]" इति **देवस्वामिवचनाच्च** । केचित्तु पार्वणमाहुः ;

"पित्रादयस्त्रयो यस्य शस्त्रघातैर्मृताः क्रमात् ।
स भूते पार्वणं कुर्यादाब्दिकानि पृथक् पृथक् ॥"

**इति पाराशर्यात्** । अनुमतं चैतत् **अपरार्केणापि**—"त्रयाणां तथात्वे पार्वणमेव" इति ॥ ५० ॥

**अपि [2]पितृगीते गाथे भवतः ॥ ५१ ॥**

**अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।**
**प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः ॥ ५२ ॥**
**मधूत्कटेन यः श्राद्धं पायसेन समाचरेत् ।**
**[3]कार्त्तिकं सकलं मासं प्राक्छाये[4] कुञ्जरस्य च ॥ ५३ ॥**

**इति [5]श्रीविष्णुस्मृतौ अष्टसप्ततितमोऽध्यायः**

[1] एकोद्दिष्टत्रयम्—ग.
[2] पितृगाथे—घ.
[3] कार्त्तिके सकलं वापि—ज ; कार्त्तिकं सकलं वापि—ठ.
[4] छायं—ज.
[5] वैष्णवे धर्मशास्त्रे काम्यविशेषश्राद्धप्रकरणमष्टसप्ततितम्—ज, ठ.

त्रयोदशीश्राद्धप्राशस्त्ये संमतिमाह । पितृभिः अग्निष्वात्तादिभिः गीते पठिते गाथे श्लोकौ ॥ ५१ ॥ ते आह । स कश्चिन्नरोत्तमः अस्मत्कुले पुत्रादिषु दौहित्रादिषु वा जायेतापि, यो वर्षासु कृष्णपक्षे त्रयोदश्याम् अवहितः सन् उत्कटमधुयुक्तेन पायसेन श्राद्धं कुर्यात् । कुलग्रहणात् मातामहश्राद्धं नित्यमाह;

"श्राद्धं न चैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तस्य ये यस्य प्रजां हिंसन्ति तत्र ते ॥"

इति कार्ष्णाजिनिस्मरणात् । न च "पितरो यत्र पूज्यन्ते तत्र मातामहा अपि" इत्यनेनैव सिद्धौ पुनरारम्भो व्यर्थ इति वाच्यम्; अस्मादेव ज्ञापकादन्यत्रानियमसिद्धेः वृत्तिकारविज्ञानेश्वराभ्यामभ्युपगमात् ॥ ५२ ॥

किंच सकलं कार्तिकं मासं मधुना पायसेन यः श्राद्धं दद्यात्, सोऽप्यस्मत्कुले जायेतेति कालान्तरमपि पित्रभीष्टमुक्तम् । विध्यन्तरमिदम् । न पूर्वस्य गौणकालविधिः; भेदप्रत्यायकचकारानुपपत्तेः । द्वितीययैव साकल्यावगतौ सकलपदं दर्शान्तस्य पूर्णिमान्तस्य चोपादानाय । देशविशेषमप्याह—प्राक्छाये कुञ्जरस्य चेति । कुञ्जरस्य गजस्य प्राक्छाये प्राची छाया प्राक्छायम्; "विभाषा सेनासुराच्छायाशाला-निशानाम्" इत्यनेन [1]पाक्षिकी नपुंसकता । प्राक्छाया च[2] अपराह्णे भवति । तत्रापि पितरो मधुपायसेन श्राद्धमिच्छन्ति । न चायं कालविशेष एव गजच्छायापर्यायः; "हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितम्" इति भारतीयकर्णव्यजनेतिविशेषणानुपपत्तेः ॥ ५३ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[4]श्रीरामपण्डितात्मज-[4]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
अष्टसप्ततितमोऽध्यायः

[1] पाक्षिकनपुंसकता—घ.
[2] वा—घ.
[3] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यामष्टसप्ततितमोऽध्यायः—घ, च.
[4] श्री omitted in ग.

## एकोनाशीतितमोऽध्यायः

**अथ न नक्तं गृहीतेनोदकेन श्राद्धं कुर्यात् ॥ १ ॥**

श्राद्धोपकरणानि एकोनाशीतितमाध्यायेनाह । तत्र वर्ज्योदकमाह । अथेति उपकरणप्रस्तावाय । रात्र्यन्तरितेन जलेन श्राद्धं न कुर्यात् । यद्यपि पूजाप्रकरणे इदमुक्तमेव, तथापि तस्य नित्यप्रकरणाम्नानात् नैमित्तिककाम्ययोरप्राप्त्या तत्प्राप्त्यै पुनरारम्भः । गङ्गोदकं विनैतदित्युक्तमेव । अनेनान्यदपि निषिध्यते ;

"दुर्गन्धि फेनिलं क्षारं पङ्किलं पल्वलोदकम् ।
न लभेद्यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ॥
यच्च सर्वार्थमुत्सृष्टं यच्चाभोज्यं निपानजम् ।
तद्वर्ज्यं सलिलं सर्वं सदैव श्राद्धकर्मणि ॥"

इति **मार्कण्डेयात्** । सर्वार्थमुत्सृष्टं प्रपादि ॥ १ ॥

**कुशाभावे कुशस्थाने काशान् दूर्वां वा दद्यात् ॥ २ ॥**

"भुवं तु शिथिलीकृत्य खनित्रेण विचक्षणः ।
आदद्यात् पितृतीर्थेन पठन् हुंफट् सकृत् सकृत् ।
अच्छिन्नाग्रानशुष्काग्रान् ह्रस्वांश्चैव प्रमाणतः ॥"

इत्यादिस्मृत्यन्तरोक्तलक्षणकुशाभावे कुशस्थाने कुशकार्ये काशान् दूर्वां वा नियुञ्ज्यात् । काशाभावे बल्बजा ग्राह्याः ; "कुशाभावे तु काशाः स्युस्तदभावे तु बल्बजाः" इति **स्मरणात्** ॥ २ ॥

**[1]वासोऽर्थे कार्पासोत्थं[2] सूत्रम् ॥ ३ ॥ दशां विसर्जयेत् यद्यप्यहतवस्त्रजा[3] स्यात्[4] ॥ ४ ॥**

[1] वाससोऽर्थे—ङ.
[2] कार्पासोर्णासूत्रे—ठ.
[3] वस्त्रजाम्—ङ.
[4] स्यात् omitted in—

" कौशेयं क्षौमकार्पासं दुकूलमहतं तथा ।
श्राद्धेष्वेतानि देयानि कामानाप्नोति पुष्कलान् ॥"

इत्युक्तवासोऽभावे तत्कार्ये कार्पाससंभवं सूत्रं देयम् । कार्पासत्वेन क्षौमादिसूत्रनिवृत्तिः ॥ ३ ॥ अहतवस्त्रोद्भवामपि दशां प्रान्तभागं वर्जयेत् । अनेन " दशामूर्णास्तुकां वा " इति शास्त्रान्तरीयदशा निवर्त्यते । अत एवास्वरसात् पक्षान्तरोत्कीर्तनम् 'ऊर्णास्तुकां वा' इति ॥ ४ ॥

**उग्रगन्धीन्यगन्धीनि कण्टकिजानि[1] च पुष्पाणि ॥ ५ ॥ [2]शुक्लानि सुगन्धीनि कण्टकिजान्यपि जलजानि[3] रक्तान्यपि दद्यात् ॥ ६ ॥**

व्याख्यातमेतत् पूजाप्रकरणे । पुनर्वचनं प्रकरणान्तरप्रापणाय । चकारात्

" कदम्बं बिल्वपत्रं च केतकीं वकुलं तथा ।
बर्बरीकृष्णपुष्पाणि श्राद्धकाले विवर्जयेत् ॥ "

इत्यादीनि गृह्यन्ते । वर्जयेदिति संबन्धः ॥ ५ ॥ प्रतिप्रसवमाह । स्पष्टार्थम् । अपिशब्दात्

" तुलसी शतपत्रं च भृङ्गराजं तथैव च ।
मरुवं मल्लिका चैव पितॄणां दत्तमक्षयम् ॥ "

इत्यादीनां ग्रहणम् ॥ ६ ॥

**[4]वसां मेदं च [5]दीपार्थे न दद्यात् ॥ ७ ॥ [6]घृतं तैलं वा दद्यात् ॥ ८ ॥**

वसामेदौ प्राण्यङ्गरसौ दीपार्थे न देयौ । चकारात् सार्षपादितैलमपि ; " घृताद्वा तिलतैलाद्वा नान्यद्द्रव्यात्तु दीपकम् " इति स्मरणात् ॥ ७ ॥ तैलं तिलोद्भवम् । वाशब्दात् ओषधीरसम् ; " घृतेन दीपो दातव्यस्तथा वाप्योषधीरसैः " शङ्खस्मरणात् ॥ ८ ॥

**जीवजं सर्वं धूपार्थे न दद्यात् ॥ ९ ॥ मधुघृतसंयुक्तं गुग्गुलुं दद्यात् ॥ १० ॥**

1 रक्तानि added in ख, ठ.
2 From शुक्लानि up to जलजानि omitted in ज ; सितानि—ठ.
3 जलजानीति—ख.
4 वसामज्जाद्यं—ठ.
5 दीपार्थ—ग.
6 तैलघृते—ठ.

जीवजं नखशृङ्गादि । सर्वं प्रशस्ताप्रशस्तप्राणिजम् ।

"घृतं न केवलं दद्याद् दुष्टं च तृणगुग्गुलुम् ।
धुष्टं चन्दनरालं च आज्यं गुग्गुलुधूपितम् ॥"

इत्यादि वा ॥ ९ ॥ संयुक्तम्; न पौर्वापर्येण; "तुरुष्कं गुग्गुलुं चैव घृताक्तं युगपद्दहेत्" इति स्मरणात् ॥ १० ॥

**चन्दनकुङ्कुमकर्पूरागरुपद्मकान्यनुलेपनार्थे ॥ ११ ॥ [1]न प्रत्यक्षलवणं दद्यात् ॥ १२ ॥ हस्तेन च घृतव्यञ्जनादि[2] ॥ १३ ॥**

कुङ्कुमं केसरम् । पद्मकं पद्मकाष्ठम् । शेषं प्रसिद्धम् । दद्यात् इति शेषः ॥ ११ ॥ लवणं विनापि पक्के शाकादौ तत्संस्काराय प्रत्यक्षलवणं न देयम् । किंतु तत्रैव मेलयेत् ॥ १२ ॥ घनीभूतं घृतं व्यञ्जनं च । आदिशब्दाद् दधिपायसादि च हस्तेन न देयम्; किंतु दर्व्यादिना ॥ १३ ॥

**तैजसानि पात्राणि दद्यात् ॥१४॥ विशेषतो राजतानि ॥१५॥**

तैजसानि कांस्यताम्राणि । न पित्तलादीनि ;

"नायसान्यपि कुर्वीत पैत्तलानि न चैव हि ।
न च सीसमयानीह शस्यन्ते त्रपुजान्यपि ॥"

इति शातातपीयस्मरणात् । ताम्रं यतिविषयम् ;

"करे कर्पटके चैव शिलायां ताम्रभाजने ।
वटार्काश्वत्थपत्रेषु गृही भुक्त्वैन्दवं चरेत् ॥"

इति गृहिणो निषेधात् ॥ १४ ॥ फलविशेषाय राजतानि पात्राणि कार्याणि । तानि च पित्र्ये । दैवे तु सौवर्णानि ; "भोजने हैमरौप्याणि दैवे पित्र्ये यथाक्रमम्" इति याम्यात् ॥ १५ ॥

**[3]खड्गकुतपकृष्णाजिनतिलसिद्धार्थकाक्षतानि [4]च पवित्राणि[5] रक्षोघ्नानि च निदध्यात् ॥ १६ ॥**

[1] प्रत्यक्षलवणं न—ठ.
[2] व्यञ्जनानि—ठ.
[3] खड्ग omitted in ज, ठ.
[4] च omitted in ठ.
[5] पवित्राणि omitted in ज.

खड्गः खड्गपात्रम् । कुतपः मध्याह्नाद्यष्टविधः ;

" मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिला गावो दौहित्रः कुतपाः स्मृताः ॥ "

इति । कृष्णमृगाजिनम् । तिलाः प्रसिद्धाः । सिद्धार्थकाः सर्षपाः । अक्षताः यवाः । चकारात् बृस्यादि ;

" उपमूलं सकृल्लूनान् कुशांस्तत्रोपकल्पयेत् ।
यवांस्तिलान् बृसी कांस्यमापः शुद्धैः समाहृताः ॥
पार्णराजतताम्राणि पात्राणि स्युः समिन्मधु ।
पुष्पं धूपं सुगन्धादि क्षौमं सूत्रं च मेक्षणम् ॥ "

इति **स्मृत्यन्तरात्** । एतानि पवित्राणि रक्षोघ्नानि । अजादीनि वक्ष्यमाणानि । चकारात्—

" उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम् ।
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ॥ "

इति **कार्ष्णाजिन्युक्तानि** । उच्छिष्टं पयः । शिवनिर्माल्यं गङ्गोदकम् । वान्तं मधु । मृतकर्पटम् कौशेयम् । दौहित्रो दुहितृसुतः ;

" दुहित्रं खड्गमृगस्य ललाटे यत् प्रदृश्यते ।
तस्य शृङ्गस्य यत् पात्रं दौहित्रमिति कीर्तितम् ॥ "

इति **शातातपीयं** वा ;

" अमावास्यां गते सोमे यत् तृणं गौस्तु खादति ।
तस्या गोर्यद्भवेत् क्षीरं तद् दौहित्रमुदाहृतम् ॥ "

इति **स्मृत्यन्तरीयं** वा । एतानि श्राद्धभूमौ निदध्यात् ॥ १६ ॥

**पिप्पलीमुकुन्दकभूस्तृणशिग्रुसर्षपसुरसासर्जकसुवर्चलकूश्माण्डालाबुवार्ताकपालक्योपोदकीतण्डुलीयककुसुम्भपिण्डालुकमहिषीक्षीराणि[1] वर्जयेत् ॥ १७ ॥**

पिप्पली कणा । तस्यां विकल्पः ; " [2]पिप्पली मरिचं चैव पटोलं बृहतीफलम् " इति **वायवीया**भ्यनुज्ञानात् । [3]मुकुन्दकः कुन्दुरुः[4], बिम्बीफलमिति यावत् । भूस्तृणं पत्रशाकविशेषः । शिग्रुः सौभाञ्जनः ।

[1] तृणासुर for तृणशिग्रु—ठ ; सर्जकसुवर्चल and उपोदकी omitted in ठ; पिण्डमूलक for पिण्डालुक—ग.
[2] पिप्पलीमरिचे—घ.
[3] कुमुदकः—ख.
[4] कुन्दरः—ग.

सर्षपः सिद्धार्थकः। राजसर्षप इत्येके ; "कुसुम्भं राजसर्षपम्" इति स्मरणात्। सुरसा निर्गुण्डी। सर्जकः अर्जुनः। अर्जक इति पाठे श्वेतपर्णासः। सुवर्चलं विड्लवणम्। कूश्माण्डं प्रसिद्धम्। अलाबु वर्तुलतुम्बी। वार्ताकं वृन्ताकं श्वेतं कृष्णं च।

"वृन्ताकं श्वेतवृन्ताकं मूलकं रक्तमूलकम्।
अलाबुं वर्तुलाकारं भुक्त्वा सांतपनं चरेत्॥"

इति देवलस्मरणात्। पालक्या; गाङ्गेयः पत्रशाकः। उपोदकी कलम्बी। तण्डुलीयकः अल्पमारिषः। कुसुम्भं [1]महाराजनम्, तस्य पत्रशाकम्। पिण्डालुकम्; सुस्तनीति भाषायाम्। महिषी निषिद्धोपलक्षणम्;

"आविकं मार्गमौष्ट्रं च सर्वमैकशफं च यत्।
माहिषं चामरं चाजं पयो वर्ज्यं विजानता॥"

इति ब्रह्माण्डात्। पयोग्रहणात् तद्विकाराणामपि निषेधः; सर्वशब्दग्रहणात्। माहिषे तु दधिपयसी। "तण्डुलीयकदानं च माहिषं च पयो दधि" इति भारद्वाजीयात्। न घृतम्; "महिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित्" इति सौमन्तवात्॥ १७॥

## राजमाषमसूरपर्युषितकृतलवणानि च॥ १८॥

राजमाषाः श्वेतमाषाः। मसूरः मङ्गल्यकः। पर्युषितं भक्ष्यमपि। कृतं कृत्रिमं लवणम्। चकारात् चणकादींश्च;

"कुलुत्थाश्चणकाः श्राद्धे तथा निष्पावकोद्रवाः।
कृष्णधान्यानि सर्वाणि वर्जयेच्छाणशिग्रुकान्।
न वर्जयेत् तिलांश्चैव मुद्गमाषांस्तथैव च॥"

इति स्मरणात्॥ १८॥

## कोपं परिहरेत्॥ १९॥ नाश्रु पातयेत्॥ २०॥ न त्वरां कुर्यात्॥ २१॥

कर्त्रादिधर्मानाह। कर्ता भोक्ता च क्रोधं परिहरेत्[2]॥ १९॥ अश्रुपातः रोदनम्; तन्न कार्यम्॥ २०॥ अर्वाद्यनुष्ठाने कर्त्रा भोजने च भोक्त्रा त्वरा न कार्या॥ २१॥

[1] महारजतम्—ख, ग.

[2] वर्जयेत्—ख, ग.

**घृतादिदाने तैजसानि पात्राणि खड्गपात्राणि [1]फल्गुपात्राणि च[2] प्रशस्तानि ॥ २२ ॥ अत्र च श्लोको भवति ॥ २३ ॥**

**सौवर्णराजताभ्यां च खड्गेनौदुम्बरेण वा ।**
**दत्तमक्षय्यतां याति फल्गुपात्रेण चाप्यथ ॥ २४ ॥**

**इति [3]श्रीविष्णुस्मृतौ एकोनाशीतितमोऽध्यायः**

परिवेषणादिपात्राण्याह । आदिशब्दात् व्यञ्जनदधिपायसादि । तेषां दाने तैजसानि ताम्रपित्तलादीनि; न लौहानि; "कालायसं विशेषेण निन्दितं पितृकर्मणि" इति आदित्यपुराणात् । पितृकर्मणीति सामान्योपादानात् पाकादिष्वपि निषेधः;

"न कदाचित् पचेदन्नमयःस्थालीषु पैतृकम् ।
अयसो दर्शनादेव पितरो विद्रवन्ति हि ॥"

इति तत्रैवाम्नानात् । अस्यापवादस्तत्रैव—

"फलानां चैव शाकानां छेदनार्थानि यानि तु ।
महानसेऽपि [4]शस्तानि तेषामेव तु संनिधिः ॥"

इति । खड्गपात्राणि खड्गशृङ्गनिर्मितानि । फल्गुपात्राणि दारुमयानि;

"पक्वान्नस्थापनार्थं तु शस्यन्ते दारुजान्यपि ।
दर्व्यादीन्यपि कार्याणि यज्ञियैरपि दारुभिः ॥"

इति आदित्यपुराणात् । चकारात् पाकार्घयोर्ग्रहणम् । आदित्यपुराणे—

"पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् ।
स्वर्णादिधातुजातेषु मृन्मयेष्वपि वा द्विजः ॥
अच्छिद्रेष्वविलिप्तेषु तथानुपहतेषु च ।
पूर्वं कृतोपयोगेषु मृन्मयेषु न तु क्वचित् ॥"

[1] फल्गुपात्राणि omitted in ठ.
[2] वा—ठ.
[3] वैष्णवे धर्मशास्त्रे श्राद्धोपकरणप्रकरणमेकोनाशीतितमम्—ञ, ठ.
[4] संस्थानि—ठ.

इति । उक्तार्थे वैजवापः—

" खादिरौदुम्बराण्यर्घ्यपात्राणि श्राद्धकर्मणि ।
अप्यश्ममृन्मयानि स्युरपि पर्णपुटानि वा ॥ "

इति ॥ २२ ॥ उक्तार्थे संमतिमाह । स्पष्टम् ॥ २३ ॥ तमेवाह । औदुम्बरं ताम्रम् । फल्गुपात्रं यज्ञियवृक्षनिर्मितम्[1] । शेषं प्रसिद्धम् ॥ २४ ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रेत्साहितश्रीवाराणसीवासिधर्माधिकारि[3]श्रीरामपण्डितात्मज-
[3]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
एकोनाशीतितमोऽध्यायः

[1] वृक्षकाष्ठमयम्—ख.

[2] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यामेकोनाशीतितमोऽध्यायः—घ, च.

[3] श्री omitted in ग.

# अशीतितमोऽध्यायः

**तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः शाकैः श्यामाकैः प्रियङ्गुभिर्नीवारैर्मुद्गैर्गोधूमैश्च[1] मासं प्रीयन्ते[2] ॥ १ ॥ द्वौ [3]मासौ मत्स्यमांसेन ॥ २ ॥ त्रीन् हारिणेन ॥ ३ ॥ चतुरश्चौरभ्रेण ॥ ४ ॥ पञ्च शाकुनेन ॥ ५ ॥ षट् छागेन ॥ ६ ॥ सप्त रौरवेण ॥ ७ ॥ अष्टौ पार्षतेन ॥ ८ ॥ नव गावयेन ॥ ९ ॥ दश माहिषेण ॥ १० ॥ एकादश तूपरेणाजेन ॥ ११ ॥ संवत्सरं गव्येन पयसा तद्विकारैर्वा ॥ १२ ॥**

अथ द्रव्यविशेषेण तृप्तिविशेषमशीतितमाध्यायेनाह । तिलादिषु तृतीयया नैरपेक्ष्यावगमात् द्रव्यान्तराभावेन यदा तावन्मात्रेण श्राद्धं क्रियते, तदेदं फलं बोध्यम् । संवलितैः करणे तु फलान्तरं कल्प्यम् । तत्र जलमात्रेण श्राद्धं स्मृत्यन्तरेऽभिहितम्—

"तृणादि वा गवे दद्यात् पिण्डान् वापि विनिर्वपेत् ।
तिलोदकैः पितॄन् वापि तर्पयेद्विधिपूर्वकम् ॥"

इति । शाकैः श्राद्धीयैः । ते च [4]वायवीये—

"कालशाकं महाशाकं द्रोणशाकं तथार्द्रकम् ।
बिल्वामलकमृद्वीकापनसाम्रातदाडिमम् ।
भव्यपारेवताक्षोटखर्जूरं च कशेरुकम् ॥"

इत्यादयः । शेषं प्रसिद्धम् ॥ १ ॥ मत्स्याः सिंहतुण्डकादयः । तन्मांसेन मासद्वयम् ॥ २ ॥ हरिणः कृष्णमृगः ; तस्येदं हारिणम् । तेन त्रीन् मासान् । एवं सर्वत्र ॥ ३ ॥ उरभ्रः मेषः ॥ ४ ॥ शकुनः पक्षी लवतित्तिरादिर्भक्ष्यः ॥ ५ ॥ छागः अजः ॥ ६ ॥ रुरुः शम्बरः । "रौरवेण नवैव तु" इति मनुः ॥ ७ ॥ पृषतः बिन्दुमान् मृगः । "पार्षतेनेह सप्त वै" इति "अष्टावैणेयमांसेन" इति च मनुः ॥ ८ ॥

[1] मुद्गैः omitted in च.
[2] प्रीयन्ते omitted in घ.
[3] मासौ omitted in ज, ठ.
[4] आपस्तम्बीये—घ.

गवयः गोसदृशो मृगः ॥ ९ ॥ महिषो वन्यः । तथा वन्यवाराहेणापि ; " दश मासांस्तु तृप्यन्ति वराह-महिषामिषैः " इति **मानवात्** ॥ १० ॥ तूपरः शृङ्गहीनः । तथा शाशकौर्माभ्यामपि ; " शशकूर्मयोस्तु मांसेन मासानेकादशैव तु " इति **मानवात्** ॥ ११ ॥ गव्येन गोसंभवेन । मांसभ्रमनिरासायाह—पयसेति ; " पायसेन पयसा गव्येन " इति **उशनःस्मरणात्** । मांसपरत्वे पयसो निर्विशेषणतया निषिद्धव्यावृत्त्यै गव्यपदावृत्तिः स्यात् ; " पयो दधि घृतं चैव गवां श्राद्धेषु पावनम् " इति **सौमन्तवेन** भिन्नवाक्यतापत्तेश्च । तस्य पयसो विकारैः दध्यादिभिश्च संवत्सरं प्रीयन्त इति प्रत्येकमन्वयः ॥ १२ ॥

**अत्र [1]पितृगीता गाथा भवति ॥ १३ ॥**

**कालशाकं महाशल्कं मांसं वार्ध्रीणसस्य च ।**
**विषाणवर्ज्या ये [2]खड्गा आसूर्यं [3]तांस्तु भुञ्ज्महे ॥ १४ ॥**

**इति [4]श्रीविष्णुस्मृतौ अशीतितमोऽध्यायः**

उक्तेऽर्थे संमतिमाह । पितृभिः अग्निष्वात्तादिभिः गीता गाथा श्लोकः ॥ १३ ॥ तामाह । कालशाकः दीर्घपत्रोऽतितिक्तः शाकविशेषः । महान्ति शल्कानि शुक्त्याकाराणि देहे यस्य स महाशल्कः मत्स्यविशेषः । वार्ध्रीणसमाह **निगमः**—

" [5]त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्ध्रीणसमिति प्राहुर्याज्ञिकाः पितृकर्मणि ।"

इति । पक्षिविशेषो वा ;

" कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः ।
स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः ॥ "

इति **निगमात्** । तस्य मांसम् । विषाणवर्ज्याः शृङ्गरहिताः ये खड्गाः, तांश्च यावत्सूर्यप्रलयं भुञ्ज्महे ; चकारात् लोहामिषादीन् ;

[1] पितृगाथा—ज.
[2] खड्गास्तांस्तु भक्षामहे सदा—Jolly's edition
[3] तानश्नीमहे—ठ.
[4] वैष्णवे धर्मशास्त्रे मासस्तुतिप्रकरणमशीतितमम्—ज, ठ.
[5] पिबतो यस्य त्रीणि कर्णौ जिह्वा च जलं स्पृशन्ति, स त्रिभिः पिबतीति त्रिपिब इति कल्पतरुः (टिप्पणी).

"खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च।
लोहामिषं कालशाकं मांसं वार्ध्रीणसस्य च।
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते॥"

इति योगिस्मरणात्॥ १४॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ [2]श्रीमत्यां वैजयन्त्याम्
अशीतितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामशीतितमोऽध्यायः—घ, च.
[2] श्री omitted in ग.

**नान्नमासनमारोपयेत् ॥ १ ॥ न पदा स्पृशेत् ॥ २ ॥ नावक्षुतं कुर्यात् ॥ ३ ॥ तिलैः सर्षपैर्वा यातुधानान् विसर्जयेत् ॥ ४ ॥ संवृते च श्राद्धं कुर्यात् ॥ ५ ॥ न रजस्वलां पश्येत् ॥ ६ ॥ न श्वानम् ॥ ७ ॥ न विड्वराहम् ॥ ८ ॥ न ग्रामकुक्कुटम् ॥ ९ ॥ प्रयत्नात् श्राद्धमजस्य दर्शयेत् ॥ १० ॥**

श्राद्धभोजनधर्मान् एकाशीतितमाध्यायेनाह । आसनम् आसन्दिका । उक्तानां पुनर्वचनं श्राद्धाङ्गता-वगमाय । तेन तद्वैगुण्ये न पुरुषप्रत्यवायमात्रम्; किंतु श्राद्धवैगुण्यमपीति ध्येयम् ॥ १ ॥ [1]अन्नमित्यनुवर्तते ॥ २ ॥ अवक्षुतम् अपस्पृष्टम् ॥ ३ ॥ "अपहता असुरा रक्षांसि पिशाचाः" इति मन्त्रेण तिलैः सर्षपैर्वा रक्षःपिशाचान् अपसारयेत् ॥ ४ ॥ संवृते परित आच्छन्ने । चकारात् दक्षिणाप्रवणे च; "दक्षिणाप्रवणं देशं यत्नतः परिकल्पयेत्" इति स्मरणात् ॥ ५ ॥ कर्ता भोक्ता च उदक्यां न पश्येद्यथा, तथा कुर्यात् ॥ ६ ॥ श्वा कुक्कुरः ॥ ७ ॥ विड्वराहः ग्रामसूकरः ॥ ८ ॥ ग्रामपदेनारण्यनिरासः ॥ ९ ॥ प्रयत्नात् असतः संपादनेनापि अजस्य दृष्टिविषये श्राद्धं कुर्यात् । यथाह देवलः—

"तिलानवकिरेत् तत्र सर्वतो बन्धयेदजान् ।
असुरोपहतं सर्वं तिलैः शुध्यत्यजेन च ॥"

इति ॥ १० ॥

**अश्नीयुर्ब्राह्मणाश्च वाग्यताः ॥ ११ ॥ न वेष्टितशिरसः ॥ १२ ॥ न सोपानत्काः[2] ॥ १३ ॥ न पीठोपहितपादाः[3] ॥ १४ ॥ न हीनाङ्गा अधिकाङ्गाः श्राद्धं पश्येयुः ॥ १५ ॥ न शूद्राः ॥ १६ ॥ न पतिताः ॥ १७ ॥ न महारोगिणः ॥ १८ ॥ [4]तत्कालं ब्राह्मणं**

[1] From here up to तथाच मन्त्रः in the commentary on Sūtra 23 missing in ख, ग.

[2] सोपानत्कः—घ, च. [3] पादः—घ, च. [4] तत्काले—ठ.

**ब्राह्मणानुमतेन भिक्षुकं वा पूजयेत् ॥ १९ ॥ [1]हविर्गुणान् न ब्राह्मणा ब्रूयुर्दात्रा पृष्टाः ॥ २० ॥**

मौनेन ब्राह्मणा भुञ्जीरन् । चकारार्थमाह अत्रिः—

"असंकल्पितमन्नाद्यं पाणिभ्यां यदुपस्पृशेत् ।
अभोज्यं तद्भवेदन्नं पितॄणां नोपतिष्ठते ॥"

इति । भरद्वाजोऽपि—

"पितॄणामन्नमादाय बलिं यस्तु प्रयच्छति ।
स्वीयेन ब्राह्मणस्वेन हस्तेन स्तेयकृद्भवेत् ॥"

इति ॥ ११ ॥ वेष्टितमुष्णीषादिना शिरो यैस्ते ॥ १२ ॥ उपानद्युगं पादुकाभ्यां च सहिताः ॥ १३ ॥ पीठं मञ्चिकादि ; तदारोपितपादाः नाश्नीयुरिति ॥ १४ ॥ चतुःषडङ्गुलादिदृष्टिविषये श्राद्धं न कुर्यात् ॥ १५ ॥ शूद्रपतितमहारोगिरजस्वलादिदृष्टिविषयेऽपि ॥ १६-१८ ॥ श्राद्धकाले समागतं ब्राह्मणं संन्यासिनं वा नियुक्ताश्चेदनुमन्येरन्, तदा तमपि भोजयेत् ॥ १९ ॥ श्राद्धकर्त्रा पृष्टेऽपि विप्राः श्राद्धीयद्रव्यगुणान् क्षाराम्लादीन् न ब्रूयुः ॥ २० ॥

**यावदूष्मा भवत्यन्ने यावदश्नन्ति[2] वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥ २१ ॥
सार्ववर्णिकमन्नाद्यं संनीयाप्लाव्य वारिणा ।
समुत्सृजेद्भुक्तवतामग्रतो विकिरन् भुवि ॥ २२ ॥**

अत्र हेतुमाह । यावदन्नस्योष्णत्वं मौनं हविर्गुणावचनं च तावदेव पितरो भुञ्जते ; नान्यथा । तस्मादेतत्त्रयं [3]कर्तव्यम् ॥ २१ ॥ सार्ववर्णिकं सर्वजातीयमन्नम् । आद्यशब्दात् शाकादिकमपि आदाय जलेनाप्लाव्य भुक्तवतामग्रे भुवि, न पात्रे ; [4]विकिरन्; न पिण्डत्वेन [5]पातयन् ॥ २२ ॥

**असंस्कृतप्रमीतानां [6]त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद् दर्भेषु विकिरश्च यः ॥ २३ ॥**

[1] न हविर्गुणान् ब्राह्मणाः—ज.
[2] भुञ्जन्ति—घ, च.
[3] न कर्तव्यम्—च.
[4] विकिरेत्—घ.
[5] पातयेत्—घ.
[6] रोगिणाम्—घ.

**उच्छेषणं भूमिगतमजिह्मस्याशठस्य च।**
**दासवर्गस्य तत् पित्र्ये भागधेयं प्रचक्षते ॥ २४ ॥**

**इति [1]श्रीविष्णुस्मृतौ एकाशीतितमोऽध्यायः**

विकिरे देवता आह। योऽयमुक्तो विकिरः, यच्च भोजनावशिष्टं विप्राणां, तदुभयमनुपनीतानां मृतानां, कुलस्त्रीणां च त्यक्तानां भागधेयम्। तथाच मन्त्रः—

"असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः।
दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥"

इति ॥ २३ ॥

उच्छिष्टे देवतान्तरमप्याह। भोजनपात्रात्[2] भूमौ पतितमुच्छिष्टम् अकपटस्यावञ्चकस्य दासीदास-समूहस्य भागधेयं पूर्वर्षयो वदन्ति। तथाच मन्त्रः—

"यजमानकुले जाता दासा दास्योऽन्नकाङ्क्षिणः।
ते सर्वे तृप्तिमायान्तु मया दत्तेन भूतले ॥"

इति ॥ २४ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[4]श्रीरामपण्डितात्मज-[4]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम् एकाशीतितमोऽध्यायः

1 वैष्णवे धर्मशास्त्रे एकाशीतितमं श्राद्धभोजनधर्मप्रकरणम्—ज, ठ.
2 भोजनात्—ध.
3 श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामेकाशीतितमोऽध्यायः—घ, च.
4 श्री omitted in ग.

## द्व्यशीतितमोऽध्यायः

**[1]दैवे कर्मणि [2]ब्राह्मणं न परीक्षेत ॥ १ ॥ [3]प्रयत्नात् पित्र्ये परीक्षेत ॥ २ ॥**

अथ [4]श्राद्धानर्हान् ब्राह्मणान् द्व्यशीतितमेनाह । दैविके कर्मणि; "विप्रेषु च हरेः सम्यगर्चनं मनुना स्मृतम्" इत्यनेन विहिते ब्राह्मणे हरिपूजनकर्मणि ब्राह्मणपरीक्षणं[5] न कर्तव्यम् । न दैविकमात्रे; तुलादानादौ परीक्षाम्नानविरोधात् । नापि श्राद्धाङ्गे वैश्वदेविके; "श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः" इत्युभयत्र परीक्षाश्रवणात् ॥ १ ॥ श्राद्धे तु दैविकपैतृकयोः प्रयत्नेन विप्रं परीक्षेत;

"संपरीक्ष्य तु यो दद्याच्छ्राद्धभोजनमास्थितः[6] ।
तस्य तुष्यन्ति पितरो देवताश्च न संशयः ॥"

इति स्कान्दात् ॥ २ ॥

**हीनाधिकाङ्गान् विवर्जयेत्[7] ॥ ३ ॥ विकर्मस्थांश्च ॥ ४ ॥ वैडालव्रतिकान्[8] ॥ ५ ॥ वृथालिङ्गिनः ॥ ६ ॥ नक्षत्रजीविनः ॥ ७ ॥ देवलकांश्च[9] ॥ ८ ॥**

चतुःषडङ्गुलादीन् विप्रान् विशेषतो वर्जयेत् ॥ ३ ॥ श्रुतिस्मृतिविरुद्धं कर्म विकर्म । तत्र तिष्ठन्तीति विकर्मस्थाः । चकारात् स्मृत्यन्तरोक्तान् सगोत्रप्रवरादींश्च;

"न सगोत्रे हविर्दद्यात् समानप्रवरे तथा ।
न चाज्ञातकुले दद्याद्यथा कन्या तथा हविः ॥"

इति अत्रिस्मरणात् ॥ ४ ॥ बिडालस्येव व्रतं येषां ते तथा;

"धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः ॥"

[1] दैवकर्मणि—घ. [2] ब्राह्मण्यं—ठ. [3] पित्र्ये प्रयत्नात्—ज, ठ.
[4] ब्राह्मणान् श्राद्धानर्हान्—ग. [5] परीक्षा न कार्या—ग. [6] श्राद्धमार्जवमास्थितः—च.
[7] वर्जयेत्—ज, ठ. [8] व्रताम्—ज. [9] च omitted in ठ.

इति **मनूक्तलक्षणाः** ॥ ५ ॥ वृथा शास्त्रातिक्रमेण लिङ्गं संन्यासाश्रमादिचिह्नं येषां ते वृथालिङ्गिनः; वृथाश्रमिण इति यावत्; "वृथा मुण्डांश्च जटिलान् सर्वान् कार्पटिकांस्तथा" इति **वायवीयात्** ॥ ६ ॥ नक्षत्रैः ये जीवन्ति, ते तथा; ज्योतिर्विदः ॥ ७ ॥ देवद्रव्योपजीविनः;

"देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्येषु गर्हितः ॥"

इति **स्मरणात्** । चकारात् स्तेनादींश्च;

"ये स्तेनाः पतिताः क्लीबा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत् ॥"

इति **स्मरणात्** । **स्मृतिसंग्रहेऽपि**—

"संवत्सरत्रयं कुर्यात् परार्थे देवतार्चनम् ।
संवत्सरं च गायत्रीं षण्मासं रुद्रमेव च ।
प्रणवं वा दिनं चैकं स च पातित्यमाप्नुयात् ॥"

इति ॥ ८ ॥

**चिकित्सकान् ॥ ९ ॥ अनूढापुत्रान् ॥ १० ॥ तत्पुत्रान् ॥ ११ ॥ बहुयाजिनः ॥ १२ ॥ ग्रामयाजिनः ॥ १३ ॥ [1]शूद्रयाजिनः ॥ १४ ॥ अयाज्ययाजिनः ॥ १५ ॥ [2]व्रात्यान् ॥ १६ ॥ तद्याजिनः ॥ १७ ॥ पर्वकारान् ॥ १८ ॥ सूचकान् ॥ १९ ॥ भृतकाध्यापकान् ॥ २० ॥ भृतकाध्यापितान् ॥ २१ ॥**

वैद्यवृत्तीन् ॥ ९ ॥ अनूढा कन्यका । तत्पुत्राः कानीनाः; तान् ॥ १० ॥ तेषां कानीनानां पुत्रान् ॥ ११ ॥ बहून् ये याजयन्ति तान् ॥ १२ ॥ ग्रामयाजकान् ॥ १३ ॥ शूद्रयाजकान् ॥ १४ ॥ अयाज्याः पतितादयः । तेषां याजकान् ॥ १५ ॥ संस्कारहीनान् ॥ १६ ॥ व्रात्ययाजकान् ॥ १७ ॥ पर्व; धनुःशराणां संधिः । तत्कर्तॄन्; "धनुःशराणां कर्ता च" इति **स्मरणात्** ॥ १८ ॥ राजसु पैशुन्यवक्तॄन् ॥ १९ ॥ भृतिपूर्वाध्यापकान् ॥ २० ॥ भृतिपूर्वाध्यापितान् ॥ २१ ॥

**शूद्रान्नपुष्टान् ॥ २२ ॥ पतितसंसर्गान्[3] ॥ २३ ॥ अनधीयानान् ॥ २४ ॥**

[1] This Sūtra omitted in ज.
[2] Sūtra-s 16 to 19 omitted in ज, ठ.
[3] संयुक्तान्—ज, ठ.

निरन्तरं शूद्रान्नभोजिनः ॥ २२ ॥ पतिताः; महापातक्याद्यः । तैः संसृज्यन्त इति संसर्गाः । तान्; " ब्राह्मैर्यौनैश्च संबन्धैः संयोगं पतितैर्गतः " इति स्मरणात् । संसर्गिनिषेधात् पतितनिषेधोऽर्थसिद्ध एव ;

" काणाः [1]कुब्जाश्च षण्ढाश्च कृतघ्ना गुरुतल्पगाः ।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः ॥ "

इति याम्यात् । श्राद्धे पतितनिषेधः कृतेऽपि प्रायश्चित्ते ; तदभावे संभाषणादिनिषेधेनैव प्राप्त्यभावात् ॥ २३ ॥ ये अधीतमपि वेदं प्रत्यहं नाधीयते, तान् ॥ २४ ॥

**संध्योपासनभ्रष्टान् ॥ २५ ॥ राजसेवकान् ॥ २६ ॥ नग्नान् ॥ २७ ॥ पित्रा विवदमानान् ॥ २८ ॥ [2]पितृमातृगुर्वग्निस्वाध्यायत्यागिनश्च ॥ २९ ॥**

संध्यानामुपासनं कर्तव्यता; तया रहितान् । यद्वा संध्यया उपासनेन अग्निपरिचरणेन च भ्रष्टान् ॥ २५ ॥ राज्ञो भृतिग्रहणेन आज्ञाकारिणः ॥ २६ ॥ मलवद्वासःप्रभृतीन् दशविधान् पूर्वोक्तान् । यद्वा,

" ब्राह्मणाद्याश्च ये वर्णाः स्वधर्मादन्यतोमुखम् ।
यान्ति ते नग्नसंज्ञा हि हीनकर्मस्ववस्थिताः ॥ "

इति वैष्णवोक्तलक्षणान् ॥ २७ ॥ धनाद्यर्थे पित्रा सह कलहकर्तॄन् ॥ २८ ॥ पित्रादीनां त्यागो नाम अपोषणम् । अग्नेस्त्यागः अपरिचरणम् । चकारात् औरभ्रिकादींश्च ;

" औरभ्रिको माहिषिको परपूर्वापतिस्तथा ।
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ॥ "

इति स्मरणात् ॥ २९ ॥

**ब्राह्मणापसदा ह्येते [3]कथिताः पङ्क्तिदूषकाः ।**
**एतान् [4]विवर्जयेद्यत्नाच्छ्राद्धकर्मणि पण्डितः ॥ ३० ॥**

इति [5]श्रीविष्णुस्मृतौ द्व्यशीतितमोऽध्यायः

1 खञ्जाश्च षण्डाश्च—घ. 2 न पितृ—ज. 3 पतिताः—ठ.
4 विसर्जयेत्—च. 5 वैष्णवे धर्मशास्त्रे पङ्क्तिदूषकप्रकरणं द्व्यशीतितमम्—ज, ठ.

उक्तनिषेधे हेतुमाह । ब्राह्मणेभ्यः ये अपशदाः बहिष्कृताः, अत एव पङ्क्तिदूषकाः कथिताः पूर्वर्षिभिः । एतान् पण्डितः दोषज्ञः श्राद्धे वैशेषिकेन यत्नेन वर्जयेत् । पुनरेतच्छब्दोऽन्येषामपि स्मृत्यन्तरनिषिद्धानां संग्रहाय । यथाह **शालङ्कायनः**—

" अविद्धकर्णैर्यद् भुक्तं लम्बकर्णैस्तथैव च ।
दग्धकर्णैश्च यद्भुक्तं तद्वै रक्षांसि गच्छति ॥ "

इति । लम्बकर्णलक्षणमाह **गोभिलः**—

" हनुमूलादधः कर्णौ लम्बौ तु परिकीर्तितौ ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत् ॥ "

इति ॥ ३० ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
द्व्यशीतितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां द्व्यशीतितमोऽध्यायः—च.

## त्र्यशीतितमोऽध्यायः

**अथ पङ्क्तिपावनाः ॥ १ ॥ त्रिणाचिकेतः ॥ २ ॥ पञ्चाग्निः ॥ ३ ॥ ज्येष्ठसामगः[1] ॥ ४ ॥ वेदपारगः ॥ ५ ॥ वेदाङ्गस्याप्येकस्य पारगः ॥ ६ ॥ पुराणेतिहासव्याकरणपारगः ॥ ७ ॥ [2]धर्मशास्त्रस्याप्येकस्य पारगः ॥ ८ ॥**

अथ पङ्क्तिपावनान् [3]त्र्यशीतितमाध्यायेनाह । अनन्तरं वक्ष्यमाणाः पङ्क्तिपावना ज्ञेयाः ॥ १ ॥ त्रिर्नाचिकेतं चयनं कृतवानसौ त्रिणाचिकेतः । त्रिणाचिकेतसंज्ञं यजुर्वेदभागं तद्व्रतपूर्वकं योऽधीते, स वा ॥ २ ॥ सभ्यावसथ्याभ्यां सह त्रेताग्निमान् । पञ्चाग्निविद्याध्यायी, पञ्चाग्निसाधको वा ॥ ३ ॥ ज्येष्ठसाम सामविशेषः; तं यो गायत्यसौ ॥ ४ ॥ मन्त्रब्राह्मणयोः पारम् अन्तं यो गच्छत्यसौ ॥ ५ ॥ शिक्षा कल्पः व्याकरणं निरुक्तं छन्दः ज्योतिषं चेत्येषां वेदाङ्गानामन्यतमस्यापि पारगः ॥ ६ ॥ पुराणं ब्राह्मादि । इतिहासः महाभारतादि । व्याकरणं पाणिनीयादि । अङ्गेषु व्याकरणं प्रातिशाख्यमित्यपौनरुक्त्यम् । एषामन्यतमस्य पारगः ॥ ७ ॥ सप्तपञ्चाशतां स्मृतीनामन्यतमायाः पारगः ॥ ८ ॥

**[4]तीर्थपूतः ॥ ९ ॥ यज्ञपूतः ॥ १० ॥ [5]तपःपूतः ॥ ११ ॥ सत्यपूतः ॥ १२ ॥ मन्त्रपूतः ॥ १३ ॥ गायत्रीजपनिरतः ॥ १४ ॥ ब्रह्मदेयानुसंतानः ॥ १५ ॥ [6]त्रिसुपर्णः ॥ १६ ॥**

तीर्थैः वाराणस्यादिभिरनुसृतैः पवित्रितः ॥ ९ ॥ यज्ञैः अग्निष्टोमादिभिः पूतः ॥ १० ॥ तपसा चान्द्रायणादिना पूतः ॥ ११ ॥ सत्येन यथार्थवाक्येन पूतः ॥ १२ ॥ मन्त्रैः विष्ण्वादिदैवत्यैः नित्यं जप्तैः पूतः; वेदमन्त्राणां प्रागेवाभिधानात् ॥ १३ ॥ "तत् सवितुर्वरेण्यम्" इत्यस्या जपे तत्परः

[1] सामा—ठ. [2] एकस्यापि धर्मशास्त्रस्य—ज, ठ. [3] त्र्यशीतितमेनाह—ख.

[4] Sūtra-s 9 and 10 are read in reverse order in ज, ठ.

[5] तपसा पूतः । दानपूतः । गायत्रीजपनिरतः—ज, ठ. [6] त्रिसौपर्णः—ठ.

॥ १४ ॥ ब्रह्मदेयं [1]वेदाध्यापनम्; तदुपलक्षितः संतानः परंपरा यस्येति; त्रिपुरुषाध्यापक इति यावत् ॥ १५ ॥ त्रिसुपर्णं यजुर्भागविशेषमधीतेऽसौ तथा । त्रिः [2]सुपर्णचितिं कृतवान् असौ वा ॥ १६ ॥

**जामाता ॥ १७ ॥ दौहित्रश्चेति [3]पात्रम् ॥ १८ ॥ विशेषेण च[4] योगिनः ॥ १९ ॥**

ब्राह्मणानुकल्पमाह । दुहितुः पतिः ॥ १७ ॥ दुहितुः पुत्रः । चकाराद् भागिनेयादयः; "स्वस्रीय-ऋत्विग्जामातृयाज्यश्वशुरमातुलाः" इति योगिस्मरणात् । इतिशब्दः प्रकारवचनः । एवंप्रकारा अन्येऽपि श्राद्धदाने पात्रं भवन्ति;

"त्रिणाचिकेतदौहित्रशिष्यसंबन्धिबान्धवाः ।
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः ॥"

इति योगिस्मरणात् ॥ १८ ॥ योगाभ्यासनिष्ठाः विशेषेणान्येभ्यः पात्रं भवन्ति । चकारात् संन्यासिनोऽपि । वायवीये—

"गृहस्थानां सहस्रेण वानप्रस्थशतेन च ।
ब्रह्मचारिसहस्रेण यतिरेको विशिष्यते ॥"

इति । ते च त्रिदण्डिनः । ब्रह्मवैवर्ते—

"मुण्डान् जटिलकाषायान् श्राद्धकाले विवर्जयेत् ।
शिखिभ्यो धातुरक्तेभ्यस्त्रिदण्डिभ्यः प्रदापयेत् ॥"

इति ॥ १९ ॥

**अत्र पितृगीता गाथा भवति ॥ २० ॥**
**अपि स स्यात् कुलेऽस्माकं[5] भोजयेद्यस्तु योगिनम्[6] ।**
**विप्रं श्राद्धे प्रयत्नेन येन तृप्यामहे वयम् ॥ २१ ॥**

**इति [7]श्रीविष्णुस्मृतौ त्र्यशीतितमोऽध्यायः**

[1] वेदाध्ययनम्—ख.
[2] सुपर्णं—ग, च.
[3] एते पवित्राः—ज, ठ.
[4] च omitted in ज, ठ.
[5] जन्तुः—ज.
[6] योगिनः—ख.
[7] वैष्णवे धर्मशास्त्रे पङ्क्तिपावनप्रकरणं त्र्यशीतितमम्—ज, ठ.

स्वोक्तार्थे संमतिमाह । व्याख्यातं प्राक् ॥ २० ॥ तामाह । अस्माकं कुले पुत्रदौहित्रादिसंततौ स कोऽपि भवेत्, यो योगनिष्ठं विप्रं प्रयत्नेन बुद्धिपूर्वकमानीय श्राद्धे भोजयेत् । येन योगिभोजनेन वयं तृप्यामहे अतिशयिततृप्तिमन्तो भवेम ॥ २१ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
त्र्यशीतितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां त्र्यशीतितमोऽध्यायः—घ, च.

# चतुरशीतितमोऽध्यायः

**न म्लेच्छविषये श्राद्धं कुर्यात् ॥ १ ॥ न गच्छेन्म्लेच्छविषयम् ॥ २ ॥**

अथ श्राद्धे वर्ज्यान् देशान् चतुरशीतितमेनाह । वक्ष्यमाणलक्षणे म्लेच्छदेशे श्राद्धं न कुर्यात् ॥ १ ॥ प्रासङ्गिकमाह । तीर्थयात्रां विना म्लेच्छदेशं न गच्छेत् । यथाह देवलः—

" सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च मगधान् मालवांस्तथा ।
तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति ॥ "

इति ॥ २ ॥

**परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छतीति ॥ ३ ॥**

किंच परे चातुर्वर्ण्यबहिष्कृता[1] म्लेच्छाः ; तेषां निपाने जलाशये स्नात्वा पीत्वा च तत्साम्यं प्राप्नोति । इतिशब्दात् एवंविधानामन्येषामपि चण्डालादीनां जलाशयेऽप्येवम् । साम्यं च यावज्जीवाभ्यासविषयम् । सकृत् कामाकामाभ्याम् [2]आपस्तम्बेनोक्तं द्वयम्—

" म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ॥
तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा ।
अकामान्नक्तभोजी स्यादहोरात्रं तु कामतः ॥ "

इति ॥ ३ ॥

**चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।**
**[3]स म्लेच्छदेशो विज्ञेय आर्यावर्तस्ततः परः[4] ॥ ४ ॥**

**इति [5]श्रीविष्णुस्मृतौ चतुरशीतितमोऽध्यायः**

[1] बहिर्भूताः—अ.  [2] आपस्तम्बोक्तं—ग.  [3] तं म्लेच्छदेशं जानीयात्—ठ.
[4] अतः परम्—ज, ठ.  [5] वैष्णवे धर्मशास्त्रे चतुरशीतितमं प्रकरणम्—ज, ठ.

म्लेच्छदेशं लक्षयति। [1]चतुर्वर्णसंबन्धिधर्मव्यवस्था यत्र देशे नास्ति, स म्लेच्छदेशः। चातुर्वर्ण्यव्यवस्थानं कुशादीनामुपलक्षणम्। तथाच आदित्यपुराणे[2]—

"कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा।
समृद्धो धर्मदेशः स्यादाश्रयेरन् विपश्चितः॥"

इति। एतैर्विहीनो म्लेच्छदेश इत्यभिप्रायः। अतोऽन्यस्तद्वानार्यावर्त इति प्रासङ्गिकं लक्षणं वक्ष्यमाणविध्यर्थम्। मनुस्तु अन्यथाह—

"आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते॥"

इति। इदं च लक्षणकरणं तद्वासिनो देशविशेषगमननिषेधाय। तथाच [3]आदित्यपुराणे—

"[4]आर्यावर्तसमुत्पन्नो द्विजो वा यदि वाद्विजः।
नर्मदासिन्धुपारं च करतोयां न लङ्घयेत्॥
आर्यावर्तमतिक्रम्य विना तीर्थक्रियां द्विजः।
आज्ञां चैव तथा पित्रोरैन्दवेन विशुध्यति॥"

इति॥ ४॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मजश्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां चतुरशीतितमोऽध्यायः

[1] संबन्धि omitted in घ.
[2] पुराणम्—ख, ग.
[3] आदिपुराणे—घ.
[4] This verse is omitted in ख.
[5] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां चतुरशीतितमोऽध्यायः—घ, च.

## पञ्चाशीतितमोऽध्यायः

**अथ पुष्करेष्वक्षय्यं श्राद्धम् ॥ १ ॥ जप्यहोमतपांसि च ॥ २ ॥ पुष्करे स्नानमात्रात् सर्वपापेभ्यः पूतो भवति ॥ ३ ॥**

अथ पञ्चाशीतितमेन श्राद्धार्हान् देशानाह । अथेति श्राद्धदेशप्रस्तावः । "त्रीणि पुष्कराणि" इति वचनात् बहुवचनम् । तेषां ज्येष्ठमध्यमकनिष्ठपुष्कराणीति संज्ञा । **भारते**—

"प्रथमं ब्रह्मदैवत्यं द्वितीयं विष्णुदैवतम् ।
तृतीयं रुद्रदैवत्यं त्रयो [1]देशाश्रिता इति ॥"

इति । तेषु त्रिषु कृतं श्राद्धमक्षयं भवति । प्रत्येकं श्राद्धे फलान्तरं कल्प्यम् ॥ १ ॥ प्रासङ्गिकमाह । जप्यं मन्त्रस्य । होमः तिलादेः । तपः उपवासः । चकारात् दानोत्सर्गादि पुष्करेष्वक्षय्यं भवति ॥ २ ॥ किंच, एकत्वेन पुनः पुष्करपरामर्शः प्रत्येकस्नानेऽप्येतत्फलसंबन्धावगमाय । मात्रशब्दो जपहोमादिक्रियान्तरनैरपेक्ष्याय ॥ ३ ॥

**एवमेव गयाशीर्षे ॥ ४ ॥ वटे ॥ ५ ॥ अमरकण्टकपर्वते ॥ ६ ॥ [2]वराहपर्वते ॥ ७ ॥ यत्र क्वचन नर्मदातीरे ॥ ८ ॥ यमुनातीरे ॥ ९ ॥**

उक्तमर्थमतिदिशति । "पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः" इत्युक्तलक्षणे गयाशीर्षेऽप्येवमेव फलमवधेयम् । एवमग्रेऽपि ॥ ४ ॥ तत्रैव अक्षयवटे ॥ ५ ॥ अमरकण्टकेन तीर्थेनोपलक्षिते पर्वते मेकलाभिधे विन्ध्यपादे । पर्वतग्रहणं तीर्थातिरिक्तेऽपि भागे तुल्यफलावगमाय ॥ ६ ॥ [3]वराहाकारे पर्वतविशेषे ॥ ७ ॥ तीर्थविशेषानादरेण नर्मदातीरमात्रे । तत्परिमाणं च **पुराणे**—

"उत्तरे नवगव्यूतिर्दक्षिणे योजनत्रयम् ।
गङ्गागोदावरं रेवातीरमाहुर्मनीषिणः ॥"

[1] देवाः—ख, ग.   [2] बाराह—ग.   [3] बाराहाकारे—ग.

इति ॥ ८ ॥ 'यत्र क्वचन' इत्यनुवर्तते। तच्च नर्मदावत् यमुनायाः तीरपरिमाणविशेषानाम्नानात् तटद्वयान्तर्भाग एव तीरं ज्ञेयम्। "पार तीर कर्मसमाप्तौ" इति धातोः प्रवृद्धप्रवाहपरिच्छेदकस्यैव भागस्य तीरत्वावगमात् ॥ ९ ॥

**गङ्गायां विशेषतः ॥ १० ॥ [1]कुशावर्ते ॥ ११ ॥ [2]बिन्दुके ॥ १२ ॥ नीलपर्वते[3] ॥ १३ ॥ कनखले[3] ॥ १४ ॥ कुब्जाम्रे ॥ १५ ॥**

गङ्गायां यत्र क्वचन श्राद्धमन्यतीर्थात् विशेषतोऽक्षयम् ॥ १० ॥ कुशावर्तः त्र्यम्बकगिरिस्थो गोदावरीप्रभवः ॥ ११ ॥ बिन्दुकः दक्षिणदेशस्थः तीर्थविशेषः। बिल्वक इति पाठेऽपि तत्रैव सः ॥ १२ ॥ नीलपर्वतः उत्कलदेशस्थः पुरुषोत्तमस्थाने ॥ १३ ॥ कनखलम् उत्तरपर्वतस्थं त्र्यम्बकस्थं वा ॥ १४ ॥ कुब्जाम्रम् उत्कलदेशस्थं क्षेत्रं गङ्गाद्वारस्थं वा ॥ १५ ॥

**भृगुतुङ्गे ॥ १६ ॥ केदारे ॥ १७ ॥ महालये ॥ १८ ॥ [4]नडन्तिकायाम् ॥ १९ ॥ सुगन्धायाम् ॥ २० ॥ शाकंभर्याम् ॥ २१ ॥ फल्गुतीर्थे ॥ २२ ॥ महागङ्गायाम् ॥ २३ ॥ [5]त्रिहलिकाग्रामे ॥ २४ ॥**

भृगुतुङ्गः अमरकण्टकसमीपस्थः विन्ध्यपादः ॥ १६ ॥ केदारः [6]उत्तरपर्वतस्थः ॥ १७ ॥ महालयः पर्वतविशेषः ॥ १८ ॥ नडन्तिका नदी अभियुक्तेभ्यो ज्ञेया ॥ १९ ॥ सुगन्धा नदी सौगन्धिकनगसमीपस्था ॥ २० ॥ शाकंभरीदेवीस्थानं मरुदेशे, यत्र लवणं भवति ॥ २१ ॥ फल्गुतीर्थं गयास्थम् ॥ २२ ॥ महागङ्गा अलकनन्दा ॥ २३ ॥ त्रिहलिकाग्रामः शालग्रामः ; तण्डुलिकाश्रम इति वा पाठः ॥ २४ ॥

**कुमारधारायाम् ॥ २५ ॥ प्रभासे ॥ २६ ॥ यत्र क्वचन सरस्वत्यां विशेषतः ॥ २७ ॥ [7]गङ्गाद्वारे ॥ २८ ॥ प्रयागे च ॥ २९ ॥**

[1] गङ्गाद्वारे। प्रयागे च। गङ्गासागरसंगमे। These are inserted between Sūtra-s 10 and 11 in ज, ठ.

[2] बिल्वके—ज. [3] च added in—ठ. [4] लाडति—ठ.

[5] तण्डुलिकाश्रमे—ज, ठ. [6] उन्नत—ज.

[7] Sūtra-s 28 to 30 are inserted between Sūtra-s 10 and 11 in ज, ठ. In Jolly's edition Sūtra-s 28 to 32 are read as a stanza:

गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे।
सततं नैमिषारण्ये वाराणस्यां विशेषतः ॥

काश्मीरदेशे क्रौञ्चपर्वते कुमारशक्तिप्रहारेण जलधारा निर्गतास्ति; सा कुमारधारा; तस्याम्। दक्षिणसमुद्रे इषुपातक्षेत्रे वा ॥ २५ ॥ द्वारकासमीपे प्रभासतीर्थम् ॥ २६ ॥ प्लक्षप्रस्रवणमारभ्य सरस्वती-विनशनपर्यन्तं यत्र कुत्रापि सरस्वत्यां श्राद्धं विशेषतोऽन्यतीर्थेभ्यः अक्षयम्। यत्र क्वचनेति पुनर्वचनं पूर्वस्य गङ्गायमुनयोरेवानुषङ्गः, नोत्तरत्रेति ज्ञापनाय ॥ २७ ॥ गङ्गाद्वारं हरिद्वारम्;

" केचिदूचुर्हरिद्वारं मोक्षद्वारं जगुः परे।
गङ्गाद्वारं च केऽप्याहुः केचिन्मायापुरीं पुनः ॥ "

इति **स्कान्दात्** ॥ २८ ॥ प्रयागः गङ्गायमुनासंगमः। चकारात् तद्वियोगो भिन्नप्रयागाख्यः; " गङ्गा-यमुनयोर्योगे वियोगे चाक्षयं भवेत् " इति **ब्राह्मात्** ॥ २९ ॥

**गङ्गासागरसंगमे ॥ ३० ॥ सततं नैमिषारण्ये ॥ ३१ ॥ वाराणस्यां विशेषतः[1] ॥ ३२ ॥ अगस्त्याश्रमे ॥ ३३ ॥ [2]कण्वाश्रमे ॥ ३४ ॥**

यद्यपि " सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् " इति चतसृणामपि गङ्गानां चतुर्ष्वपि सागरेषु चत्वारः संगमाः, तथाप्यत्र पूर्वसागरभागीरथ्योरेव संगमो विवक्षितः, मनुष्यगम्यत्वात् ॥ ३० ॥ नैमिषारण्यम् उदग्दिगवस्थितं क्षेत्रम्। तत्र कालविशेषानादरेण ॥ ३१ ॥ वाराणसी काश्यन्तर्गता नगरी। तस्यां देशकालविशेषानादरेण ॥ ३२ ॥ अगस्त्याश्रमः पुष्करसमीपे सरस्वतीतीरे; " महिमानं सरस्वत्या अगस्त्याश्रमवर्णनम् " इति **भारतात्**। दक्षिणदेशे स्वामिस्थाने वा ॥ ३३ ॥ कण्वाश्रमो मालिनीतीरे ॥ ३४ ॥

**कौशिक्याम् ॥ ३५ ॥ सरयूतीरे ॥ ३६ ॥ शोणस्य [3]ज्योतिषायाश्च संगमे ॥ ३७ ॥ श्रीपर्वते ॥ ३८ ॥ कालोदके ॥ ३९ ॥**

कौशिकी उत्तरपर्वतोद्भवा नदी ॥ ३५ ॥ अयोध्याधोवाहिनी सरयूः। तत्तीरे ॥ ३६ ॥ शोणो नदः। ज्योतिषा नदी। तयोः संगमो विन्ध्यमध्ये। शोणज्योतीरथयोरिति पाठेऽपि तत्रैव ॥ ३७ ॥ श्रीपर्वतः दक्षिणदेशस्थः श्रीशैलः मल्लिकार्जुनस्थानम् ॥ ३८ ॥ कालोदकं यामुनः तीर्थविशेषः। **वामनपुराणे**—

" देवीविरहसंतप्तो महादेवो जगद्गुरुः।
ततः पपात देवेशः कालिन्दीसरितं मुने ॥

[1] विशेषतः omitted in ठ. [2] This Sūtra omitted in ठ. [3] ज्योतीरथ्यायाश्च—ठ.

निमग्ने शंकरे तापो दग्धः कृष्णत्वमागताः ।
ततः प्रभृति कालिन्द्यां ह्रदः कालोदकाभिधः ॥"

इति ॥ ३९ ॥

**उत्तरमानसे ॥ ४० ॥ वडवायाम् ॥ ४१ ॥ मतङ्गवाप्याम् ॥ ४२ ॥ सप्तार्षे ॥ ४३ ॥ विष्णुपदे ॥ ४४ ॥ स्वर्गमार्गपदे ॥ ४५ ॥**

उत्तरमानसं केदारोत्तरपर्वतस्थम् ॥ ४० ॥ वडवा तीर्थविशेषो दक्षिणदेशस्थः ॥ ४१ ॥ मतङ्गवापी गयादक्षिणभागस्था ॥ ४२ ॥ सप्तार्षं सप्तर्षितीर्थम् ॥ ४३ ॥ विष्णुपदं गयामध्यस्थितम् ॥ ४४ ॥ स्वर्गमार्गः रथमार्ग इति पदशालापूर्वभागे प्रसिद्धः ॥ ४५ ॥

**गोदावर्याम् ॥ ४६ ॥ गोमत्याम् ॥ ४७ ॥ वेत्रवत्याम् ॥ ४८ ॥ विपाशायाम् ॥ ४९ ॥ वितस्तायाम् ॥ ५० ॥ [1]शतद्रूतीरे ॥ ५१ ॥ चन्द्रभागायाम् ॥ ५२ ॥ [2]इरावत्याम् ॥ ५३ ॥ सिन्धोस्तीरे ॥ ५४ ॥**

गोदावरी गौतमनीता गङ्गा ॥ ४६ ॥ गोमती नैमिषारण्यप्रभवा नदी ॥ ४७ ॥ वेत्रवती अहिच्छत्रगता नदी ॥ ४८ ॥ विपाशाद्याः पञ्च नद्यः सिन्धुनदस्पृष्टाः कुरुक्षेत्रात् पश्चिमदेशे पञ्चनदमिति प्रसिद्धाः ॥ ४९-५४ ॥

**दक्षिणे पञ्चनदे ॥ ५५ ॥ [3]औसजे ॥ ५६ ॥ एवमादिष्वथान्येषु[4] तीर्थेषु ॥ ५७ ॥ सरिद्वरासु ॥ ५८ ॥ [5]सर्वेष्वपि स्वभावेषु ॥ ५९ ॥ पुलिनेषु ॥ ६० ॥**

कृष्णावेणातुङ्गाभद्राकोणानां पञ्चानां नदीनां समाहारदेशे ॥ ५५ ॥ [6]औसजं शूर्पारकं दक्षिणदेशस्थं तीर्थम् ॥ ५६ ॥ तीर्थानामानन्त्येन प्रत्येकवचनाशक्त्या अतिदेशमाह—अथेति। उक्तातिरिक्तेष्वेवमाकारकेष्वन्येष्वपि तीर्थेषु अयोध्यामथुरादिषु श्राद्धमक्षयं ज्ञेयम् ॥ ५७ ॥ अन्यास्वपि तापीपयोष्णीगण्डक्यादिषु नदीश्रेष्ठासु ॥ ५८ ॥ स्वभावाः रघुनाथश्रीकृष्णादीनां जन्मस्थानानि। तेष्वपि सर्वेषु ॥ ५९ ॥ पुलिनानि सैकतानि ॥ ६० ॥

[1] शतरुद्रातीरे—ठ. [2] ऐरावत्याम्—ठ. [3] ओजसे—ठ.
[4] अथान्येषु omitted in ज. [5] सङ्गमेषु प्रभवेषु—ठ. [6] ओजसं शूर्पारकम्—ख.

**प्रस्रवणेषु ॥ ६१ ॥ [1]पर्वतेषु ॥ ६२ ॥ निकुञ्जेषु ॥ ६३ ॥ वनेषु ॥ ६४ ॥ उपवनेषु ॥ ६५ ॥ गोमयेनोपलिप्तेषु गृहेषु ॥ ६६ ॥ [2]मनोज्ञेषु ॥ ६७ ॥**

[3]प्रस्रवणं निर्झरः ॥ ६१ ॥ पर्वताः विन्ध्यादयः ॥ ६२ ॥ निकुञ्जाः वृन्दावनवर्तीनि भगवत्क्रीडास्थानानि लतागृहाणि ॥ ६३ ॥ वनानि वृन्दावनतालवनमधुवनादीनि द्वादश ॥ ६४ ॥ वाराणस्यादिपरिसरभवेषु हरिकेशवनादिषु ॥ ६५ ॥ गोमयेनोपलिप्तेष्विति गृहाणामेव विशेषणम् ; न पृथग्विशेष्यम् ; "गृहं मार्जनलेपनात्" इति स्मरणात् ; अन्यथा निषिद्धदेशेष्वतिप्रसङ्गात् ॥ ६६ ॥ मनोज्ञाः तुलसीचत्वरादयः ॥ ६७ ॥

**अत्र च पितृगीता गाथा भवन्ति ॥ ६८ ॥**
**कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन् ।**
**नदीषु बहुतोयासु शीतलासु विशेषतः ॥ ६९ ॥**
**अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।**
**गयाशीर्षे वटे श्राद्धं यो नः कुर्यात् समाहितः ॥ ७० ॥**
**एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।**
**यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ७१ ॥**

इति [4]श्रीविष्णुस्मृतौ पञ्चाशीतितमोऽध्यायः

[5]उक्तेऽर्थे संमतिमाह । स्पष्टोऽर्थः ॥ ६८ ॥ ता आह । जलाञ्जलीन्, तर्पणस्य । बहुतोयाः नित्यप्रवाहाः । शीतलाः हिमवत्प्रभवाः ॥ ६९ ॥ किंच गयाशीर्षे प्रागुक्ते । तत्र यो वटः अक्षयसंज्ञः, तत्र च ॥ ७० ॥ किंच बहूनां पुत्राणां मध्ये एकेनापि गयाश्राद्धकरणे पितृमुक्तिर्भवत्येवेत्यवगमयितुं बहुपुत्राशंसनम् । तत्र चाविभक्तानामप्यधिकारः ;

"एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत् ॥"

[1] Sūtras 62 and 63 are formed into one Sūtra as पर्वतनिकुञ्जेषु—ठ.
[2] मनोहरेषु—ज, ठ.
[3] प्रस्रवणाः निर्झराः—ख, ग.
[4] वैष्णवे धर्मशास्त्रे तीर्थप्रकरणं पञ्चाशीतितमम्—ज, ठ.
[5] उक्तार्थे—ग, च.

इति आम्नात्। यद्यप्यश्वमेधः क्षत्रियस्यैवेति न सर्ववर्णपितृसाधारणमिदमाशंसनं, तथापि दिव्यपितॄणां सर्ववर्णसाधारण्येन तत्संततौ क्षत्रियाणामपि संभवात् तदभिप्रायमिदमित्यवधेयम्। नीलः अनन्तरवक्ष्यमाण-लक्षणः। तं वक्ष्यमाणविधिना चोत्सृजेदिति त्रितयमपि प्रत्येकं मुक्तिहेतुः ॥ ७१ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां पञ्चाशीतितमोऽध्यायः

1 श्रीविष्णुस्मृतिविवृतौ पञ्चाशीतितमोऽध्यायः—घ, च; धर्माधिकारिरामपण्डितात्मजनन्दपण्डितकृतौ—ग.

# षडशीतितमोऽध्यायः

**अथ वृषोत्सर्गः ॥ १ ॥ कार्त्तिक्यामाश्वयुज्यां वा ॥ २ ॥**

**तत्रादावेव वृषभं परीक्षेत ॥ ३ ॥**

षडशीतितमेन वृषोत्सर्गमाह । अथेति [1]श्राद्धप्रकरणविच्छेदार्थः । वृषोत्सर्गो वक्ष्यते ॥ १ ॥ तत्र कालमाह । कृत्तिकया अश्विन्या वा युक्तायां पौर्णमास्याम् । कृत्तिकादियोगः संभवाभिप्रायेण । वाशब्दात् माघ्यादिष्वपि । यथा **मात्स्ये**—

"कार्त्तिक्यामाश्वयुज्यां वा माघ्यामाषाढ्यां तथापि वा ।
फाल्गुन्यां वापि चैत्र्यां वा वैशाख्यां वा तथैव च ॥
वैधृतौ वा व्यतीपाते मन्वादिषु युगादिषु ।
दिनच्छिद्रेऽर्कसंक्रान्तौ क्रान्तिसाम्ये तथैव च ॥
मातापित्रोः क्षयाहे च ग्रहणे चन्द्रसूर्ययोः ।
अयनद्वितये चैव विषुवद्वितये तथा ।
अष्टकासु च कर्तव्यः प्रेतस्यैकादशाहिकः ॥"

इति । तत्रैकादशाहे नित्यः ; अन्यत्र काम्यः ;

"एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥"

इति **स्मरणात्** । एवम्,

"यथोक्तविधिना यस्तु नीलं वृषभमुत्सृजेत् ।
यावत् तद्रोमसंख्यानं तत्संततिकुलेषु च ।
तावद्युगसहस्राणि स्वर्गलोके महीयते ॥"

इति फलश्रवणाच्च ॥ २ ॥ आदौ कर्मोपक्रमात् प्राक् । एवकारेण कर्ममध्यव्यावृत्तिः ॥ ३ ॥

[1] प्रकरणाविच्छेदार्थः—ग.

**जीवद्वत्सायाः पयस्विन्याः [1]पुत्रम् ॥ ४ ॥ सर्वलक्षणोपेतम् ॥ ५ ॥ नीलम् ॥ ६ ॥**

तमाह । जीवन्तो वत्साः यस्याः । तेन पुंवत्सत्वमप्युक्तम् । पयस्विनी प्रचुरदुग्धा । तस्याः पुत्रम् अषण्ढम् ॥ ४ ॥ लक्ष्यन्त इति लक्षणानि अङ्गानि । तैः सर्वैः युक्तम् । तेन व्यङ्गनिवृत्तिः । लक्षणानि च **मात्स्ये**—

" धेनोः सुतं परीक्षेत सुरूपं लक्षणान्वितम् ।
[2]उद्यत्स्कन्धं सककुदं चोन्नतायतकम्बलम् ॥
महाकटितटस्कन्धं वैडूर्यमणिसंनिभम् ।
[3]सुशृङ्गं सुखुरं चैव प्रलम्बश्लक्ष्णवालधिम् ॥ "

इति ॥ ५ ॥ नीलः सर्वश्वेतः । स च ब्राह्मणजातिः । यथा **मात्स्ये**—

" चातुर्वर्ण्यं परीक्षेत ब्राह्मणादिप्रभेदतः ।
श्वेतवर्णो भवेद्विप्रो लोहितः क्षत्रियः स्मृतः ।
पीतवर्णो भवेद्वैश्यः कृष्णः शूद्रो बुधैः स्मृतः ॥ "

इति । तेषां व्यवस्थापि **तत्रैव**—" यथावर्णं समुत्सृज्यो वर्णैस्तु ब्राह्मणादिभिः " इति । अस्यैव लक्षणान्तरोपेतस्य नीलत्वमप्युक्तं **तत्रैव**—

" यस्तु श्वेतेन वर्णेन कृष्णः पुच्छे मुखे खुरे ।
इन्द्रनीलनिभः शृङ्गे स नीलः पञ्चवर्णकः ॥ "

इति । पञ्चसु स्थानेषु वर्णा यस्येति व्याख्येयम् । पञ्च वर्णा यस्येति लक्षणान्तरं वा । लक्षणान्तरमपि **तत्रैव**—

" [4]पशुः शृङ्गाग्रनयनश्वेतवर्णो भवेद्यदि ।
शफैः प्रवालसदृशो नास्ति धन्यतरस्ततः ॥ "

इति ॥ ६ ॥

**लोहितं वा मुखपुच्छपादशृङ्गशुक्लम्[5] ॥ ७ ॥**

[1] वत्सम्—ज, ठ.
[2] उच्चस्कन्धं—ख, ग.
[3] सशृङ्गं—घ.
[4] शफ—घ.
[5] सर्व for शृङ्ग—ज ; शुक्लं सर्वलक्षणोपेतम्—ठ ; शुक्लमर्धशुक्लं वा—ज.

मुखाद्यष्टाङ्गशुक्लं लोहितवर्णं वा । अन्ये त्वेवमेव नीलमाहुः,

"[1]लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥"

इति **शौनकीयात्** । **मात्स्ये** तु लक्षणान्तरमपि—

"सर्वाङ्गलोहितो यस्तु पृष्ठे पुच्छे तु कापिलः ।
ललाटे तिलकोपेतः स वै नीलः स्मृतो बुधैः ॥"

इति । अस्य च [2]सर्ववर्णसाधारण्यात् पश्चादुपन्यासः । तथाच **मात्स्ये**—"अथवा सर्ववर्णस्तु सर्वेषामेव शस्यते" इति । वाशब्दात् वर्णान्तरमपि ग्राह्यम्; "नीलं बभ्रुं कपिलं कृष्णं पिङ्गलं लोहितं व जीवद्वत्सायाः पयस्विन्याः पुत्रं द्विहायनमेकहायनमुत्सृजेत्" इति **शङ्खस्मरणात्** । **मात्स्येऽपि**—

"धन्यः कपोतवर्णाभो धन्यो मणिनिभेक्षणः ।
धन्यो मार्जारपादस्तु धन्यस्तित्तिरिसंनिभः ॥
एकवर्णो द्विवर्णो वा सर्वः कापिल एव वा ।
एवंविधो वृषो मोच्यो न च धार्यो गृहे भवेत् ॥"

इति ॥ ७ ॥

**यूथस्याच्छादकम्[3] ॥ ८ ॥ ततो गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं पयसा श्रपयित्वा पूषा गा अन्वेतु न इह रतिरिति च हुत्वा [4]वृषमयस्कारस्त्वङ्कयेत् ॥ ९ ॥ एकस्मिन् पार्श्वे चक्रेणापरस्मिन् पार्श्वे शूलेन ॥ १० ॥**

गोयूथस्य आच्छादकं निषेक्तारम् ॥ ८ ॥ ततः परीक्षानन्तरम् । गवां मध्ये गोष्ठे इति देशविधिः; "गृहे गोष्ठे तथा तीर्थे पुण्यक्षेत्रे शिवालये" इति **मात्स्यात्** । तत्र च कुण्डमण्डपविधानं **मात्स्यात्** अवगन्तव्यम् । सुसमिद्धं प्रज्वलितमग्निं लौकिकं दर्भैः परिस्तीर्य पूषदेवताकं निर्वापप्रोक्षणपूर्वकं स्थालीपाकतन्त्रेण पयसि चरुं श्रपयित्वा आघाराज्यभागौ "पूषा गा अन्वेतु नः" "इह रतिः" इति च द्वाभ्यां मन्त्राभ्यामाहुतिद्वयं हुत्वा, अनन्तरं वृषं लोहकारः अङ्कयेत् । तुशब्दः अङ्कने होमकर्तुर्व्यावृत्त्यर्थः । अन्यथा क्त्वानिर्देशेन अयस्कारस्यैव होमकर्तव्यत्वापत्तेः ॥ ९ ॥ अङ्कनप्रकारमाह । दक्षिणबाहौ चक्रेण, वामस्फिचि त्रिशूलेनेति पार्श्वद्वयव्यवस्था ॥ १० ॥

1 सर्वाङ्गलोहितो यस्तु—ख.
2 सर्वसाधारण्यात्—ग.
3 च added in ङ.
4 वृषमम्—ङ.

अङ्क्तिं च हिरण्यवर्णेति चतसृभिः शं नो देवीरिति च स्नापयेत् ॥ ११ ॥ स्नातमलंकृतं स्नातालंकृताभिश्चतसृभिर्वत्सतरीभिः सार्धमानीय [1]रुद्रान् पुरुषसूक्तं कूश्माण्डीश्च जपेत् ॥१२॥

अङ्कनानन्तरं "हिरण्यवर्णाः शुचयः पावकाः" इति चतसृभिः ऋग्भिः "शं नो देवीरभिष्टये" इति पञ्चम्या च तं स्नापयेत् ॥ ११ ॥ स्नातं तूक्तविधिना, अलंकृतं मनुपठीयस्त्रालंकरणैः, स्नाताभिः वृषेण सहैवोक्तमन्त्रैः, अलंकृताभिः दानकालीनैः वस्त्रालंकरणैः, वत्सतरीभिः न्यूनवयस्काभिः, रुद्रान् "नमस्ते रुद्र मन्यवे" इत्येकादशानुवाकान्, पुरुषसूक्तं "सहस्रशीर्षा" इति षोडशर्चं, कूश्माण्डीः "यद्देवा देवहेडनम्" इत्यनुवाकत्रयं च जपेत् ॥ १२ ॥

पिता वत्सानामिति[2] वृषभस्य दक्षिणे कर्णे पठेत् ॥ १३ ॥ इमं च ॥ १४ ॥

वृषो हि भगवान् धर्मश्चतुष्पादः प्रकीर्तितः ।
वृणोमि तमहं भक्त्या स मे रक्षतु सर्वतः ॥ १५ ॥
एतं युवानं पतिं वो ददा-
म्यनेन क्रीडन्तीश्चरत प्रियेण ।
मा हास्महि प्रजया मा तनूभि-
र्मा रधाम द्विषते सोम राजन् ॥ १६ ॥

"पिता वत्सानाम्" इति काठकीयो मन्त्रः । तं वृषभस्य दक्षिणे कर्णे पठेत् ॥ १३ ॥ इमं वक्ष्यमाणम् ॥ १४ ॥ तमेवाह । धर्मस्य वृषरूपत्वात् चतुष्पात्त्वम् । मे माम् ॥ १५ ॥ भो वत्सतर्यः, वः युष्मभ्यम् [3]एतं युवानं तरुणं पतिम् अहं ददामि । अनेन प्रियेण मनोऽनुकूलेन पत्या सह क्रीडन्तीः क्रीडन्त्यो यूयं चरत । हे राजन् सर्वापेक्षया विराजमान सोम्य, वयं प्रजया संतत्या तनूभिः तच्छरीरैश्च मा हास्महि मा त्यक्ता भवेम । द्विषते शत्रवे च मा रधाम मा वश्या भवेम ॥ १६ ॥

वृषं वत्सतरीयुक्तमैशान्यां कारयेद् दिशि ।
होतुर्वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च ॥ १७ ॥

1 तत्र रुद्रान्—ठ. 2 मन्त्रं added in ठ. 3 एनम्—ग.

**अयस्कारस्य दातव्यं वेतनं मनसेप्सितम् ।**
**भोजनं बहुसर्पिष्कं ब्राह्मणांश्चात्र भोजयेत् ॥ १८ ॥**

ताभिः वत्सतरीभिः युक्तं तं वृषभम् ऐशान्यां दिशि कारयेत् सेवकद्वारा नाययेत् । होतुराचार्यस्य वस्त्रयुगं सुवर्णम् उक्तपरिमाणं कांस्यपात्रं च दद्यात् । अनेन प्रागेवाचार्यवरणं गमयति ॥ १७ ॥

अङ्कयितुः लोहकारस्य अभीष्टं तोषकं वेतनं [1]प्रभूतघृतभोजनं च दद्यात् । एतत्कर्मसाद्गुण्याय त्रीन् ब्राह्मणान्, चकारात् सुहृदश्च भोजयेत् ॥ १८ ॥

**उत्सृष्टो वृषभो यस्मिन् पिबत्यथ जलाशये ।**
**जलाशयं तत् सकलं पितॄंस्तस्योपतिष्ठति ॥ १९ ॥**
**शृङ्गेणोल्लिखते भूमिं यत्र क्वचन दर्पितः ।**
**पितॄणामन्नपानं[2] तत् [3]प्रभूतमुपतिष्ठति ॥ २० ॥**

इति [4]श्रीविष्णुस्मृतौ षडशीतितमोऽध्यायः

उक्तकर्मणः फलमाह । यस्मिन् यस्मिन् जलाशये तडागादौ उत्सृष्टः वृषभः जलं पिबति, स सकलोऽपि जलाशयः तत्पानानन्तरमेव तस्य उत्स्रष्टुः पितॄन् उपतिष्ठति तर्पयति ॥ १९ ॥

किंच यत्र क्वापि नदीकूलारण्यादौ दर्पातिशयेन उत्सृष्टः वृषभः शृङ्गाग्रेण भूमिम् उल्लिखति, तदेवोल्लिखनम् उत्स्रष्टुः पितॄणां प्रभूतम् अन्नपानं भूत्वा उपतिष्ठते ॥ २० ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[6]श्रीरामपण्डितात्मज-
[6]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
षडशीतितमोऽध्यायः

[1] प्रभूतघृतं भोजनं—ख, ग.
[2] मन्नदानं तत्—ट.
[3] प्रभूतमधितिष्ठति—घ.
[4] वैष्णवे धर्मशास्त्रे वृषोत्सर्गप्रकरणं षडशीतितमम्—ज, ठ.
[5] श्रीविष्णुस्मृतिविवृतौ षडशीतितमोऽध्यायः—घ, च.
[6] श्री omitted in ग.

## सप्ताशीतितमोऽध्यायः

अथ वैशाख्यां पौर्णमास्यां [1]कृष्णाजिनं सखुरं सश्रृङ्गं [2]सुवर्णश्रृङ्गं रौप्यखुरं मौक्तिकलाङ्गूलभूषितं कृत्वा आविके च वस्त्रे [3]प्रसारयेत् ॥ १ ॥ [4]ततस्तिलैः प्रच्छादयेत् ॥ २ ॥

अथ सप्तभिरध्यायैः दानप्रकरणमारभते । तत्र सप्ताशीतितमेन कृष्णाजिनदानमाह । अथेति दानप्रस्तावः । वैशाखमाससंबन्धिन्यां विशाखायोगिन्यां वा पौर्णमास्याम् । पौर्णमासीग्रहणं माघ्यादिप्राप्त्यर्थम्;

"पौर्णमासी तु या माघे आषाढी कार्त्तिकी तथा ।
उत्तरायणं द्वादशी वा ग्रहणं शशिसूर्ययोः ॥"

इति मात्स्यात् । कृष्णमृगस्य अजिनं खुरैः चतुर्भिः श्रृङ्गद्वयेन चावियुक्तं दशसौवर्णिकहेमघटितश्रृङ्गद्वयं पञ्चपलरौप्यघटितचतुःखुरम्; "दशसौवर्णिके श्रृङ्गे खुराः पञ्चपलान्विताः" इति मात्स्यात् । खुरा दन्तोपलक्षणम्; "कर्तव्यं रुक्मश्रृङ्गं [5]तद् भुग्नदन्तं तथैव च" इति मात्स्यात् । मुक्तिकानामिदं मौक्तिकं दाम । तेन लाङ्गूले पुच्छे भूषितं कृत्वा, आविके वस्त्रे कम्बले, चकारात् गोमयोपलिप्ते कुशास्तीर्णे देशे च प्रसारयेत्;

"गोमयेनोपलिप्ते तु शुचौ देशे नराधिप ।
कुशास्तीर्णे समास्तीर्य शोभनं वस्त्रमाविकम् ॥"

इति मात्स्यात् । प्रकर्षं चाह पुलस्त्यः—"अन्तर्मांसं बहिर्लोम [6]प्राग्ग्रीवं स्यात्" इति ॥ १ ॥ तत आस्तरणानन्तरं तत् तिलैः प्रकर्षेण यथाजिनभागो न दृश्यते, तथा आच्छादयेत् । तिलोच्चता तूपविष्टयजमानसमा; "तिलैरात्मसमं कृत्वा वाससाच्छादयेद् बुधः" इति मात्स्यात् । तदशक्तौ "तिलद्रोणान्वितं च तत्" इति कालिकापुराणीयम् । तत्राप्यशक्तौ "प्रस्था ह्यष्टौ तिलस्य वै" इति आदित्यपुराणीयं ग्राह्यम् ॥ २ ॥

[1] कृष्णमृगाजिनं सुवर्णश्रृङ्गं—Jolly's edition.

[2] सुवर्णश्रृङ्गं omitted in घ.

[3] प्रसारिते प्रस्तारयेत्—ङ.

[4] Sūtra-s 2 and 3 found in inverted order—ङ.

[5] तद्द्रव्यदन्तं तथैव च—ग.

[6] प्राग्ग्रीवं omitted in ख, ग.

**सुवर्णनाभिं च कुर्यात् ॥ ३ ॥ अहतेन [1]वासोयुगेन प्रच्छादयेत् ॥ ४ ॥ सर्वगन्धरत्नैश्चालंकृतं कुर्यात् ॥ ५ ॥**

सुवर्णपरिमितेन हेम्ना तस्य नाभिं कुर्यात्। चकारात् नेत्रे च; "सुवर्णनाभिं नेत्रे च कुर्याद्रत्नसमन्विते" इति **स्कान्दात्** ॥ ३ ॥

"ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
अहतं तद्विजानीयात् सर्वकर्मसु पावनम् ॥"

इत्युक्तलक्षणेनाहतेन वस्त्रयुग्मेनापादशृङ्गं छादयेत् ॥ ४ ॥

"कर्पूरं चन्दनं दर्पं कुङ्कुमं च समांशकम्।
सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥"

इति **गारुडोक्तैः** सर्वगन्धैः,

"कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम्।
एतानि पञ्च रत्नानि रत्नशास्त्रविदो विदुः ॥"

इति सर्वरत्नैः; चकारात् पुष्पमालादिभिश्चालंकुर्यात् ॥ ५ ॥

**चतसृषु दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिमधुघृतपूर्णानि निधायाहिताग्नये ब्राह्मणायालंकृताय [2]वासोयुगेन प्रच्छादिताय दद्यात् ॥ ६ ॥**

पूर्वादिचतुर्दिक्षु तैजसानि ताम्ररौप्यकांस्यसौवर्णानि **पुलस्त्योक्तानि मत्स्योक्तानि** कांस्यपात्राणि वा क्रमेण क्षीरादिभिश्चतुर्भिः पूर्णानि निधाय अग्निहोत्रिणे विप्राय वस्त्रयुग्मेनाच्छादितायोदकपूर्वं च पुच्छे दद्यात्;

"दद्यात् कृष्णाजिनं पुच्छे गां पुच्छे करिणं करे।
केसरेषु तथैवाश्वं दासीं शिरसि दापयेत् ॥"

इति **स्मरणात्**। दक्षिणा चास्य **गारुडे**—

"शतनिष्कसमोपेतं तदर्धार्धमथापि वा।
अतो न्यूनं न दातव्यमधिके फलमूर्जितम् ॥"

इति ॥ ६ ॥

**अत्र [3]च गाथा भवन्ति ॥ ७ ॥**

[1] वासोयुगलेन सर्वगन्धैः रत्नैश्चालंकुर्यात्—ज, ठ.
[2] वासोयुगोपच्छादिताय—ठ.
[3] च omitted in ठ.

यस्तु कृष्णाजिनं दद्यात् सखुरं शृङ्गसंयुतम् ।
तिलैः प्रच्छाद्य वासोभिः [1]सर्वरत्नैरलंकृतम् ॥ ८ ॥
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद् दत्ता पृथिवी नात्र संशयः ॥ ९ ॥
कृष्णाजिने तिलान् कृत्वा [2]हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ १० ॥

इति [3]श्रीविष्णुस्मृतौ सप्ताशीतितमोऽध्यायः

अस्य फलवचनाय संमतिमाह ॥ ७ ॥ तामाह । उक्तविधिना कृष्णाजिनदाने चतुरुदधिवेलावलयितपृथ्वीवलयदानफलसमं फलं भवतीति निःसंदिग्धम् ॥ ८, ९ ॥

पापक्षयार्थे तस्मिन् विधिविशेषमाह । सर्वपापक्षयार्थे कृष्णाजिनदाने न पूर्वोक्तो विधिः । किंतु प्रतिपदोक्त एव । कृष्णाजिनं तिलैः संपूर्य हिरण्यमधुघृतयुक्तं दद्यादिति । यद्यपि 'सर्वं तरति दुष्कृतम्' इति सामान्येनोक्तम्, तथापि महापातकव्यतिरिक्तमिति ध्येयम्; तत्र आर्द्रकृष्णाजिनदानस्य **विष्णुधर्मोत्तरे**ऽभिधानात् । तद्विधिस्तु गोमयेनोपलिप्तायां प्राक्प्रवणायां भूमौ हरितदर्भानास्तीर्य तत्रार्द्रं साङ्गं कृष्णाजिनं प्राग्ग्रीवमुत्तरलोमास्तीर्य, संप्रदानतया वृतस्य पादौ प्रक्षाल्य, कृष्णे वाससी परिधाप्य, कुण्डलमुद्रिकाभ्यामलंकृत्य, स्रगादिभिः संपूज्य, तमजिनशृङ्गमध्ये प्राङ्मुखमवस्थाप्य, दशसुवर्णैः शृङ्गे विभूष्य, कृष्णतिलैः विप्रं सशिरस्कं प्रच्छाद्य, तिलेषु तच्छिरसि मग्ने यजमानः स्वकृतं महापातकं ध्यात्वा, गायत्रीं मूलमन्त्रं वा जपेत् । ततो नाभिपर्यन्तं तिलानपसार्य, पुनस्तिलैः प्रच्छाद्य, पूर्ववन्मन्त्रं जप्त्वा, पुनस्तिलान्नाभिं यावदपसार्य, पुनस्तिलैः प्रच्छाद्य, मन्त्रं जप्त्वा, तिलमग्न एव विप्रे दाता मनसा पात्रमुद्दिश्य [4]जले जलं क्षिप्त्वा 'विश्वात्मा प्रीयताम्' इति [5]त्यक्त्वा सौवर्णनिष्कसहस्रं दक्षिणां दद्यात् । एवं महापातकेभ्यो मुक्तः परमं स्थानं प्राप्नोतीति ॥ १० ॥

इति [6]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-
**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि[7]**श्रीरामपण्डित**ात्मज-
[7]**श्रीनन्दपण्डित**कृतौ **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां**
सप्ताशीतितमोऽध्यायः

[1] सर्ववस्त्रैः—घ.
[2] सुवर्णं—ज, ठ.
[3] वैष्णवे धर्मशास्त्रे कृष्णाजिनप्रकरणं सप्ताशीतितमम्—ज, ठ.
[4] अञ्जलौ जलं—घ.
[5] उक्त्वा—घ.
[6] श्रीविष्णुस्मृतिविवृतौ सप्ताशीतितमोऽध्यायः—ग, घ, च.
[7] श्री omitted in ग.

# अष्टाशीतितमोऽध्यायः

**अथ प्रसूयमाना गौः पृथिवी भवति ॥ १ ॥ तामलंकृतां ब्राह्मणाय[1] दत्त्वा पृथिवीदानफलमाप्नोति ॥ २ ॥**

अष्टाशीतितमेनोभयतोमुखीदानं वक्तुं फलातिशयाय तत्प्रशंसामाह । यदा वत्सस्य पादद्वयं मुखं च गोः योनिमण्डले दृश्यते तदासौ पृथिवी भवति । यथाह **योगीश्वरः**—

"यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते ।
तावद्गौः पृथिवीतुल्या[2] यावद्गर्भं न मुञ्चति ॥"

इति ॥ १ ॥ ताम् उभयतोमुखीम् । प्रक्रान्तपरामर्शः प्रसवकालस्यैव दानकालत्ववचनाय; "उभयशिरसं दद्यात् । तस्याः प्रदानकालः प्रसवकाले नान्यं कालं प्रतीक्षेत" इति **च्यवनस्मरणात्** । अलंकृतां स्वर्णशृङ्गादिभिः । यथा **मात्स्ये**—

"स्वर्णशृङ्गीं रौप्यखुरां[3] मुक्तालाङ्गूलभूषिताम् ।
कांस्योपदोहां राजेन्द्र सूयमानां तु गां ददेत्[4] ॥"

इति । अलंकरणं ब्राह्मणेऽप्यन्वेति । तस्याः सकुशतिलोदकं पुच्छं ब्राह्मणहस्ते दत्त्वा [5]पृथिवीदानफलसमं फलमाप्नोति । अत्र दक्षिणामाह **देवलः**—

"अलंकृत्योक्तविधिना सुवर्णत्रिपलान्विता ।
दातव्या द्विपला मध्या पलाढ्या त्वधमा मता ॥"

इति । सैव चेत् कपिला, तदा **वाराहोक्ता** दक्षिणा;

"सुवर्णस्य सहस्रेण तदर्धेनापि वा पुनः ।
तस्याप्यर्धं शतं वापि पञ्चाशच्च ततोऽर्धकम् ॥"

[1] विप्राय—ज, ड. [2] ज्ञेया—ख, ग. [3] खुरीं—घ.
[4] ददत्—च. [5] पृथिवीदानसमं—घ.

इति। महोभयमुखीदाने तु च्यवनः—"परिकरोऽस्याः सुवर्णं रजतं रत्नानि क्षेत्राणि ग्रामा वा धान्यानि वस्त्राणि रसा लवणाद्याश्चन्दनाद्या गन्धाः शतं गवां तदर्धं वा सर्वस्वं वा [1]सह तया ब्राह्मणाय दद्यात् पातकमुक्तये" इति ॥ २ ॥

**अत्र गाथा भवति ॥ ३ ॥**

**सवत्सारोमतुल्यानि [2]युगान्युभयतोमुखीम्।**
**दत्त्वा स्वर्गमवाप्नोति श्रद्दधानः समाहितः ॥ ४ ॥**

**इति [3]श्रीविष्णुस्मृतौ अष्टाशीतितमोऽध्यायः**

फलान्तरवचने संमतिमाह ॥ ३ ॥ तामाह। सवत्साया गोर्यावन्ति रोमाणि तत्समसंख्यानि युगानि उभयतोमुखीं दत्त्वा स्वर्गमाप्नोति। अनन्यमनस्कः श्रद्दधानश्चेत्[4] ॥ ४ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
अष्टाशीतितमोऽध्यायः

1 सहानया—घ.
2 कुलानि—ज, ठ.
3 वैष्णवे धर्मशास्त्रे अष्टाशीतितमं प्रकरणम्—ज, ठ.
4 चरेत्—घ.
5 श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामष्टाशीतितमोऽध्यायः—घ, च.

## एकोननवतितमोऽध्यायः

**[1]मासः कार्त्तिकोऽग्निदैवत्यः[2] ॥ १ ॥ अग्निश्च सर्वदेवानां मुखम् ॥ २ ॥ तस्मात्तु कार्त्तिकं मासं बहिःस्नायी[3] गायत्रीजपनिरतः सकृदेव[4] हविष्याशी संवत्सरकृतात् पापात् पूतो भवति ॥ ३ ॥**

एकोननवतितमेन कार्त्तिकस्नानविधिं वक्तुं तत्प्रशंसामाह। कृत्तिकोपलक्षितपौर्णमासीयुक्तो मासः कार्त्तिकः। कृत्तिकानां चाग्निदैवत्यत्वात् मासस्याप्यग्निदैवत्यत्वम् ॥ १ ॥ "अग्निमुखा वै देवाः" इति श्रुतेः अग्निः सर्वदेवानां मुखम्; अग्निहुतस्य सर्वदेवतागामित्वात् ॥ २ ॥ विधेयांशमाह। तस्मादिति। सर्वदेवमुखाग्निदैवत्यत्वं पापक्षये हेतुतया परामृश्यते। तुशब्दोऽवधारणे। कार्त्तिकं मासमिति द्वितीयया अत्यन्तसंयोगेन कृष्णप्रतिपदमारभ्य पौर्णमासीपर्यन्तता स्नानस्य सिध्यति। पुराणे तु—

"इषस्य शुक्लैकादश्यां प्रारभ्य स्नानमाचरेत्।
निशातुर्यांशशेषे तु यावदुद्बोधिनी भवेत् ॥"

इत्युक्तम्। बहिः; अनुद्धृतोदकेन। स्नायी; स्नानविधिना स्नानशीलः। गायत्रीजपे निरतः अविच्छिन्नारब्धसंख्यानिर्वाहेण तत्परः। सकृत्; द्वितीयभोजनपरिहारेणैव प्रारब्धनियमाभङ्गेन हविष्याशनशीलः। हविष्याणि च पाद्मे—

"हैमन्तिकं [5]सितास्विन्नं धान्यं मुद्गा यवास्तिलाः।
कलायकङ्गुनीवारा वास्तुकं हिलमोचिका ॥
षष्टिका कालशाकं च मूलकं केमुकेतरत्।
कन्दः सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी।
तिन्त्रिणी जीरकं चैव [6]नागरङ्गं च पिप्पली ॥

1 मासश्च—ठ.
2 अग्निश्च सर्वदैवत्यः added in ठ.
3 स्यात् added in ठ; जितेन्द्रियः added in घ.
4 एव omitted in ठ.
5 सिताश्वेतं—ख, ग.
6 नागराङ्गं—घ.

कदली [1]लवली धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्कं मुनयो हविष्यान्नं प्रचक्षते ॥ ”

इति । हेमन्ते भवं हैमन्तिकम् । सिता वालुकाः; तासु पक्कम् । गङ्गातीरसिकतोद्भवं तद्धैमन्तिकमपि; शाल्य[2] इति यावत् । धान्यं वक्ष्यमाणमेव; न पृथक् । केमुकं पिण्डमूलकम्; तदितरत् दीर्घमूलकमिति यावत्; “दीर्घमूलकमेव च” इति **वायवीयात्** । कन्दः; सूरणः; “अर्शोघ्नः सूरणः कन्दः” इति **त्रिकाण्डी**स्मरणात्; “वर्जयेद्रक्तकन्दं तु कार्त्तिके सूरणं विना” इति **नारदीयात्** । नागरङ्गं शुण्ठी । लवली द्राक्षेति केचित् । संवत्सरेण षष्ट्यधिकशतत्रयाहोरात्रसमूहेन यत्कृतं पापं तस्मान्मुक्तः पूतो भवति ॥ ३ ॥

**कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।**
**जपन् हविष्यभुग्दान्तः[3] सर्वपापैः प्रमुच्यते ॥ ४ ॥**

**इति [4]श्रीविष्णुस्मृतौ एकोननवतितमोऽध्यायः**

तस्यैव गुणविशेषेण संयोगान्तरमाह । सकलम्; चान्द्रं सौरं वा; “तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः” इति **स्मरणात्** । नित्यम् अविच्छेदेन अरुणोदये स्नानशीलः बाह्येन्द्रियजयी गायत्रीं जपन् हविष्याशी मनोनिग्रहवान् महापातकातिपातकातिरिक्तैः प्रकाशैः तैरपि रहस्यैश्च मानसापनोद्यैः पापैः प्रमुक्तो भवति ॥ ४ ॥

इति [5]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-
श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारिश्री**रामपण्डिता**त्मज-
**श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्याम्**
एकोननवतितमोऽध्यायः

1 लघली—ख, ग. 2 राजयः—ख. 3 शान्तः—ज, ठ.
4 वैष्णवे धर्मशास्त्रे कार्त्तिकव्रतप्रकरणमेकोननवतितम्—ज, ठ.
5 श्रीविष्णुस्मृतिविवृतौ एकोननवतितमोऽध्यायः—घ, ज.

## नवतितमोऽध्यायः

**मार्गशीर्षशुक्लपञ्चदश्यां [1]मृगशिरसा युक्तायां [2]चूर्णित-लवणस्य सुवर्णनाभं प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रदापयेत्[3] ॥ १ ॥**
**अनेन कर्मणा रूपसौभाग्यवानभिजायते ॥ २ ॥**

नवतितमेन प्रकीर्णकदानान्याह । मार्गशीर्ष्यां पौर्णमायां मृगशिरोनक्षत्रयोगे पिष्टस्य लवणस्य प्रस्थं षोडशपलं, सुवर्णः षोडशमाषः नाभौ मध्ये यस्य तं चन्द्रोदयकाले विप्राय विधिना दद्यात् ॥ १ ॥ अस्य फलमाह । तेन च रूपं सौन्दर्यं सौभाग्यं सुभगत्वमाप्नोति ॥ २ ॥

**पौषी चेत् पुष्ययुक्ता स्यात्, तस्यां गौरसर्षपकल्कोद्वर्तित-शरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः सर्वौषधिभिः सर्वगन्धैः सर्वबीजैश्च स्नातो घृतेन भगवन्तं वासुदेवं स्नापयित्वा [4]गन्धपुष्प-धूपदीपनैवेद्यादिभिरभ्यर्च्य वैष्णवैः शाक्रैर्बार्हस्पत्यैश्च मन्त्रैः [5]पावके हुत्वा ससुवर्णेन घृतेन ब्राह्मणान्[6] स्वस्ति वाचयेत् ॥ ३ ॥**

पौष्यां पुष्ययोगे श्वेतसर्षपचूर्णेन शरीरमुद्वर्त्य गोघृतेन कुम्भपरिमितेनाभिषिक्तः सर्वौषधिभिः,

"मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शठी चम्पकमुस्ता च सर्वौषधिगणः स्मृतः ॥"

इत्युक्ताभिः, सर्वगन्धैः [7]कर्पूरचन्दनकस्तूरीकुङ्कुमैः, सर्वबीजैः,

"यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च ।
श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् ॥"

[1] मृगशीर्षयुतायाम्—ठ. [2] चूर्णितलवणप्रस्थं—ठ. [3] प्रतिपादयेत्—ज.
[4] पुष्पगन्धनैवेद्यादिभिः—ठ. [5] यावकं—ठ.
[6] भोजयित्वा added in ज, ठ. [7] कर्पूर omitted in घ.

इत्युक्तैः; चकारात् जलैश्च स्नातः, घृतेन गव्येन पञ्चविंशतिपलेन,

" देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत् ।
पलानि तस्यै देयानि श्रद्धया पञ्चविंशतिः ॥ "

इति स्मरणात्, भगवन्तं वासुदेवं संस्नाप्य गन्धादिपञ्चभिः, आदिशब्देन ताम्बूलेन चाभ्यर्च्य, वैष्णवैः " इदं विष्णुर्विचक्रमे " इत्यादिभिः, शाक्रैः " त्रातारमिन्द्रम् " इत्यादिभिः, बार्हस्पत्यैः " बृहस्पते अति यदर्यः " इत्यादिभिः, चकारात् स्विष्टकृन्मन्त्रेण चाग्नौ हुत्वा ससुवर्णघृतं त्रिभ्यो ब्राह्मणेभ्यो दद्यात् । ते च स्वस्तीति प्रतिगृह्णीयुः ॥ ३ ॥

**वासोयुगं[1] कर्त्रे दद्यात् ॥ ४ ॥ अनेन कर्मणा पुष्यते ॥ ५ ॥ माघी मघायुता चेत्, तस्यां तिलैः श्राद्धं कृत्वा [2]पूतो भवति ॥ ६ ॥ फाल्गुनी फल्गुनीयुता चेत्, तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्यां मनोज्ञां [3]रूपवतीं द्रविणवतीं चाप्नोति ॥ ७ ॥ नार्यपि भर्तारम् ॥ ८ ॥**

होमकर्त्रे वस्त्रयुग्मं देयम् । अनेन होमकर्ता अतिरिक्तो गम्यते ॥ ४ ॥ तेन च पुष्टिभाग्भवति ॥ ५ ॥ माघ्यां मघायोगे तिलमात्रभोज्येन श्राद्धं कृत्वा पवित्रो भवति ॥ ६ ॥ फाल्गुन्यामुत्तरफल्गुनीयोगे पट्टपट्टिकादिसंवीतं शुभास्तरणं शयनं विप्राय[4] दत्त्वा मनोहरां सुन्दरीं धनवतीं भार्यां प्राप्नोति । चकारात्,

" तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ।
उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् ॥
ताम्बूलकुङ्कुमक्षोदकर्पूरागरुचन्दनम् ।
दीपिकोपानहच्छत्रचामरासनभाजनम् ॥
शयनस्थस्य भवति यदन्यदुपकारकम् ।
भृङ्गारकरकाद्यं च पञ्चवर्णवितानकम् ।
शय्यामेवंविधां कृत्वा ब्राह्मणायोपपादयेत् ॥ "

इत्यादि ज्ञेयम् ॥ ७ ॥ नार्यपि चेत् उक्तविधिना शय्यां ददाति, तदा उक्तगुणविशिष्टं भर्तारं प्राप्नोति ॥ ८ ॥

**चैत्री चित्रायुता चेत्, तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति ॥ ९ ॥ [5]वैशाखी विशाखायुता चेत्, तस्यां ब्राह्मणसप्तकं**

[1] च added in ज.
[2] भवति पूतः—घ.
[3] पक्षवतीं—ठ.
[4] विप्राय omitted in घ.
[5] वैशाख्यां पौर्णमास्यां ब्राह्मण—ठ.

**क्षौद्रयुक्तैस्तिलैः संतर्प्य धर्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति ॥ १० ॥**

चैत्र्यां [1]चित्रायोगे वस्त्रं दत्त्वा सौभाग्यभाग्भवति ॥ ९ ॥ वैशाख्यां विशाखायोगे सप्त विप्रान् धर्मराजप्रीतये मधुमिश्रान् तिलान् भोजयित्वा पापेभ्यो मुच्यते ॥ १० ॥

**ज्यैष्ठी ज्येष्ठायुता चेत् स्यात्, तस्यां छत्रोपानह्प्रदानेन [2]गवाधिपत्यं प्राप्नोति ॥ ११ ॥ आषाढ्यामाषाढायुक्तायामन्नपानदानेन [3]तदेवाक्षय्यमाप्नोति ॥ १२ ॥ श्रावण्यां श्रवणयुक्तायां[4] जलधेनुं सान्नां वासोयुगाच्छादितां दत्त्वा [5]स्वर्गमाप्नोति ॥ १३ ॥ प्रौष्ठपद्यां [6]प्रोष्ठपदायुक्तायां गोदानेन सर्वपापविनिर्मुक्तो[7] भवति ॥ १४ ॥**

ज्यैष्ठ्यां ज्येष्ठायोगे छत्रोपानहौ दत्त्वा गोमान् भवति ॥ ११ ॥ आषाढ्याम् उत्तराषाढायोगे अन्नपाने दत्त्वा अक्षय्यं तत् आप्नोति ॥ १२ ॥ श्रावण्यां श्रवणयोगे जलधेनुं विष्णुधर्मोत्तरोक्तविधिना सान्नामष्टादशधान्ययुताम्; "रत्नगर्भमशेषैस्तु ग्राम्यधान्यैः समन्विताम्" इति स्मरणात्; वस्त्रयुगाच्छन्नां दत्त्वा स्वर्गमाप्नोति ॥ १३ ॥ भाद्रपद्यामुत्तरभाद्रपदायोगे यथोक्तविधिना गां दत्त्वा महापातकातिपातकातिरिक्तैः पापैर्मुच्यते ॥ १४ ॥

**आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्णं भाजनं सुवर्णयुतं विप्राय दत्त्वा [8]दीप्ताग्निर्भवति ॥ १५ ॥ [9]कार्त्तिकी कृत्तिकायुता चेत् स्यात्, तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्वसस्यरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दत्त्वा कान्तारभयं न पश्यति ॥ १६ ॥ [10]वैशाखशुक्लतृतीयायामुपोषितोऽक्षतैः [11]श्रीवासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा च सर्वपापेभ्यः पूतो भवति ॥ १७ ॥ यच्च तस्मिन्नहनि प्रयच्छति [12]तदक्षय्यतामाप्नोति ॥ १८ ॥**

1 चित्रायोगे omitted in घ.
2 नगराधिपत्यं—ठ.
3 अक्षय्यं तत् प्राप्नोति—ग.
4 श्रवणयुतायां—ठ.
5 स्वर्गलोकमाप्नोति—ग, ज.
6 तद्युतायां—ठ.
7 सर्वपापमुक्तः—ठ.
8 दीप्ताग्नः—ठ.
9 कार्त्तिकी चेत् कृत्तिकायुता स्यात्—ठ.
10 वैशाखे मासि तृतीयायाम्—ज; वैशाखे तृतीयायाम्—ठ.
11 श्री omitted in घ.
12 तदक्षयमाप्नोति—ठ.

आश्विन्याम् अश्विनीयोगे घृतपूर्णं षोडशपलं कांस्यपात्रं दत्त्वा दीप्तौदर्याग्निर्भवति। अश्विनीगते चन्द्रमसीत्यनेन यस्मिन् काले अश्विनीपौर्णमासीयोगः, तस्मिन् काल इत्युक्तं भवति ॥ १५ ॥ कार्त्तिक्यां कृत्तिकायोगे श्वेतमन्यवर्णं वा वृषभं चन्द्रोदये सर्वसस्यैः सर्वरत्नैः सर्वगन्धैश्च पूर्वोक्तैर्युतं पार्श्वयोः दीपान् प्रज्वाल्य विप्राय दत्त्वा दुर्गमे वर्त्मनि भयं नाप्नोति ॥ १६ ॥ अक्षयतृतीयायाम् उपवासं संकल्प्य अखण्डितैः यवैः भगवन्तं संपूज्य यवानेव वासुदेवद्वादशाक्षरेणाष्टोत्तरसहस्रं शतं वा हुत्वा ब्राह्मणाय च दत्त्वा उक्तेभ्यः पापेभ्यो मुच्यते ॥ १७ ॥ यच्च सुवर्णरजतादि तद्दिने दद्यात्, तदक्षय्यं भवति। इदमेव चास्या अक्षयतृतीयात्वे निमित्तम् ॥ १८ ॥

**पौष्यां समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः स्नातस्तिलोदकं दत्त्वा तिलैर्वासुदेवमभ्यर्च्य [1]तानेव हुत्वा दत्त्वा भुक्त्वा च पापेभ्यः पूतो भवति ॥ १९ ॥ माघ्यां समतीतायां [2]कृष्णद्वादश्यां सोपवासः श्रवणं प्राप्य [3]श्रीवासुदेवाग्रतो महावर्तिद्वयेन दीपद्वयं दद्यात् ॥ २० ॥**

पौष्यनन्तरकृष्णद्वादश्याम् उपवासं संकल्प्य तिलैः स्नात्वा तिलैः पितॄंस्तर्पयित्वा तिलैर्देवं संपूज्य तिलानेवोक्तरीत्या हुत्वा दत्त्वा भुक्त्वा च उक्तपापेभ्यो विमुच्यते ॥ १९ ॥ माघ्यनन्तरकृष्णद्वादश्यां श्रवणयोगे उपवासं संकल्प्य देवाग्रे वक्ष्यमाणलक्षणवर्तिद्वयेन दीपद्वयं कृत्वा भगवते दद्यात् ॥ २० ॥

**दक्षिणपार्श्वे महारजनरक्तेन समग्रेण वाससा घृततुलामष्टाधिकां दत्त्वा ॥ २१ ॥ वामपार्श्वे तिलतैलयुतां साष्टां दत्त्वा श्वेतेन समग्रेण वाससा ॥ २२ ॥ एतत् कृत्वा यस्मिन् राष्ट्रेऽभिजायते यस्मिन् देशे यस्मिन् कुले तत्रोज्ज्वलो भवति ॥ २३ ॥**

दीपस्थानं द्रव्यवर्तिपरिमाणं चाह। देवस्य दक्षिणभागे महारजनं मञ्जिष्ठं, तेन रक्तेन समग्रेण सदशेन वाससा परिधानयोग्येन अष्टोत्तरशतपलपरिमितघृताप्लावितेनैकं दीपयेत् ॥ २१ ॥ देवस्य वामभागे अष्टोत्तरशतपलपरिमिततिलतैलाप्लावितसदशपरिधानीयश्वेतवाससा द्वितीयं दीपयेत् ॥ २२ ॥ अस्य फलमाह। उक्तदीपद्वयदानेन यत्र यत्राभिजायते तत्रतत्रोद्भटभोगवान् भवति ॥ २३ ॥

[1] तान्येव—ग. [2] कृष्णद्वादशीं सश्रवणां प्राप्य—ठ. [3] श्री omitted in घ.

**आश्विनं सकलं मासं ब्राह्मणेभ्यः [1]प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा [2]रूपभाग्भवति ॥ २४ ॥ [3]तस्मिन्नेव मासि प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा राज्यभाग्भवति ॥ २५ ॥ प्रतिमासं रेवतीयुते चन्द्रमसि [4]मधुघृतयुतं [5]पायसं रेवतीप्रीत्यै परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपस्य भागी भवति ॥ २६ ॥**

चान्द्रं सौरं वा आश्विनमासं विप्रेभ्योऽन्वहं घृतमश्विनोः प्रीत्यै दत्त्वा रूपवान् भवति ॥ २४ ॥ आश्विन एव मासि अन्वहं दधिदुग्धादिभिर्गव्यैर्विप्रत्रयं संभोज्य राज्यमाप्नोति ॥ २५ ॥ द्वादशस्वपि मासेषु रेवतीचन्द्रयोगे मधुघृतयुतं पायसं रेवतीप्रीत्यै परमान्नं [6]ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा [7]रूपस्य भागी भवति ॥ २६ ॥

**माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति ॥ २७ ॥ [8]सर्वां चतुर्दशीं नदीजले स्नात्वा [9]धर्मराजानं पूजयित्वा सर्वपापेभ्यः पूतो भवति ॥ २८ ॥**

यो वा माघमास्यन्वहमग्नौ तिलान् हुत्वा सघृतान् कुल्माषान् त्रीन् विप्रान् भोजयति, स दीप्तौदर्याग्निर्भवति ॥ २७ ॥ सर्वां कृष्णां शुक्लां च चतुर्दशीं नद्यां स्नात्वा धर्मराजम्; समासान्तविधेरनित्यत्वात् धर्मराजानमिति; संपूज्य सर्वपापेभ्यो मुच्यते ॥ २८ ॥

**[10]यदी च्छेद्विपुलान् भोगांश्चन्द्रसूर्यग्रहोपगान्[11] ।**
**प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥ २९ ॥**

**इति [12]श्रीविष्णुस्मृतौ नवतितमोऽध्यायः**

1 प्रत्यहं omitted in ठ.
2 रूपस्य भागी—ठ.
3 This Sūtra omitted in ठ.
4 दधिमधुयुतं—ठ.
5 पायसं रेवतीप्रीत्यै omitted in ग.
6 त्रीन् विप्रान्—घ.
7 रूपभाक्—ग.
8 This Sūtra omitted in ग.
9 धर्मराजं प्रीणयित्वा—ठ.
10 य इच्छेत्—ठ.
11 सूर्यचन्द्रग्रहोपगान्—ज.
12 वैष्णवे धर्मशास्त्रे दानविधिप्रकरणं नवतितमम्—ज, ठ.

चन्द्रसूर्यौ गृह्णातीति चन्द्रसूर्यग्रहः तदवस्थानकालः; तमुपगच्छन्तीति तदुपगाः; तदवस्थायिनो विविधान् भोगान् यदीच्छेत्, तदा माघफाल्गुनौ द्वौ मासौ प्रातःस्नानशीलो भवेत् ॥ २९. ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-[2]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
नवतितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां नवतितमोऽध्यायः—ङ, घ.
[2] श्री omitted in ग.

## एकनवतितमोऽध्यायः

**[1]अथ कूपकर्तुस्तत्प्रवृत्ते पानीये [2]दुष्कृतस्यार्धं विनश्यति ॥ १ ॥**

एकनवतितमेन कूपारामतडागादिदानमाह । अथेत्यवान्तरप्रकरणारम्भाय । यः कूपं खानयति तस्य तस्मिन् कूपे जलोत्पत्तावेव पापार्धं विनश्यति । इदं च निष्यन्दरूपतोयप्रवृत्तौ । मुसलधाराप्रवृत्तौ तु सर्वमेव पापं विनश्यति; "कूपः प्रवृत्तपानीयः सर्वं हरति दुष्कृतम्" इति **विष्णुधर्मोत्तरात्** । संस्कारे तु **तत्रैव**; "कूपकृत् स्वर्गमासाद्य सर्वान् भोगानुपाश्नुते" इति । कूपलक्षणं चाह **गर्गः**—

"कुर्यात् पञ्चकरादूर्ध्वं पञ्चविंशत्करावधि ।
कूपं वृत्तायतं प्राज्ञः सर्वभूतसुखावहम् ॥"

इति । स एव पञ्चकरादर्वाक् अवट इत्युच्यते; "अवटोऽर्वाक् स पञ्चभ्यः" इति **तस्यैव** स्मरणात् । तद्दानं च **स्कान्दे**—

"अवटं यो नरः कुर्यादपां पूर्णं सुशोभनम् ।
पितॄंस्तारयते पश्चात् तं दत्त्वा स नरोत्तमः ॥"

इति । स एव सोत्तारो वापीत्युच्यते;

"वापी दण्डत्रयादूर्ध्वं दशवर्गा नृपोत्तम ।
कर्तव्या सर्वतोत्तारा द्वित्रिश्चैकमथापि वा ॥"

इति **देवीपुराणात्** । दशवर्गा; शतदण्डेति यावत् । दण्डो दशहस्तः ॥ १ ॥

**तडागकृन्नित्यतृप्तो वारुणं लोकमश्नुते ॥ २ ॥ जलप्रदः सदा तृप्तो भवति ॥ ३ ॥**

"तलखातं तडागं तु विपाली चैष्टिकी मता ।
शोभाढ्या दीर्घिका प्रोक्ता चतुरश्रा तु वापिका ।
कूपः पादविहीनश्च सपादोत्तरणान्विता ॥"

[1] The whole of chapters 91 to 93 and Sūtra-s 1 to 9 of chapter 94 missing in ड.

[2] दुष्कृतं सर्वं—अ.

इति देवीपुराणोक्तलक्षणं तडागादिं यः करोति, स नित्यं पिपासारहितो वरुणलोकं प्राप्नोति ॥ २ ॥ तृषिताय जलदाता स्वर्गे युगशतं वितृष्णो भवेत्;

"योऽपि कश्चित् तृषार्ताय जलपानं प्रयच्छति।
स नित्यतृप्तो भवति स्वर्गे युगशतं नरः॥"

इति विष्णुधर्मोत्तरात् ॥ ३ ॥

**वृक्षारोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति ॥ ४ ॥ वृक्षप्रदो वृक्षप्रसूनैर्देवान् प्रीणयति ॥ ५ ॥ फलैश्चातिथीन् ॥ ६ ॥ छायया चाभ्यागतान् ॥ ७ ॥ देवे वर्षत्युदकेन पितॄन् ॥ ८ ॥**

[1]वृक्षाणामश्वत्थादीनाम् आरोपयितुः त एव वृक्षाः परलोके नरकनिवारणेन सुपुत्रकार्यकरा भवन्ति। यथोक्तम्—

"अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दश तिन्त्रिणीश्च।
कपित्थबिल्वामलकत्रयं च पञ्चाम्रवापी नरकं न पश्येत्॥"

इति ॥ ४ ॥ पुष्पवृक्षं फलवृक्षं [2]वा यो ददाति, तस्य दत्तवृक्षप्रसूनैर्देवाः प्रीयन्ते ॥ ५ ॥ वृक्षप्रदो दत्तवृक्षफलैरतिथीन् प्रीणयति ॥ ६ ॥ वृक्षप्रदो दत्तवृक्षच्छायया आश्रितान् प्रीणयति ॥ ७ ॥ दत्तवृक्षोपरि वृष्टौ जायमानायां यत् वृक्षपर्णेभ्यो जलं पतति, तेन वृक्षप्रदः पितॄन् प्रीणयति ॥ ८ ॥

**सेतुकृत् स्वर्गमाप्नोति ॥ ९ ॥ देवायतनकारी यस्य देवस्यायतनं करोति तस्यैव लोकमाप्नोति ॥ १० ॥**

वृष्टौ जायमानायां निम्नाभिमुखस्य जलस्य प्रतिबन्धको वप्रः सेतुः। तं यः करोति स स्वर्गमाप्नोति ॥ ९ ॥ यो यस्य देवस्य हरिहरादेरायतनं करोति, स तस्यैव देवस्य लोकं प्राप्नोति ॥ १० ॥

**[3]सुधासिक्तं कृत्वा यशसा विराजते ॥ ११ ॥ विचित्रं कृत्वा गन्धर्वलोकमाप्नोति ॥ १२ ॥ पुष्पप्रदानेन श्रीमान् भवति ॥ १३ ॥ अनुलेपनप्रदानेन कीर्तिमान्[4] ॥ १४ ॥ दीपप्रदानेन चक्षुष्मान् सर्वत्रोज्ज्वलश्च ॥ १५ ॥**

[1] From वृक्षाणाम् up to भवन्ति missing in ख.
[2] वा omitted in घ.
[3] सुधासितम्—घ.
[4] भवति added in Jolly's edition.

अन्यकृतमपि देवायतनं सुधयानुलिप्य यशस्वी भवति ॥ ११ ॥ यो देवायतनं [1]नीलपीतादिवर्णैश्चित्रयति, स गन्धर्वाणां लोकमाप्नोति ॥ १२ ॥ मल्लिकादिपुष्पदानेन [2]श्रीमान् भवति ॥ १३ ॥ कस्तूरिकाद्यनुलेपनादिदानेन[3] उत्कटा कीर्तिः; "मृगदर्पप्रदानेन यशस्वी भुवि जायते" इति **विष्णुधर्मोत्तरात्**[4]। अनुलेपनग्रहणमन्येषामपि फलविशेषाणामवगमाय। यथा **तत्रैव**—"अनुलेपनदानेन रूपवानभिजायते" इत्यादि ॥ १४ ॥ देवे द्विजे वा दीपं दत्त्वा चक्षुःपाटववान् सर्वत्रोद्भटभोगवांश्च भवति ॥ १५ ॥

**अन्नप्रदानेन बलवान् ॥ १६ ॥ देवनिर्माल्यापनयनात् गोदानफलमाप्नोति ॥ १७ ॥ देवगृहमार्जनात् तदुपलेपनात् ब्राह्मणोच्छिष्टमार्जनात्[5] पादशौचादकल्यपरिचरणाच्च[6] ॥ १८ ॥**

भक्ष्यभोज्याद्यन्नं दत्त्वा बलवान् भवति ॥ १६ ॥ हरिहरादिदेवनिर्माल्यापनेता गोदानसमफलभाग्भवति ॥ १७ ॥ हरिहरादिदेवगृहस्य मार्जन्यादिना पांस्वपसारणात्, तस्यैव गोमयादिना उपलेपनात्, विप्रोच्छिष्टपात्रं प्रक्षाल्य [7]तत्स्थानानुलेपनात्, तस्यैव पादधावनात्, अस्वास्थ्ये शुश्रूषाकरणाच्च प्रत्येकं गोदानफलमाप्नोति ॥ १८ ॥

**कूपारामतडागेषु देवतायतनेषु च।**
**पुनः संस्कारकर्ता च लभते मौलिकं[8] फलम् ॥ १९ ॥**

**इति [9]श्रीविष्णुस्मृतौ एकनवतितमोऽध्यायः**

जीर्णकूपाद्युद्धर्तुः फलमाह। कूपादीनाम् उपहतानां यथावत् करणं पुनः संस्कारः। तत्कर्ता मौलिकम्[8] आद्यकर्तुरेव फलं लभते। इदं तु यथावस्थितकरणे। विशिष्टकरणे[10] तु शतगुणम्। यथोक्तम्—

[1] नीलपीतादिभिः—घ.
[2] श्रीर्भवति—ग.
[3] अनुलेपनदानेन—ग.
[4] विष्णुधर्मीयात्—ख, ग.
[5] ब्राह्मणोच्छिष्टमार्जनात् omitted in ज.
[6] परित्राणात्—घ.
[7] तत्स्थलानुलेपनात्—ख, ग.
[8] मौक्तिकं—च.
[9] वैष्णवे धर्मशास्त्रे एकनवतितमं प्रकरणम्—ज.
[10] करणेन—ग.

" नष्टं कूलं भिन्नतडागकूपं प्रभ्रष्टराज्यं वसुधाधिपं च ।
देवालयं विप्रगृहं च नष्टं य उद्धरेत् [1]पूर्णशताधिकं फलम् ॥ "

इति ॥ १९ ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
एकनवतितमोऽध्यायः

1 पूर्व—घ.
2 श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यामेकनवतितमोऽध्यायः—घ, च.

## द्विनवतितमोऽध्यायः

**[1]सर्वदानाधिकमभयप्रदानम् ॥ १ ॥ तत्प्रदानेनाभीप्सितं लोकमाप्नोति ॥ २ ॥**

द्विनवतितमेनाभयादिदानमाह । चोरव्याघ्रादिभ्यो भीतानामभयदानं सर्वदानेभ्योऽधिकम्; देशकालपात्रविध्यनपेक्षणात्[2] ;

" चोरग्रस्तं नृपग्रस्तं रिपुग्रस्तं विमोक्षयेत् ।
व्यालग्रस्तं तथा विप्राः सोऽश्वमेधफलं लभेत् ॥ "

इति **विष्णुधर्मोत्तरात्** ॥ १ ॥ तस्याभयस्य प्रदानेन, प्रकर्षो वधान्धीकरणाङ्गच्छेदबन्धनताडनादिविविधव्यथापाकरणेन रक्षणम् ; तेनेप्सितमिन्द्रब्रह्मरुद्रादिलोकानां **विष्णुधर्मोत्तरो**क्तानामन्यतमं प्राप्नोति ॥ २ ॥

**[3]भूमिदानेन च ॥ ३ ॥ गोचर्ममात्रामपि भुवं प्रदाय सर्वपापेभ्यः पूतो भवति ॥ ४ ॥**

प्रादेशमारभ्य गोचर्मपर्यन्तां भूमिं दत्त्वा तल्लोकानामन्यतममिष्टं लोकमाप्नोति ॥ ३ ॥ संयोगान्तरमाह—

" दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्तनम् ।
दश तान्येव गोचर्म दत्त्वा स्वर्गे महीयते ॥ "

इत्युक्तलक्षणगोचर्मपरिमाणां भुवं दत्त्वा ब्रह्महत्यादिभ्यो महापातकेभ्यो मुच्यते ; यथा **कौर्मे**—

" मुच्यते ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।
भूमिं सर्वगुणोपेतां दत्त्वा पापात् प्रमुच्यते ॥ "

इति ॥ ४ ॥

**गोप्रदानेन [4]स्वर्गलोकमाप्नोति ॥५॥ दशधेनुप्रदो गोलोकान् ॥६॥**

[1] सर्वदानानामभयदानेनाभीष्टलोकमाप्नोति—ज.
[2] पात्र omitted in घ.
[3] भूमिप्रदानेन—ख, ग, च, Jolly's edition.
[4] स्वर्गमाप्नोति—ज.

गां जातिमात्रं दोग्ध्रीमदोग्ध्रीं वा नीरोगामदुर्बलामुक्तविधिना दत्त्वा स्वर्गलोकमाप्नोति ;

" यथा कथंचिद् दत्त्वा गां धेनुं वाधेनुमेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ "

इति **योगिस्मरणात्** ॥ ५ ॥ यथोपस्कराः दश धेनूः [1]सवत्सा दत्त्वा गोलोकानाप्नोति । बहुवचनात् नानात्वं लोकानां गमयति । वर्णविशेषानादरेणेदम् । दशवर्णधेनुदाने तु तत्तत्फलमेव । यथा **ब्राह्मे**—

" भोगसौख्यप्रदा श्वेता धूम्राभा पापनाशिनी ।
कृष्णा स्वर्णप्रदा ज्ञेया गौरी च कुलवर्धिनी ॥
रक्ता रुद्रप्रदा ज्ञेया पीता दारिद्र्यनाशिनी ।
पुत्रप्रदा कृष्णसारा नीला धर्मविवर्धिनी ।
कपिला सर्वपापघ्नी नानावर्णा च मोक्षदा ॥ "

इति । **तत्रैव** वृषभाधिक्ये फलान्तरम्—

" वृषभैकादशा दत्त्वा गा विप्राय समाहितः ।
शिवलोकमवाप्नोति शिवाय प्रतिपाद्य च ॥ "

इति ॥ ६ ॥

**शतधेनुप्रदो ब्रह्मलोकान् ॥ ७ ॥ सुवर्णशृङ्गीं [2]रौप्यखुरां मुक्तालाङ्गूलां कांस्योपदोहां वस्त्रोत्तरीयां दत्त्वा धेनुरोमसंख्यानि वर्षाणि स्वर्गलोकमाप्नोति ॥ ८ ॥**

शतं सवत्सा धेनूर्दत्त्वा नानाविधान् ब्रह्मलोकानाप्नोति । अवान्तरभेदाभिप्रायेण बहुवचनम् ॥ ७ ॥ सुवर्णशृङ्गीविधिमाह—

" दशसौवर्णिके शृङ्गे खुराः पञ्चपलान्विताः ।
पञ्चाशत्पलिकं ताम्रं कांस्यं स्यात् तावदेव तु ॥ "

इति । उक्तपरिमाणसुवर्णादिशृङ्गादिमतीं मुक्तादामलाङ्गूलां कांस्यमय उपदोहो दोहनपात्रं यस्याः । ताम्रपृष्ठामपि ;

" चामीकरमये शृङ्गे शुभे रौप्यमयाः खुराः ।
कांस्यजं दोहनं पृष्ठं ताम्रं वस्त्रयुगान्वितम् ॥

[1] सवत्सा omitted in ख.

[2] रौप्यखुरीं—घ, Jolly's edition.

पुष्पमालावृता पट्टघण्टाचामरभूषिता ।
दातव्या पुच्छदेशे तु श्रद्धया दक्षिणान्विता ॥ "

इति **देवलस्मरणात्** । सुशीला क्षीरिणी च ;

" हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंवृता ।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ "

इति **योगिस्मरणात्** । तां दत्त्वा गोरोमसमसंख्याकान् वत्सरान् स्वर्गमाप्नोति ॥ ८ ॥

**[1]विशेषतः कपिलाम् ॥ ९ ॥ दान्तं धुरंधरं दत्त्वा दशधेनुप्रदो भवति ॥ १० ॥**

कपिला चेत् हेमशृङ्गादियुता दीयते, तदा विशेषत आसप्तमं कुलं स्वर्गं नयति ; " कपिला चेत् तारयति भूयश्चासप्तमं कुलम् " इति **योगिस्मरणात्** ॥ ९ ॥ दान्तं सुशिक्षितं धुरंधरं भारोद्वहनक्षमं गोदानविधिना विशेषविधिना च ; " यो ददाति बलीवर्दमुक्तेन विधिना शुभम् " इति **स्कान्दात्** ; " उभयोः पार्श्वयोर्दत्त्वा छत्रोपानहकम्बलम् " इति **ब्राह्माच्च** । उक्तेन स्वर्णशृङ्गादिना दोहनपात्रवर्जं दत्त्वा दशधेनुदानफलमाप्नोति ; " दशधेनुप्रदानाच्च यत्फलं तत्समश्नुते " इति **भविष्योत्तरात्** । **देवलः**—

" वृषयुग्मं वृषं वापि दत्त्वा गत्वेश्वरालयम् ।
भुङ्क्ते मन्वन्तरं भोगान् द्विगुणान्[2] युग्मलाङ्गली ॥ "

इति ॥ १० ॥

**अश्वदः सूर्यसालोक्यमाप्नोति । ११ ॥**

यथोक्तलक्षणमश्वं यथोक्तविधिना दत्त्वा सूर्यसालोक्यमाप्नोति[3] । यथा **आदित्यपुराणे**—

" परिपूर्णाङ्गमुदितमुदासीनसमप्रभम् ।
सुविभक्तं सुकेशान्तं सुखक्षामं सुशोभनम् ॥
सर्वालंकारशोभाढ्यं दिव्यस्रगनुलेपनम् ।
सर्वोपकरणैर्युक्तं सर्वलक्षणशोभितम् ॥ "

सर्वोपकरणानि खलीनपल्याणादीनि ।

" दन्तेषु मुक्तिकास्तस्य प्रवालमधरोष्ठयोः ।
दद्याद् वज्रं तु नेत्राभ्यां वैडूर्यं वाप्यसंभवे ।
हेमरूप्ये च हस्ताभ्यां ताम्रं पादौ तु विन्यसेत् ॥ "

1 विशेषतश्च—ज. 2 द्विगुणान् missing in ख, ग. 3 आयाति—घ.

हस्तौ अग्रेतनौ पादौ। पादौ पश्चात्तनौ।

"अण्डौ चैवाण्डजैर्वस्त्रैर्विचित्रैः परिवेष्टयेत्।"

अण्डजैः कौशेयैः।

"आदित्याभिमुखं कृत्वा ब्राह्मणाय निवेदयेत्।"

इति। तस्यैव श्वेतत्वे विशेषो **गारुडे**—

"श्वेतमश्वं शुभं स्नातं हेमपल्याणभूषितम्।
रौप्यैस्तु कटकैः शुद्धैः करिदन्तोपशोभितम्॥
वज्रनेत्रं खुरैस्ताम्रैः क्षौमपुच्छं सुवाससम्।
शुभ्रेण पट्टकेनैव संयुतं स्वायुधान्वितम्॥
धान्यरत्नोपरिस्थं तु बद्धकच्छं सुपट्टकम्।"

पट्टकः गलपट्टः।

"एवं सुतेजसं चाश्वं ब्राह्मणाय निवेदयेत्॥"

इति॥ ११॥

**वासोदश्चन्द्रसालोक्यम्॥१२॥ सुवर्णदानेनाग्निसालोक्यम्॥१३॥**

वस्त्रं सामान्यं दत्त्वा चन्द्रसालोक्यं भजते। विशेषतस्तत्तत्फलं यथा—

"दत्त्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते।
दत्त्वा सरोमं तत्रापि फलं दशगुणं भवेत्॥"

इत्यादि ज्ञेयम्॥ १२॥ सुवर्णशब्दोऽत्र जातिवचनः; रूप्यसाहचर्यात्। ततश्च गुञ्जार्धमारभ्य [1]शतभारपर्यन्तं दाने अग्निसालोक्यं फलम्। विशेषस्तु तत्र तत्रोक्त एव **स्कान्दे**। यथा—गुञ्जागुञ्जार्धदाने शिवलोकः। सुवर्णदाने स्वर्गलोकः। सुवर्णद्वितीये अक्षया गतिः। सुवर्णशते ब्रह्मलोकः। यावज्जीवनिर्वाहक्षमे सर्वे लोकाश्च। शतमाने सर्वमायुरित्यादि ज्ञेयमसत्कृतात् **स्मृतिसिन्धोर्दानकाण्डात्**॥ १३॥

**रूप्यदानेन[2] रूपम्॥ १४॥ तैजसानां पात्राणां प्रदानेन पात्रीभवति सर्वकामानाम्॥ १५॥**

[1] शतपर्यन्तं—घ.

[2] प्रदानेन—ख.

परिमाणविशेषानादरेण जातिमात्रं रूप्यं दत्त्वा रूपवान् भवति । परिमाणविशेषेण तु पापक्षयाद्यपि **स्कान्दे**—

" यः प्रयच्छति विप्राय रजतं चापि निर्मलम् ।
स विधूयाशु पापानि [1]स्वर्गे लोके महीयते ।
रूपवान् सुभगः श्रीमानिह लोके च जायते ॥ "

इति ॥ १४ ॥ स्वर्णरूप्यादिपात्रदानेन धनपुत्रादिकामानां पात्रं भवति । **स्कान्दे**—

" भाजनं यः प्रयच्छेत हैमं रत्नविभूषितम् ।
सोऽप्सरःशतसंकीर्णे विमाने दिवि मोदते ॥
राजतं यः प्रयच्छेत विप्रेभ्यो भाजनं शुभम् ।
स गन्धर्वपुरं प्राप्य उर्वश्या सह मोदते ॥
ताम्रं यो भाजनं दद्याद् ब्राह्मणेभ्यो विशेषतः ।
स भवेद्यक्षराजस्य प्रभुर्बलसमन्वितः ॥ "

आयसेऽप्येतदेव ;

" ताम्रायसानां भाण्डानां दाता यक्षाधिपो भवेत् ।
यानि पापान्यनेकानि कामोत्थानि कृतानि च ।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ "

इति । पित्तलस्याप्येतदेव ; ताम्रयोनित्वात् । त्रपुसीसकयोस्तु मूलोक्तमेव फलम् । पात्रग्रहणाद्घटितदानेऽपि फलविशेषः । स च यथाधातु । **महाभारते**—

" ताम्रदः पुरुषो लोके भोगमाप्नोत्यनुत्तमम् ।
लोहारकूटयोर्दानात् कुप्यमाप्नोत्यसंशयम् ।
त्रपुसीसकयोर्दानाद् वह्निवृद्धिमवाप्नुयात् ॥ "

इति । कुप्यं धनम् । आरकूटं कांस्यपित्तलादि ॥ १५ ॥

## घृतमधुतैलप्रदानेनारोग्यम् ॥ १६ ॥ औषधप्रदानेन ॥ १७ ॥

घृतादिदानेनारोग्यम् ; अनागतरोगानुत्पत्तिः उत्पन्नस्य नाशश्चेति । **संवर्तः**—

" ये तु क्षीरं प्रयच्छन्ति घृतं मधु गुडं दधि ।
चक्रवाकप्रयुक्तैस्तैर्विमानैर्यान्ति वै दिवम् ॥ "

[1] स्वर्गलोके—घ.

इति ॥ १६ ॥ औषधम्; रसक्वाथादि। तद्दानेनापि आरोग्यम्। चकारात् पथ्यप्रदानेन च। **नन्दिपुराणे**—

"सम्यगारोग्यशालायामौषधैः स्नेहपाचनैः।
व्याधितं नीरुजीकृत्य अप्येवं करुणान्वितः।
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुतः॥"

इति ॥ १७ ॥

**लवणदानेन च लावण्यम् ॥ १८ ॥ धान्यप्रदानेन तृप्तिम् ॥ १९ ॥ सस्यप्रदानेन च ॥ २० ॥ [1]अन्नदः सर्वम् ॥ २१ ॥**

लवणं शम्भलसैन्धवादि दत्त्वा सौन्दर्यातिशयमाप्नोति। **देवीपुराणे**—

"लवणं च घृतं तैलं गुडं हिङ्गुं च भारत।
कूष्माण्डं जीरकं चैव पत्रशाकं च शोभनम्।
दत्त्वा स्वर्गमवाप्नोति द्विजवर्याय भक्तितः॥"

इति ॥ १८ ॥ धान्यं वार्षिकं श्यामाकादि दत्त्वा सार्वकालिकीं तृप्तिमाप्नोति ॥ १९ ॥ सस्यानि हैमन्तिकवासन्तिकानि शालिगोधूमादीनि च दत्त्वा सार्वकालिकीं तृप्तिं लभते। सामान्यफलमिदम्। विशेषफलं **विष्णुधर्मोत्तरे**—"रक्तशालिदः सूर्यलोकम्। सुगन्धशालिदो गन्धर्वलोकम्। महाशालिदो वसुलोकम्। [2]काष्ठशालिदोऽलकावासम्। व्रीहिदः स्वर्गवासम्। यवदः शक्रलोकम्। गोधूमदो वसुलोकम्। प्रियङ्गुदो लोकप्रियः। मुद्गदः शक्रलोकम्। माषदो यमलोकम्। षष्टिकादो निर्ऋतिलोकम्। चीनचणकदो वरुणलोकम्। मसूरराजमाषदो वायुलोकम्" इत्याद्युन्नेयम् ॥ २० ॥ अन्नम् अदनार्हमोदनादि। तद्दः सर्वं पूर्वोक्तं लोकं प्राप्नोति। **विष्णुधर्मोत्तरे**—

"अन्नं हि जीवितं लोके प्राणाश्चान्ननिबन्धनाः।
अन्नदः प्राणदो लोके सर्वदश्च तथान्नदः॥

भक्ष्यदः स्वर्गलोकम्। भोज्यदः शक्रलोकम्। लेह्यदोऽप्सरसाम्। चोष्यदो वसूनाम्। पानदो वारुणम्। पानकदः सर्वसमृद्धः। पायसदः क्षुत्पिपासारहितो गोलोकम्। गुडदः आरोग्यम्। शर्करादः वाञ्छितं कामम्। फाणितदः तृप्तिम्। खण्डदः सौभाग्यम्। द्राक्षेक्षुदः परं सौभाग्यम्। सक्तुदः तृप्तिम्" इत्यादि ॥ २१ ॥

[1] अन्नप्रदानेन—ज.

[2] कृष्णशालिदः—ज.

**धान्यप्रदानेन सौभाग्यम् ॥ २२ ॥ तिलप्रदः प्रजामिष्टाम् ॥ २३ ॥ इन्धनप्रदानेन दीप्ताग्निर्भवति ॥ २४ ॥ संग्रामे च [1]सर्वजयमाप्नोति ॥ २५ ॥**

अनुक्तधान्यदाने फलमाह । यानि अनुक्तानि धान्यानि कुलुत्थकोद्रवमण्डूकादीनि,[2] तेषां दाने सौभाग्यमाप्नोति ; "अकीर्तितानामन्येषां दानात् स्वर्गमवाप्नुयात्" इति **स्मरणात्** ॥ २२ ॥ श्वेतान् कृष्णान् वा तिलान् दत्त्वा अभिलषितां संततिमाप्नोति ; "यथेष्टं लोकमाप्नोति तथा विप्रस्तिलप्रदः" इति **स्मरणात्** ॥ २३ ॥ इन्धनं काष्ठादि । तद्दाने दीप्तौदर्याग्निर्भवति ; "जाङ्गलं चाग्निमान्द्यके" इति तुलाप्रकरणे ।

"यस्तापनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
सर्वार्थास्तस्य सिध्यन्ति तेजस्वी चैव जायते ॥"

इति **कात्यायनः** ॥ २४ ॥ इन्धनदानेन युद्धे जयं चाप्नोति ॥ २५ ॥

**आसनप्रदानेन स्थानम् ॥ २६ ॥ [3]शय्याप्रदानेन भार्याम् ॥ २७ ॥**

आसनं पीठास्तरणीयादि । तद्दाने राज्यस्थानमाप्नोति ;

"आसनं यः प्रयच्छेत संवीतं ब्राह्मणाय वै ।
स राज्यस्थानमाप्नोति तेजस्वी विगतज्वरः ॥"

इति **स्कान्दात्** ॥ २६ ॥

"तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ।
दन्तपत्रचितां रम्यां [4]हेमरत्नाद्यलंकृताम् ॥
हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानकाम् ।
प्रच्छादनपटीयुक्तां धूपगन्धाधिवासिताम् ॥"

इति । 'तस्यां संस्थापयेद्धैमम्' इत्यादिपूर्वोक्तविधिना शय्यां दत्त्वा उक्तलक्षणां भार्यां विन्देत ।

"यथा न कृष्ण शयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥"

इति मन्त्रलिङ्गात् ॥ २७ ॥

[1] शश्वज्जयम्—ज.
[2] मण्टकादीनि—घ.
[3] शय्यादानेन—ज.
[4] हेमपट्टैरलंकृताम्—ख, ग.

**उपानत्प्रदानेनाश्वतरीयुक्तं रथम् ॥ २८ ॥ छत्रप्रदानेन स्वर्गम् ॥ २९ ॥ तालवृन्तचामरप्रदानेनाध्वसुखित्वम् ॥ ३० ॥ वास्तुप्रदानेन[1] नगराधिपत्यम् ॥ ३१ ॥**

चर्ममय्यौ उपानहौ दत्त्वा वामीयुक्तरथमाप्नोति । लैङ्गे—

" दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
न तस्य मानसो दाहः कदाचिदपि जायते ॥ "

इति । काष्ठपादुकादाने तु विशेषः—

" ब्राह्मणाय सुशीलाय यो दद्यात् काष्ठपादुके ।
स वाहनेन दिव्येन दिवं गच्छति भोगवान् ॥ "

इति ॥ २८ ॥ वंशशलाकादिनिर्मितं छत्रं दत्त्वा स्वर्गमाप्नोति । लैङ्गे—

" वर्षासु छत्रदानेन तथा ग्रीष्मे च नारद ।
सर्वाह्लादयुतास्ते स्युः सर्वकामैश्च संयुताः ॥ "

इति ॥ २९ ॥ तालवृन्तं व्यजनम् । चामरं वालव्यजनम् । ते दत्त्वा मार्गे सुखी भवति । विष्णुधर्मोत्तरे—

" प्रदाय व्यजनं वांशं वंशे महति जायते ।
चार्मणं कर्मणां सिद्धिं दत्त्वा व्यजनमश्नुते ॥
तथैव दत्ते मायूरे नायुरेतस्य हीयते ।
पात्रे सपुत्रतामेति वास्त्रे च स्त्रैणवल्लभः ॥ "

इति । पात्रं पत्रमयम् । वास्त्रं वस्त्रमयम् । भारते—

" यस्तु भक्त्या द्विजाग्र्याय दद्याच्चामरमुज्ज्वलम् ।
स नृपत्वमवाप्नोति निःशेषावनिमण्डले ॥ "

इति ॥ ३० ॥ वास्तु गृहम् । तत् दत्त्वा नगरप्रभुत्वमाप्नोति । मात्स्ये—

" पक्केष्टकामयं कृत्वा शैलजं वापि दारुजम् ।
मृन्मयं वापि भवनं शुभलक्षणसंयुतम् ॥
सप्राकारप्रतोलीकं कवाटार्गलयान्वितम् ।
सुधावलिप्तं चतुरं विस्तीर्णाङ्गणशोभितम् ॥

[1] प्रदानेनादुःखित्वम्—ज.

शुभप्रवेशनिष्क्राममुपकार्यादिसंयुतम् ।
मत्तवारणशोभाढ्यं गवाक्षादिविभूषितम् ॥ "

चतुरं चतुरश्रम् । मत्तवारणं गोपानसी ।

" गृहं दीपप्रमोद्द्योतशयनासनभाजनैः ।
उपस्करैश्च संपूर्णं सर्वधान्यप्रपूरितम् ॥ "

इति । उपस्कराः गृहस्थमञ्चकादयः लोकप्रसिद्धाः ॥ ३१ ॥

**यद्यदिष्टतमं लोके यच्चास्ति दयितं गृहे[1] ।**
**तत्तद् गुणवते देयं तदेवाक्षयमिच्छता ॥ ३२ ॥**

**इति [2]श्रीविष्णुस्मृतौ द्विनवतितमोऽध्यायः**

प्रतिवस्तु दानवचनाशक्त्याह । यत् यस्य लोके प्रियं, गृहे स्वस्य पुत्रदारादीनां वा यदभीष्टं, तत्तदेव 'अक्षय्यमिदं मेऽस्तु' इति कामनया पात्रभूताय विप्राय देयम् ॥ ३२ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिश्रीधर्माधिकारि[4]श्रीरामपण्डितात्मज-[4]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
द्विनवतितमोऽध्यायः

1 यच्चास्त्युपहितं गृहे—ज.
2 वैष्णवे धर्मशास्त्रे द्विनवतितमं प्रकरणम्—ज
3 श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां द्विनवतितमोऽध्यायः—घ, च.
4 श्री omitted in ग.

## त्रिनवतितमोऽध्यायः

**अब्राह्मणे दत्तं तत्सममेव पारलौकिकम् ॥ १ ॥ द्विगुणं ब्राह्मणब्रुवे ॥ २ ॥ [1]सहस्रगुणं प्राधीते ॥ ३ ॥ अनन्तं वेदपारगे ॥ ४ ॥**

त्रिनवतितमेन पात्रविशेषेण फलविशेषमाह । अब्राह्मणाः **शातातपोक्ताः**—

"अब्राह्मणास्तु षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः संध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥"

इति । तस्मिन् यावत् दत्तं तावदेव परलोके उपतिष्ठते । न त्वब्राह्मणः क्षत्रियादिः; समत्वायोगात् । यथा **बृहस्पतिः**—

"शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम् ॥"

इति ॥ १ ॥ आत्मानं ब्राह्मणं ब्रूत इति ब्राह्मणब्रुवः । तल्लक्षणमाह **शातातपः**—

"गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्मविन्न चाधीते स भवेद् ब्राह्मणब्रुवः ॥"

इति । तस्मिन् दानमब्राह्मणदानाद् द्विगुणं परलोके भवति ॥ २ ॥ प्रकृष्टमधीतं यस्य यस्माद्वा असौ प्राधीतः; श्रोत्रिय आचार्यो वा । तस्मिन् अब्राह्मणदानात् सहस्रगुणं परलोके भवति; "श्रोत्रिये चैव साहस्रम्" इति **बार्हस्पत्यात्**; "सहस्रगुणमाचार्ये" इति **दक्षस्मरणात्** ॥ ३ ॥

[1] श्रोत्रियं चैव साहस्रम्—ख.

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स भवेद् वेदपारगः ॥"

इति **शातातपोक्त**लक्षणे वेदपारगे दत्तं परत्रानन्तं भवति । अग्निहोत्रिणि च; "आत्मज्ञे शतसाहस्रमनन्तं चाग्निहोत्रिणि" इति **बार्हस्पत्यात्** ॥ ४ ॥

**पुरोहितस्त्वात्मन एव पात्रम् ॥ ५ ॥ स्वसा [1]दुहितृजामातरश्च ॥ ६ ॥**

आत्मपुरोहित एव पात्रम्; न परपुरोहितः;

"पुरोहिते च यद्दत्तं यद्दत्तं ग्रामयाजके ।
सेवकेषु च यद्दत्तं तद् वृथा दानमुच्यते ॥"

इति निन्दाश्रवणात् ॥ ५ ॥ स्वस्रादयोऽपि स्वस्यैव पात्रम्; न परस्य; स्वस्रादिशब्दानां संबन्धिशब्दत्वात् ॥ ६ ॥

**न वार्यपि प्रयच्छेत बैडालव्रतिके द्विजे ।
न बकव्रतिके पापे नावेदविदि धर्मवित् ॥ ७ ॥
धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः ।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः ॥ ८ ॥
अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकव्रतपरो द्विजः ॥ ९ ॥**

निषिद्धानाह । वक्ष्यमाणलक्षणे बैडालव्रतिके बकवृत्तौ पापे धर्मापदेशेन प्रायश्चित्तानुष्ठातरि अवेदविदि द्विजलिङ्गधारिणि शूद्रे धर्मं जानन् जलमपि न दद्यात् । किं पुनर्गोभूमिहिरण्यादि ॥ ७ ॥

तल्लक्षणमाह । लोके ख्यात्यर्थं धर्मानुष्ठाता धर्मध्वजी । निषिद्धेऽपि लिप्सावान् लुब्धः । सर्वत्र कपटानुवर्ती छाद्मिकः । लोकानां दम्भेनानुरञ्जकः लोकदाम्भिकः । हिंस्रः निर्दयः । सर्वद्रोग्धा सर्वाभिसंधकश्च बैडालव्रतिकः बिडालस्येव व्रतं यस्यासौ तादृशो ज्ञेयः ॥ ८ ॥

किंच, अधः विषयान्तरनिवृत्तेव दृष्टिः यस्यासौ तथा । निकृतिः परपीडनं तद्यस्यासौ नैकृतिकः । यथाकथंचित् परपीडनेन स्वार्थसाधने निरतः । शठो वञ्चकः । मिथ्या परप्रतारणायैव विनयवान् बकवृत्तिर्ज्ञेयः ॥ ९ ॥

[1] दुहितृपुत्रजामातरश्च—ज.

**ये बकव्रतिनो लोके ये च मार्जारलिङ्गिनः ।**
**ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥ १० ॥**
**न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।**
**व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम् ॥ ११ ॥**

तयोर्निन्द्यत्वे हेतुमाह । ये बकवृत्तयः, ये च बैडालव्रतिकाः, ते सर्वेऽपि अन्धतामिस्रे नरके तेनैव कर्मणा पतन्तीति निन्द्याः ॥ १० ॥

व्यतिरेकमुखेन पापं लक्षयति । यः पापं कृत्वा तन्निमित्तं प्रायश्चित्तं धर्मापदेशेन धर्मव्याजेन करोति, न[1] प्रायश्चित्तव्यपदेशेन, स तेन व्रतेन प्रायश्चित्तेनापि तत् पापं प्रच्छादयत्येव; न नाशयति । कुत इत्यत आह । यतः स्त्रीशूद्रादीनामज्ञानामिदं दम्भनं प्रतारणमेव; न पापोच्छेदकम् । अतः असौ पापोऽवधेयः ॥ ११ ॥

**प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ।**
**छद्मनाचरितं यच्च व्रतं रक्षांसि गच्छति ॥ १२ ॥**
**अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति ।**
**स लिङ्गिनां हरत्येनस्तिर्यग्योनौ प्रजायते[2] ॥ १३ ॥**

तत्रैव हेत्वन्तरमाह । ईदृशः धर्मच्छलेन प्रायश्चित्तकर्ता विप्रः वैदिकवर्यैः इहामुत्र गर्ह्यते । तच्च धर्मच्छद्मना आचरितं प्रायश्चित्तं व्रतं रक्षांसि गच्छतीति न तत् तथा कुर्यात् ॥ १२ ॥

अवेदविदं लक्षयति । न विद्यन्ते शिखासूत्रादीनि त्रैवर्णिकलिङ्गानि यस्यासौ अलिङ्गी शूद्रः लिङ्गिनामुक्तलिङ्गवतां त्रैवर्णिकानां शिखासूत्रादिधारणेन वृत्तिं जीवनोपायमुपजीवति, तस्यैवैनः प्राप्नोति; तिर्यग्योनिं च प्राप्नोतीत्यसौ अवेदवित् अवधेयः । यद्यप्यत्र अवेदविदिति विशेष्यं नोपात्तं, तथापि स्थानप्रमाणेन तस्यैवेदं लक्षणमिति पर्यवस्यति ॥ १३ ॥

**न दानं यशसे दद्यान्न भयान्नोपकारिणे ।**
**न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चितम्[3] ॥ १४ ॥**

इति [4]श्रीविष्णुस्मृतौ त्रिनवतितमोऽध्यायः

[1] न omitted in ग.
[2] च जायते—ज.
[3] निश्चयः—ज.
[4] वैष्णवे धर्मशास्त्रे त्रिनवतितमं प्रक .णम्—ज.

निषिद्धान्तरमाह। यशसे यशःकारिणे स्तावकाय, भयाद् भयकारिणे शत्रवे, उपकारिणे मित्राय, वृत्त्यर्थं नर्तनगानपरेभ्यश्च धर्मसाधनं न दद्यादिति शास्त्रेषु निश्चितमेव। धर्मासाधनत्वात् लौकिककीर्त्यादि-साधनत्वमवगम्यते। तदिदं निषिद्धान्तरेऽपि समानम्॥ १४॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
त्रिनवतितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां त्रिनवतितमोऽध्यायः—घ, च; श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां त्रिनवतितमोऽध्यायः—ज.

## चतुर्नवतितमोऽध्यायः

**गृही वलीपलितदर्शने वनाश्रयो भवेत्**[1] ॥ १ ॥ **अपत्यस्य चापत्यदर्शने वा** ॥ २ ॥

एवं गृहस्थधर्मानुक्त्वा इदानीं चतुर्नवतितमेन क्रमप्राप्तान् वानप्रस्थधर्मानाह । गृहीति गार्हस्थ्यानन्तर्यनियमायाधिकारिनिर्देशः । एतच्चाश्रमसमुच्चयाभिप्रायेण ; "तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति" इति [2]**आपस्तम्ब**स्मरणात् । विकल्पे तु "अविप्लुतब्रह्मचर्यो यमिच्छेत्तु तमावसेत्" इति ध्येयम् । अत्रोभयत्रापि यत्तच्छब्दाभ्याम् आश्रमस्यैव परामर्शः । वलीपलितदर्शने इति कालनियमः । वनाश्रय इति देशनियमः ; "ग्रामं च न प्रविशेत्" इति **गौतमीयात्** ॥ १ ॥ कालान्तरमप्याह । अपत्यं पुत्रः । तस्यापत्यं पौत्रः । तस्य दर्शने वा । चकारात् आयुषस्तृतीयभागे वा ; "वनेषु तु विहृत्यैवं तृतीयं भागमायुषः" इति **मानवीयात्**[3] ॥ २ ॥

**पुत्रेषु भार्यां निक्षिप्य तयानुगम्यमानो वा** ॥ ३ ॥ **तत्राप्यग्नीनुपचरेत्** ॥ ४ ॥

तत्राधिकारिविशेषणमाह । पुत्रे पुत्रयोः पुत्रेषु वा भार्यां सवर्णामसवर्णां वा अवश्यभरणीयामदत्तस्त्रीधनां भरणार्थं निक्षिप्य ; दत्तस्त्रीधनां तु पारतन्त्र्याय । यद्यपीदं द्वयमपि प्राप्तमेव, तथापि नियमार्थं पुनर्वचनम् । निक्षेपश्चायं भार्यानुमतौ । अननुमतौ तु तयानुगम्यमानः सहितो वा वनं गच्छेत् । तयेति कुटुम्बोपलक्षणम् ; "गृहान् हित्वा सदारः सप्रजः सहाग्निभिर्बहिर्ग्रामाद्वसेत्" इति **आपस्तम्बीयात्** । सप्रजः ; यस्यापत्यस्य मातरं विना जीवनासंभवः, तेन सहित इत्यर्थः । जीवद्भार्यस्येदम् । मृतभार्यस्य तु केवलस्यैव वनवासः ; "एको वा" इति **आपस्तम्बीयात्** ॥ ३ ॥ तत्र अरण्येऽपि । अग्नीन् श्रौताग्निम् औपासनं वा । तदुभयाभावे "ऊर्ध्वं पञ्चभ्यो मासेभ्यः श्रामणकेनाग्निमाधाय" इति [4]**वसिष्ठोक्त**वैखानसविधिना आहितं वा, सायंप्रातर्होमेन दर्शपूर्णमासादीष्टिभिश्च परिचरेत् । यथाह **मनुः**—

[1] भवति—ज.
[2] आपस्तम्बीयात्—ग.
[3] मानवात्—ख.
[4] वसिष्ठोक्तविधिना—घ.

"वैतानिकं च जुहुयादग्निहोत्रं यथाविधि ।
दर्शमस्कन्दयन् पर्व पौर्णमासं च शक्तितः ॥
ऋक्षेष्ट्याग्रयणं चैव चातुर्मास्यानि चाहरेत् ।
तुरायणं च क्रमशो दक्षस्यायनमेव च ॥
वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः ।
पुरोडाशांश्चरूंश्चैव [1]विधिना निर्वपेत् पृथक् ॥"

इति । **योगीश्वरोऽपि**—"श्रौतं स्मार्तं फलस्नेहैः कर्म कुर्यात् क्रियास्तथा" इति ॥ ४ ॥

**अफालकृष्टेन पञ्च यज्ञान्न हापयेत् ॥ ५ ॥**

तत्र द्रव्यमाह । न विद्यते फालकृष्टं यस्मिन्नन्ने तदफालकृष्टम् । अकृष्ट इत्यनेन सिद्धौ फालग्रहणं कुद्दालाद्युपलक्षणाय । तादृशेन नीवारवेणुश्यामाकादिना पञ्च यज्ञान् अग्निपितृदेवतातिथिभृत्यभरणरूपान् न हापयेत् । यथाह **योगीश्वरः**—

"अफालकृष्टेनाग्नींश्च पितॄन् देवातिथींनपि ।
भृत्यांश्च तर्पयेच्छ्मश्रुजटालोमभृदात्मवान् ॥"

इति । कुर्यादिति वक्तव्ये अत्यागवचनं सोमादित्यागार्थम्; तेषां ग्राम्यद्रव्यसाध्यत्वात्; ग्राम्याणां च "संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम्" इति **मनु**वचनात् वानप्रस्थेन त्यक्तव्यत्वात् । तदाह **आपस्तम्बः**—"कर्माण्यारभते सोमावराध्र्यानि" इति । अवराध्र्यम् अर्वाचीनम् । न ब्रह्मयज्ञादीन्; ब्रह्मयज्ञस्यान्नसाध्यत्वाभावात् । ऋष्यभिप्रायं वा पञ्चग्रहणम्; "देवपितृमनुष्यभूतर्षिपूजकः" इति **गौतमीयात्** । देवादिद्रव्यविधानादात्मनोऽपि तद्द्रव्यत्वमेव; शेषभोजननियमात् । यथाह **मनुः**—

"देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः ।
शेषमात्मनि युञ्जीत लवणं च स्वयं कृतम् ॥"

इति ॥ ५ ॥

**[2]स्वाध्यायं च न जह्यात् ॥ ६ ॥ ब्रह्मचर्यं पालयेत् ॥ ७ ॥**

स्वाध्यायः वेदाध्ययनम् । तन्न त्यजेत् । अध्ययनात्यागेनाध्यापनं त्याजयति; तस्य वृत्त्यर्थत्वात्; वृत्त्यर्थानां च त्यागात् । अनेन याजनादित्यागोऽपि गम्यते । अत एव **योगीश्वरः**—"निवृत्तश्च प्रतिग्रहात्" इति चकारेण तत् समुच्चितवान् । चकारात् दानं च न त्यजेत्; "स्वाध्यायवान् दानशीलः"

[1] विधिवत्—ख, ग.

[2] Sūtra-s 6 and 7 omitted in ज.

इति **स्मरणात्** ॥ ६ ॥ ब्रह्मचर्यं स्त्र्यनभिगमनम् । पालयेत्; यावज्जीवमनुवर्तयेत्; "ऊर्ध्वरेताः क्षपाशयः" इति **वासिष्ठात्** । ब्रह्मचर्यवचनात् मध्वाद्यपि वर्जयेत्;

"वर्जयेन्मधुमांसानि भौमानि कवकानि च ।
भूस्तृणं शिग्रुकं चैव श्लेष्मातकफलानि च ॥"

इति **मानवात्** । मांसवर्जनं संभवे । असंभवे तु **गौतमः**—"प्रतिषिद्धवर्जं बैष्कमप्युपयुञ्जीत[1]" इति । बिष्का व्याघ्रादयः; तैर्हतं बैष्कम् ॥ ७ ॥

**चर्मचीरवासाः स्यात् ॥ ८ ॥ जटाश्मश्रुलोमनखांश्च बिभृयात् ॥ ९ ॥ त्रिषवणस्नायी स्यात् ॥ १० ॥**

चर्म कृष्णाजिनादि । चीरं वल्कलम् । दर्भादिनिर्मितं वासः, जीर्णवस्त्रखण्डो वा ; "जीर्णानि चैव वासांसि" इति **मानवात्** । तानि वसीत । तत्र चर्म उत्तरीयार्थे ॥ ८ ॥ जटाः शिरसि । श्मश्रु मुखे । लोमानि कक्षोपस्थयोः । नखान् हस्तपादयोः । चकारात् अङ्गमलं च बिभृयात्; "[2]अप्रयत्नः सुखार्थेषु" इति **मानवात्** ॥ ९ ॥ त्रिषवणं प्रातर्मध्याह्नापराह्णेषु स्नानशीलः स्यात् । पुनः क्रियावचनम् अशक्तौ स्नानद्वयावबोधनाय ; "प्रातर्मध्यंदिने स्नानं वानप्रस्थगृहस्थयोः" इति **कात्यायनीयात्** । यत्तु "सायं स्नायात् प्रगे तथा" इति **मानवं**, तत् होमाङ्गस्नानप्राप्त्यर्थम्; "अभिषिक्तश्च जुहुयात्" इति **आपस्तम्बीयात्** ॥ १० ॥

**कपोतवृत्तिर्मासनिचयः संवत्सरनिचयो वा ॥ ११ ॥ संवत्सरनिचयी पूर्वनिचितमाश्वयुज्यां जह्यात् ॥ १२ ॥**

कपोतस्येव वृत्तिर्यस्यासौ तथा; अश्वस्तन इति यावत् । मासं निचयो यस्यासौ तथा; त्रिंशद्दिनभोज्यान्नसंचयवानिति । संवत्सरं निचयो यस्यासौ तथा; द्वादशमासभोज्यान्नसंचयवानिति । वाशब्दात् षण्माससंचयवानपि स्यात्;

"सद्यः प्रक्षालको वा स्यान्माससंचयिकोऽपि वा ।
षण्मासनिचयो वा स्यात् समानिचय एव वा ॥"

इति **स्मरणात्** ॥ ११ ॥ विशेषमाह । यः वर्षभोज्यमन्नं संचिनोति, असौ पूर्वसंचितमन्नमाश्वयुज्यां पौर्णमास्यां सर्वं संत्यज्यान्यदुपाददीत ; "नातिसंवत्सरं भुञ्जीत" इति **गौतमीयनिषेधात्** ॥ १२ ॥

[1] बैष्कमुपयुञ्जीत—घ.

[2] अयत्नतः—घ.

**ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् ।**
**[1]पुटेनैव पलाशेन पाणिना शकलेन वा ॥ १३ ॥**

**इति [2]श्रीविष्णुस्मृतौ चतुर्नवतितमोऽध्यायः**

उक्तासमर्थं प्रत्याह । वानप्रस्थः ग्रामादष्टौ ग्रासानाहृत्याऽश्नीयात् । वाशब्दात् अष्टभिर्जीवनासंभवे षोडशापि ; "अष्टौ ग्रासा मुनेर्भक्ष्या वानप्रस्थस्य षोडश" इति **स्मरणात्** । ग्राम्यविधानादेव वन्यनियमोऽर्थलुप्तः । इदं च वनवासिषु भिक्षासंभवे ;

"तापसेष्वेव विप्रेषु यात्रिकं भैक्ष्यमाचरेत् ।
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥"

इति **मानवात्** । भोजनपात्रमाह । पुटं पर्णद्रोणः । पलाशम् अस्यूतमेव पर्णम् । पाणिः पाणितलम् । शकलं घटादिकपालम् । तेन वा अश्नीयात् ॥ १३ ॥

इति [3]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्री**कोण्डपनायका**त्मजश्री**तम्मणनायका**परनामधेय-श्री**केशवनायक**प्रोत्साहितश्री**वाराणसी**वासिधर्माधिकारिश्री**रामपण्डिता**त्मज-श्री**नन्दपण्डित**कृतौ **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां**
चतुर्नवतितमोऽध्यायः

[1] प्रतिगृह्य पुटेनैव—ज. [2] वैष्णवे धर्मशास्त्रे चतुर्नवतितमं प्रकरणम्—ज, ठ.
[3] श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां चतुर्नवतितमोऽध्यायः—घ, च ; श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां चतुर्नवतितमोऽध्यायः—ग.

## पञ्चनवतितमोऽध्यायः

**वानप्रस्थस्तपसा शरीरं शोषयेत्**[1] **॥ १ ॥ ग्रीष्मे पञ्चतपाः स्यात् ॥ २ ॥** [2]**आकाशशायी प्रावृषि ॥ ३ ॥ आर्द्रवासा हेमन्ते ॥ ४ ॥**

पञ्चनवतितमेनावशिष्टान् वानप्रस्थधर्मानाह । उक्तलक्षणो वानप्रस्थो वक्ष्यमाणेन तपसा शरीरं शोषयेत् कृशीकुर्यात् ॥ १ ॥ तप एवाह । "त्र्यृतुः संवत्सरः" इति श्रुतेः चैत्राद्याषाढान्तचतुर्मासात्मके ग्रीष्मे पञ्च तपांसि कायसंतापा यस्यासौ तथा भवेत्; पञ्चाग्निसेवनं कुर्यादित्यर्थः; "ग्रीष्मे पञ्चाग्निमध्यस्थः" इति **स्मरणात्** ॥ २ ॥ श्रावणादिकार्त्तिकान्तचतुर्मासात्मके वर्षर्तौ अनाच्छन्ने देशे शयनशीलः स्यात् ॥ ३ ॥ मार्गशीर्षादिफाल्गुनान्तचतुर्मासात्मके हेमन्ते आर्द्रवस्त्रधरः स्यात् ॥ ४ ॥

**नक्ताशी स्यात् ॥ ५ ॥** [3]**एकान्तरद्व्यन्तरत्र्यन्तराशी वा स्यात् ॥ ६ ॥**

भोजनकालमाह । दिवाहृतस्यापि नक्तमेव भोजनशीलः स्यात्; "नक्तं चान्नं समश्नीयाद् दिवा वाहृत्य शक्तितः" इति **मानवात्** ॥ ५ ॥ एकं द्वे त्रीणि वा दिनान्यन्तरा त्यक्त्वा नक्तं भुञ्जीत; "चतुर्थकालिको वा स्याद्वाप्यष्टमकालिकः" इति **मानवात्** । चतुर्थाष्टमयोरन्तरा षष्ठकालिकोऽपि । वाशब्दात् पक्षाद्यन्तरेऽपि; "पक्षे गतेऽथवाश्नीयान्मासे वाहनि वा गते" इति **योगिस्मरणात्** । पूर्वपूर्वाभ्यासे उत्तरोत्तरारम्भः ॥ ६ ॥

**पुष्पाशी ॥ ७ ॥ फलाशी**[4] **॥ ८ ॥ शाकाशी ॥ ९ ॥ पर्णाशी वा ॥ १० ॥** [5]**यवान्नं पक्षान्तयोर्वा सकृदश्नीयात् ॥ ११ ॥**

भोज्यान्तरमाह । पुष्पाण्येव तिन्त्रिण्यादीनामशितुं शीलमस्यासौ तथा भवेत् ॥ ७ ॥ फलानि बदरादीन्यश्नीयात् ॥ ८ ॥ शाकमारण्यं द्रोणपुष्पादि ॥ ९ ॥ पर्णानि बिल्वादीनाम् । वाशब्दात् कन्द-

[1] उपशोषयेत्—ज, ठ.
[2] This Sūtra read after Sūtra 5 in ज.
[3] एकान्तराशी वा—ज, ठ.
[4] मूलाशी added in ज, ठ.
[5] यवाग्रूं—ज, ठ.

मूलानि ; "पुष्पमूलफलैर्वापि" इति **मानवात्**। पुष्पादीनि च कालपक्वानि स्वयं शीर्णानि ; "कालपक्वैः स्वयं शीर्णैः" इति **तस्यैव** स्मरणात् ॥ १० ॥ यवान्नं यवागूः । तां पौर्णमास्यमावास्ययोर्वा सकृदश्नीयात् नक्तम् ; "पक्षान्तयोर्वाप्यश्नीयाद्यवागूं कथितां सकृत्" इति **मानवात्** ॥ ११ ॥

**चान्द्रायणैर्वा वर्तेत ॥ १२ ॥ अश्मकुट्टः ॥ १३ ॥ दन्तोलूखलिको वा ॥ १४ ॥**

चान्द्रायणैः उक्तलक्षणैः । बहुवचनम् अनेकोक्तविधोपसंग्रहार्थम् । तैर्वर्तेत ; कालं नयेत् । वाशब्दः कृच्छ्रोपसंग्रहार्थः ; "चान्द्रायणैर्नयेत् कालं कृच्छ्रैर्वा वर्तयेत् सदा" इति **योगिस्मरणात्** ॥ १२ ॥ अश्ममयेन येन केनापि कुट्टयति वितुषीकरोति इत्यश्मकुट्टः स्यात् ॥ १३ ॥ दन्ता एव उलूखलं वैतुष्यसाधनं यस्यासौ ; तथा स्यात् । वाशब्दात् अग्निपक्वाशी कालपक्वाशी वा स्यात् ; "अग्निपक्वाशनो वा स्यात् कालपक्वाशनोऽपि वा" इति **मानवात्** । तस्य धर्मान्तरमप्याह **योगीश्वरः**—

"स्वप्याद्भूमौ शुची रात्रौ दिवा संप्रपदैर्नयेत् ।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥
अग्नीन् वाप्यात्मसात्कृत्वा वृक्षावासो मिताशनः ।
वायुभक्षः प्रागुदीचीं गच्छेदा वर्ष्मसंक्षयात् ॥"

इति ॥ १४ ॥

**तपोमूलमिदं सर्वं देवमानुषिकं[1] जगत् ।**
**[2]तपोमध्यं तपोऽन्तं च तपसा च तथा धृतम् ॥ १५ ॥**
**[3]यद्दुश्चरं यद्दुरापं यद्दूरं यच्च दुष्करम् ।**
**सर्वं तत् तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १६ ॥**

**इति [4]श्रीविष्णुस्मृतौ पञ्चनवतितमोऽध्यायः**

तपः प्रशंसति । दैविकस्य मानुषस्य वा जगतः स्थावरजङ्गमात्मकस्य विश्वस्योत्पत्तिस्थितिप्रलयाः स्थितौ व्यवहारक्षमता च तपसैव निष्पद्यन्त इति ॥ १५ ॥

1 देवमानुषजं—घ.
2 This and the next line omitted in ज.
3 यद् दुस्तरं दुरापं यत् यद् दुर्गं यच्च दुष्करम्—ठ.
4 वैष्णवे धर्मशास्त्रे पञ्चनवतितमं प्रकरणम्—ज, ठ.

किंच यत् दुश्चरं दुर्ज्ञेयं संकल्पयितुमशक्यम्; यत् संकल्पितमपि बहुतरान्तरायच्छन्नत्वात् प्राप्तुमशक्यम्; यच्च असमानदेशकालतया दूरम्; यच्च दुःखकृतिसाध्यतया दुष्करम्; तत् सर्वमपि तपसा साध्यते । यतस्तपः फलस्यातिक्रमार्हं न भवति । सति तपसि न फलमित्यसंभवीति ॥ १६ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज-[2]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां पञ्चनवतितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ पञ्चनवतितमोऽध्यायः—घ, च.

[2] श्री omitted in ग.

## षण्णवतितमोऽध्यायः

**अथ त्रिष्वाश्रमेषु [1]पक्वकषायः प्राजापत्यामिष्टिं कृत्वा सर्ववेदसं दक्षिणां [2]दत्त्वा [3]प्रव्रज्याश्रमी स्यात् ॥ १ ॥**

वनस्थधर्मोक्त्यनन्तरं क्रमप्राप्तान् संन्यासिधर्मान् षण्णवतितमाध्यायेनाह । संन्यासिधर्मप्रस्तावाय अथ-शब्दः; आनन्तर्यस्य पाठेनैव सिद्धेः । त्रिष्वाश्रमेष्वित्यनेन आश्रमसमुच्चयोऽभिप्रेतः । तत्र विषयदोषदर्शनेन पक्वकषायः निवृत्तविषयवासनः । अनेन आश्रमविकल्पोऽपि द्योतितः; ब्रह्मचर्यादावपि वैराग्येण विषयवासना-निवृत्तिसंभवात् । तदेतदुभयं **जाबालश्रुतौ** श्रूयते—"ब्रह्मचर्यं परिसमाप्य गृही भवेद् । गृही भूत्वा वनी भवेद् । वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा" इति । प्रजापति-देवताकामिष्टिं कृत्वा प्राजापत्यं स्थालीपाकं वा; "य एवाहिताग्नेः पुरोडाशः, स एवानाहिताग्नेः स्थालीपाकः" इति **परिशिष्ट**वचनात् । तस्यां च सर्वं वेदः इति सर्ववेदसं सर्वं धनं दक्षिणां दत्त्वा **बोधायना**द्युक्तविधिना प्रव्रज्याश्रमी संन्यासी स्यात्; प्रपरिपूर्वस्य व्रजतेः त्यागार्थत्वात् । अत्र च ब्राह्मण-स्यैवाधिकार इति **मनुः**—"आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" इत्युपक्रम्य "एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः" इत्युपसंहारात् । 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति **सूत्र**वचनात् त्रैवर्णिकानामित्यन्ये । त्रैवर्णिकस्त्रीणामपीति **बोधायनः**; "स्त्रीणां चैके" इति **स्मरणात्** ॥ १ ॥

**आत्मन्यग्नीनारोप्य[4] भिक्षार्थं ग्राममियात् ॥ २ ॥ सप्ता-गारिकं भैक्षमाचरेत्[5] ॥ ३ ॥**

इष्टिदक्षिणान्ते श्रौतान् स्मार्तं वाग्निमात्मन्यारोप्य संन्यासप्रैषं त्रिरुच्चार्य भिक्षार्थमेव ग्रामं प्रविशेत्, नान्यथा ॥ २ ॥ सप्तस्वगारेषु भवं सप्तागारिकं भैक्षं भिक्षासमूहम्; "ग्रासमात्रा भवेद्भिक्षा" इति **स्मरणात्** सप्तग्राससमूहं गृह्णीयात् । अशक्तौ अष्टौ ग्रासान्; "अष्टौ ग्रासा मुनेर्भैक्षम्" इति **स्मरणात्**। शक्तौ न्यूनमपि;

[1] परिपक्व—ज.
[2] दत्त्वा omitted in ठ.
[3] ब्रह्माश्रमी—ज, ठ.
[4] समारोप्य—ज.
[5] आदद्यात्—ज, ठ.

"अष्टौ ग्रासान् समादाय स मुनिः सप्त पञ्च वा ।
अद्भिः प्रक्षाल्य ताः सर्वास्ततोऽश्नीयाच्च वाग्यतः ॥"

इति **संवर्तीयात्** । तान्यप्यसंकल्पितानि ; "सप्तागाराण्यसंकल्पितानि चरेद्भैक्ष्यम्" इति **वासिष्ठात्** । **मनुरपि,**

"न तापसैर्ब्राह्मणैर्वा वयोभिरथवा श्वभिः ।
आकीर्णं भिक्षुकैरन्यैरगारमुपसंव्रजेत् ॥"

इति ॥ ३ ॥

**अलाभे न व्यथेत ॥ ४ ॥ न [1]भिक्षुकं भिक्षेत ॥ ५ ॥ भुक्तवति जने अतीते पात्रसंपाते [2]भैक्षमादद्यात् ॥ ६ ॥**

सप्तानामपि मध्ये यत्र गृहे भिक्षा न लभ्यते, तत्र दुःखं क्रोधं वा न कुर्यात् । अलाभे दुःखनिषेधात् लाभे सुखस्यापि निषेधोऽर्थसिद्धः ; "अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्" इति **मानवात्** ॥ ४ ॥ भिक्षुरेव भिक्षुकः यतिः । तद्भिक्षितं नादद्यात् । भिक्षुनिषेधात्[3] आश्रम्यनुज्ञायते । प्राधान्येन गृहस्थः ॥ ५ ॥ गृहस्थस्य परिजने भुक्तवति पाकपात्राणां संपाते प्रक्षाल्य न्युब्जीकरणे च कृते, अस्य वा शिष्टादन्नात् भैक्षं याचेत । यथाह **मनुः**—

"विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसंपाते नित्यं भिक्षां यतिश्चरेत् ॥"

इति । अनेन सायाह्नो लक्ष्यते ;

"अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनभिलक्षितः ।
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥"

इति **योगिस्मरणात्** । ततोऽर्थात् सकृत्त्वं सिध्यति ;

"एककालं चरेद्भिक्षां प्रसजेन्न तु विस्तरे ।
भैक्षप्रसक्तो हि यतिर्विषयेष्वपि सज्जते ॥"

इति **मानवात्** । अशक्तौ सायं प्रातः ; "ब्राह्मणकुले [4]यल्लभेत, तद्भुञ्जीत सायं प्रातर्मधुमांसवर्जम्" इति **वासिष्ठात्** ॥ ६ ॥

[1] भैक्षुकमनुभिक्षेत्—ठ.
[2] भिक्षाम्—ज, ठ.
[3] प्रतिषेधात्—ग.
[4] यावत्—ग.

**[1]मृन्मये दारुपात्रेऽलाबुपात्रे वा ॥ ७ ॥ तेषां च तस्याद्भिः शुद्धिः स्यात्[2] ॥ ८ ॥**

भिक्षापात्राण्याह । मृन्मयं शरावादि । दारुपात्रं काष्ठमयम् । अलाबुः तुम्बी ; तन्मयम् । वाशब्दात् वेणुमयं च; "यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च" इति **योगिस्मरणात्** । अलाबुः बिल्वनारिकेलादीनामप्युपलक्षणम् ; "गोवालैः फलसंभुवाम्" इति शुद्धिसाम्यात् ॥ ७ ॥ तेषां पात्राणां, तस्य भैक्षस्य च अद्भिः प्रक्षालनाच्छुद्धिः । चकारः पात्रशुद्धौ गोवालसमुच्चयार्थः ; "[3]सलिलैः शुद्धिरेतेषां गौवालैश्चावघर्षणम्" इति **स्मरणात्** ; भैक्षस्य च प्रणवाभिमन्त्रणसमुच्चयार्थः ; "तदद्भिः प्रक्षाल्य प्रणवेनाभिमन्त्र्याश्नीयात्" इति **स्मरणात्** ॥ ८ ॥

**अभिपूजितलाभादुद्विजेत ॥ ९ ॥ शून्यागारनिकेतनः स्यात् ॥ १० ॥ वृक्षमूलनिकेतनो वा ॥ ११ ॥ न [4]ग्रामे द्वितीयां रात्रिमावसेत् ॥ १२ ॥**

अभिपूजितं मिष्टान्नम् ; तल्लाभात् उद्वेगवान् भवेत् ; न संतुष्येत् ; "अभिपूजितलाभैस्तु यतिर्मुक्तोऽपि बध्यते" इति **मानवात्** ॥ ९ ॥ यन्निर्जनं गृहं तत्र वसेत् । शून्यत्वाभिधानात् गुहागह्वराद्युपलक्ष्यते ॥ १० ॥ वृक्षमूलेष्वेवावतिष्ठेत ; "अनग्निरनिकेतः स्यात्" इति **मानवात्** । वाशब्दात् एकाकी भवेत् ; "एकारामः परिव्रज्य" इति **योगिस्मरणात्** ॥ ११ ॥ वर्षाभ्योऽन्यत्र ग्रामे एकरात्रं वसेत् । नगरे पञ्चरात्रम् ;

"एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत् ॥"

इति **कण्वस्मरणात्** । इदं चाशक्तौ । शक्तौ तु मासद्वयमेव ; "ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी" इति **शङ्खस्मरणात्** ॥ १२ ॥

**कौपीनाच्छादनमात्रमेव वसनमादद्यात् ॥ १३ ॥**

कौपीनं गुदम् । तदाच्छाद्यते यावता तावत्येव मात्रा परिमाणं यस्य तत् तथा ; तावदेव वस्त्रं गृह्णीयात्, नाधिकम् । शक्तस्येदम्; अशक्तस्य तु "एकशाटी स्यात्" इति **स्मृत्यन्तरोक्तं** ज्ञेयम् । एवकारेण परिग्रहान्तरनिवृत्तिः ; "अनिचयो भिक्षुः" इति **गौतमीयात्** । तत्र **देवलीयो** विशेषः—

1 मृन्मयेऽलाबुपात्रे दारुपात्रे वा—ठ.
2 स्यात् omitted in ठ.
3 From सलिलैः up to समुच्चयार्थः omitted in ख.
4 ग्रामं—घ, च.

" काषायी मुण्डस्त्रिदण्डी कमण्डलुपवित्रपादुकासनकन्थामात्रः " इति । काषायी गैरिकारक्तवसनः । मुण्डः; " मुण्डः शिखी वा " इति **गौतमीयात्** विकल्पः । त्रिदण्डी एकदण्डी वा ; " एकदण्डी त्रिदण्डी वा " इति **बोधायनीयात्** । यज्ञोपवीतमपि वैकल्पिकम् ;

" यज्ञोपवीते द्वे धार्ये गृहिभिर्वनिभिस्तथा ।
एकमेव समुद्दिष्टं यतीनां व्रतिनां तथा ॥ "

इति **स्मरणात्** ; " केशान् यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः " इति **बाष्कलस्मरणाच्च** । पवित्रं वस्त्रखण्डो जलपावनार्थः । शेषं प्रसिद्धम् । एषां च व्यवस्था एकदण्डत्रिदण्डसंन्यासाभिप्रायेण ;

" सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद् बुधः ।
एकदण्डं गृहीत्वा च भिक्षुधर्मं समाचरेत् ॥
शिखी यज्ञोपवीती च यद्वा ज्ञानप्रबोधितः ।
त्रिदण्डग्रहणं कृत्वा भिक्षुधर्मं समाचरेत् ॥ "

इति [1]**स्मृत्यन्तरात्** ॥ १३ ॥

**[2]दृष्टिपूतं न्यसेत् पादम् ॥ १४ ॥ वस्त्रपूतं जलमादद्यात् ॥ १५ ॥ सत्यपूतं वदेत् ॥ १६ ॥ मनःपूतमाचरेत् ॥ १७ ॥**

दृष्ट्या अवेक्ष्य पादन्यासं कुर्यात् ; अन्यथा कीटादिवधप्रसङ्गः ॥ १४ ॥ वस्त्रेण पावितं जलं गृह्णीयात् ; नापावितम्, उक्तदोषावसरात् ॥ १५ ॥ यथार्थप्रतिपादनेन पवित्रितं वाक्यं वदेत् ; न मिथ्याम् । " नानृतं वदेत् " इति सामान्यनिषेधेऽपि पुनर्वचनं प्रायश्चित्तचातुर्गुण्यार्थम् ; " यतीनां [3]तु चतुर्गुणम् " इति **स्मरणात्** ॥ १६ ॥ वैकल्पिके सांशयिके वा शुद्ध्यादौ यत्र मनःप्रसादः तदाचरेत् ॥ १७ ॥

**[4]मरणं नाभिकामयेत जीवितं च ॥ १८ ॥ अतिवादांस्तितिक्षेत ॥ १९ ॥ न कंचनावमन्येत ॥ २० ॥ निराशीः स्यात् ॥ २१ ॥ निर्नमस्कारः ॥ २२ ॥**

[1] स्मरणात्—घ.

[2] Sūtra-s 14 to 17 read in ग, ठ as a single verse :

दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् ।
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥

[3] च—ग.

[4] मरणं च—ठ.

[1]जीवनमरणविषयिणीं कामनां न कुर्यात् 'चिरं जीवेयम्, क्षिप्रं म्रियेय' इति ॥ १८ ॥ वादमतिक्रान्ता अतिवादाः अवचनीयानि । तान्यपि परोक्तानि तितिक्षेत क्षमेत ॥ १९ ॥ न कस्याप्यवमानं कुर्यात् ॥ २० ॥ नमस्कृतोऽपि आशिषं न प्रयुञ्जीत ; किं तु नारायणस्मरणं कुर्यात् ;

"नमो नारायणायेति गृहस्थः प्रणमेद्यतिम् ।
ब्रूयुर्नारायणेत्येव यतयो ह्यभिवादिनाः ॥"

इति । भिक्षार्थमाशिषं न प्रयुञ्जीतेत्यन्ये,

"[2]न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां [3]भिक्षां लिप्सेत कर्हिचित् ॥"

इति **मानवात्** ॥ २१ ॥ नमस्कृतो न नमस्कुर्यात्, किं तु नारायणं स्मरेदित्युक्तम् । भिक्षार्थं प्रणतिं न कुर्यादित्यन्ये ॥ २२ ॥

**वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।**
**नाकल्याणं न कल्याणं तयोरपि च चिन्तयेत् ॥ २३ ॥**

तर्हि कीदृक् स्यादित्यत आह । वासी काष्ठतक्षणसाधनमस्त्रम् । तया य एकं बाहुं तक्षति, यश्चापरं चन्दनेन उक्षति, तयोरुभयोरपि शापानुग्रहौ न कुर्यात् ॥ २३ ॥

**[4]प्राणायामधारणाध्याननित्यः स्यात् ॥ २४ ॥**

प्राणानामन्तः संचारिणां वायूनामायामो निरोधः पञ्चदशमात्रापरिमितः । ते त्रयो धारणाः । तास्तिस्रो योगः बाह्यविषयचित्तवृत्तिनिरोधः । तेन आत्मध्यानं वक्ष्यमाणम् । तानि प्राणायामादीनि नित्यानि आवश्यकानि यस्य स तथोक्तः स्यात् । तदुक्तं **योगशास्त्रे**—

"[5]संभ्राम्य छोटिकां दद्यात् कराग्रं जानुमण्डले ।
मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः ॥
मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा स्मृता ।
त्रिभिस्त्रिभिः स्मृतैकैकैस्ताभिर्योगस्तथैव च ॥"

1 जीवित—च.
2 न चोत्पत्ति—घ.
3 भिक्षार्थं प्रणतिं न च—ख, ग.
4 यमनियमप्राणायाम—ज, ठ.
5 संभाव्य—ख, ठ.

इति । योगीश्वरोऽपि[1]—

" ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ।
धारयेत् तत्र चात्मानं धारणां धारयन् बुधः ॥ "

इति ॥ २४ ॥

**संसारस्यानित्यतां पश्येत् ॥ २५ ॥ शरीरस्याशुचिभावम् ॥ २६ ॥ जरया रूपविपर्ययम् ॥ २७ ॥ [2]शारीरमानसागन्तुकव्याधिभिश्चोपतापम् ॥ २८ ॥ सहजैश्च ॥ २९ ॥**

बाह्यविषयेभ्यश्चित्तनिवृत्त्युपायमाह । संसरन्ति प्राणिनोऽस्मिन्निति संसारो लोकः ; तस्य स्वर्गमर्त्यपातालादेरनित्यतां विनाशं पश्येत्-शास्त्रेणानुभवेन च । यथाह योगीश्वरः—

" गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ "

इति ॥ २५ ॥ शुक्रशोणिताद्यारब्धत्वेन मलमूत्राद्यशुचिद्रव्यसंपर्कित्वेन चाशुचित्वं देहस्यानुचिन्तयेत् वैराग्यजननाय ॥ २६ ॥ जरा तुरीयावस्था ; तया रूपस्य यौवनीयशरीरदार्ढ्यादेः विपर्ययः वलीपलिताद्यभिभवः ; तं च पश्येदिति सर्वत्र संबन्धनीयम् ॥ २७ ॥ शारीराः व्याधयः अर्शःप्लीहादयः । मानसाः मनोविक्षेपादयः । आगन्तुकाः वातपित्तोद्रेकादयः । चकारात् आधयश्च । तेऽपि शरीरविषयत्वेन शारीराः । मनोमात्रजन्यत्वेनार्थकामादिविषया मानसाः । आगन्तुकाः शत्रुकृतभयक्रोधादिजन्या मनःपीडादयः ; तैरुपतापः संज्वरः ; तम् ॥ २८ ॥ सहैव शरीरेण जायन्त इति सहजाः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ; तैश्चोपतापम् । चकारात् नानायोनिषु संसरणम् ; " भवो जातिसहस्रेषु " इति योगिस्मरणात् ॥ २९ ॥

**नित्यान्धकारे गर्भे वसतिम् ॥ ३० ॥ मूत्रपुरीषमध्ये च ॥ ३१ ॥ तत्र च शीतोष्णदुःखानुभवनम्[3] ॥ ३२ ॥ [4]जन्मसमये योनिसंकटनिर्गमनात् महद्दुःखानुभवनम् ॥ ३३ ॥**

चन्द्रसूर्याद्युद्द्योताभावेन नित्यमन्धकारो यस्मिन् ; तादृशे गर्भे वसतिम् ॥ ३० ॥ मूत्रपुरीषाशययोर्मध्यस्थे गर्भाशये वसतिम् । चकारात् करपादसंयमनाधोमुखत्वादि च ॥ ३१ ॥ तत्र गर्भाशये [5]मातृभुक्तपीतशीतोष्णान्नपानादिजन्यं शीतोष्णानुभवदुःखं च ॥ ३२ ॥

[1] योगीश्वरीयेऽपि—ग.  [2] शारीरमानसागन्तुभिश्च—ज.  [3] अनुभवम्—ठ.
[4] This Sūtra omitted in ज, ठ.  [5] भुक्त omitted in ग.

" चतुर्विंशाङ्गुलं योनिमण्डलं जायते स्त्रियाः ।
परीणाहश्च गर्भस्य प्रसवे पञ्चविंशकः ॥
तेन निर्गमने दुःखं योनेर्गर्भस्य जायते ।
प्रसूतिवातैः स बलाद्योनेर्निष्कास्यते चिरात् ॥ "

इति आदिपुराणात् जन्मकाले योनेः संकीर्णतया निर्गमे महतो गर्भस्य दुःखानुभवः ॥ ३३ ॥

**बाल्ये मोहं गुरुपरवश्यताम् ॥ ३४ ॥ अध्ययनादनेकक्लेशम् ॥ ३५ ॥ यौवने च विषयाप्राप्तावमार्गेण तदवाप्तौ विषयसेवनान्नरके पतनम् ॥ ३६ ॥ अप्रियैर्वसतिं प्रियैश्च विप्रयोगम् ॥ ३७ ॥ नरके च[1] सुमहद्दुःखम् ॥ ३८ ॥ संसारसंसृतौ तिर्यग्योनिषु च ॥ ३९ ॥**

बाल्यमा पञ्चमाद्वर्षात् । तत्र मोहं हिताहितापरिज्ञानम् । तत ऊर्ध्वं कर्तव्याकर्तव्यादौ गुरूणां मातापित्रादीनां परा अनतिक्रमणीया वश्यता अधीनता, ताम् ॥ ३४ ॥ तत उपनीतस्य [2]विद्याध्ययने गुरुशुश्रूषाध्ययनावधानाद्यनेकक्लेशम् ॥ ३५ ॥ तारुण्ये पुनः स्रक्चन्दनवनिताद्यनेकविषयाप्राप्तावनेकक्लेशं, तेषामेव विषयाणां निषेधातिक्रमेण प्राप्तानां सेवनेन नरकपातं च । तद्विषयशब्दयोः विग्रहवाक्ये षष्ठ्यन्ततया सामानाधिकरण्यम् ॥ ३६ ॥ अप्रियैः मनोदुःखकरैः सह वासः ; प्रियैः पुत्रकलत्रादिभिश्च वियोगः ॥ ३७ ॥ निषिद्धकर्मणा पूर्वोक्ते नरके सुतरां सांसारिकादतिशयेन महच्चिरकालानुगतं दुःखम् । चकारात् याम्यमार्गोद्भवं च ॥ ३८ ॥ नरकभोगानन्तरं दुरितशेषेण संसारप्राप्तौ जायमानासु श्वसृगालादियोनिषु वर्तमानं दुःखम् । चकारात् वृक्षगुल्मादियोनिषु च ॥ ३९ ॥

**एवमस्मिन् सततयायिनि संसारे न किंचित् सुखम् ॥ ४० ॥ यदपि किंचित् दुःखाभावापेक्षया सुखसंज्ञं तदप्यनित्यम् ॥ ४१ ॥ [3]तत्सेवाशक्तावलाभे वा महद्दुःखम् ॥ ४२ ॥**

उपसंहरति । एवं संसाराद्यनित्यतादिदर्शने अस्मिन् वर्तमानेऽपि प्रतिक्षणमुपचीयमानतथा सततयायिनि संसारे लोके न किंचित् सुखम् अनुकूलवेदनीयम् ॥ ४० ॥ संसारे पारमार्थिकसुखाभावात् यत् किंचित् दुःखाभावापेक्षया सुखत्वेन व्यवह्रियते, तदपि न नित्यम् ; न सततम् ; क्षणिकत्वात् ॥ ४१ ॥ तेषां वैषयिकसुखानां रोगादिना विषयसेवाशक्तौ, शक्तावपि दारिद्र्येण विषयालाभे वा महदेव दुःखम् ॥ ४२ ॥

[1] च omitted in ठ. [2] वेदाध्ययने—घ. [3] तत्सेवासक्तौ—ठ.

**शरीरं चेदं सप्तधातुकं पश्येत् ॥ ४३ ॥ वसारुधिरमांसमेदोऽस्थिमज्जाशुक्रात्मकम् ॥ ४४ ॥ चर्मावनद्धम् ॥ ४५ ॥ दुर्गन्धि च ॥ ४६ ॥ मलायतनम् ॥ ४७ ॥ सुखशतैरपि भृतं विकारि ॥ ४८ ॥**

इदानीं शारीराहंकारनिवृत्तये शरीरमेव विवृणोति । इदम् अहंभावेनात्मनयाभिमन्यमानं, शीर्यत इति शरीरं शरणस्वभावं, वक्ष्यमाणाः सप्त धातवो वसादयो यस्मिन्निति सप्तधातुकं पश्येत् । अनुवृत्तावपि पुनर्वचनं शास्त्रैरपेक्ष्येणैव प्रत्यक्षीकरणाभिप्रायेण ॥ ४३ ॥ सप्त धातूनाह । वसा मांसस्नेहः । रुधिरम् असृक् । मांसं पललम् । मेदः मांसरसः । अस्थि कीकसम् । मज्जा [1]अस्थिनालिकान्तर्वर्ती रसः । शुक्रं रेतः । एतान्येव आत्मा स्वरूपमारम्भकं यस्य तत् तथा । कार्यकारणयोरभेदप्रतिपत्त्या आत्मत्वव्यपदेशः । नातिरिक्तद्रव्योपादानकमित्यर्थः ॥ ४४ ॥ चर्मणा त्वचा अवनद्धं पिनद्धम्; तेन विना वसादीनामावरणासंभवात् ॥ ४५ ॥ स्वेदादिजननेन दुष्टगन्धवत् । चकारात् अस्पृश्यादिस्पर्शे अस्पृश्यं च ॥ ४६ ॥ मलानां पूर्वोक्तानां वसादीनामायतनं स्थानम् ॥ ४७ ॥ पानभोजनादिजन्यैः सुखशतैर्युक्तमपि पानभोजनादिभिरेव विकारि; तत्तद्गुरुलघुभावेन श्लेष्माजीर्णादिदुःखशताकुलमित्यर्थः ॥ ४८ ॥

**प्रयत्नाद्धृतमपि विनाशि ॥ ४९ ॥ कामक्रोधलोभमोहमदमात्सर्यस्थानम्[2] ॥ ५० ॥ पृथिव्यप्तेजोवाय्वाकाशात्मकम् ॥ ५१ ॥ अस्थिसिराधमनीस्नायुयुतम् ॥ ५२ ॥ रजस्वलम् ॥ ५३ ॥ षट्त्वचम् ॥ ५४ ॥ अस्थ्नां त्रिभिः शतैः षष्ट्यधिकैर्धार्यमाणम् ॥ ५५ ॥**

रसायनादिप्रयत्नैश्चिरधृतमपि विनाशशीलमेव ॥ ४९ ॥ कामः स्त्र्यभिलाषः । क्रोधः अमर्षः । लोभः लिप्सातिशयः । मोहः अज्ञानम् । मदः दर्पः । मात्सर्यम् ईर्ष्या । एषां षण्णां स्थानमाधारः ॥ ५० ॥ पृथिवी मांसास्थ्यादिः । आपः रुधिरम् । तेजः जाठरचाक्षुषादि । वायुः पञ्च प्राणाः । आकाशः कर्णमुखोदराद्यवकाशः । एतानि आत्मा स्वरूपमारम्भकं यस्य तत् तथा ॥ ५१ ॥ अस्थीनि कीकसानि । सिराः वातपित्तश्लेष्मवाहिन्यो नाड्यः । धमन्यः प्राणवायुवाहिन्यः । स्नायवः अङ्गप्रत्यङ्गसंधायिन्यः । तैर्युतम् ॥ ५२ ॥ बाह्यवायुसमुद्धूतरजःकीर्णतया रजोगुणाङ्गत्वेन च रजस्वलम् ॥ ५३ ॥ षट्संख्याः त्वचः रक्तमांसाद्याच्छादिका अतिसूक्ष्मवस्त्रप्रायाः एकैकोपरिभावेन अवस्थिताः चर्मपेश्यो यस्य तत् तथा ॥ ५४ ॥ अङ्गप्रत्यङ्गसंस्थितानां स्थूलसूक्ष्माणामस्थ्नां त्रीणि शतानि षष्टिश्च, तत्संख्यातैः शरीरं धार्यते ॥ ५५ ॥

[1] अस्थिनलिका—घ.

[2] मदेर्ष्यास्थानम्—ज, ठ.

**तेषां विभागः ॥ ५६ ॥ सूक्ष्मैः सह चतुःषष्टिर्दशनाः ॥ ५७ ॥ विंशतिर्नखाः ॥ ५८ ॥ [1]पाणिपादशलाकाश्च ॥ ५९ ॥ षष्टिरङ्गुलीनां पर्वाणि ॥ ६० ॥ द्वे पार्ष्ण्योः ॥ ६१ ॥ चतुष्टयं गुल्फेषु ॥ ६२ ॥**

ननु अन्यान्यपि अग्रे गणनीयानि ; तत्कथमियं संख्येत्यत आह । वक्ष्यमाणो विभागस्तेषामेवावधेयः ; नातिरिक्तानाम् ॥ ५६ ॥ सूक्ष्माणि दन्तमूलभूतानि स्थालाख्यानि द्वात्रिंशत् । तावन्त एव तदुत्पन्ना दन्ताः । तैः सह चतुःषष्टिर्भवन्ति ; "स्थालैः सह चतुःषष्टिर्दन्ताः" इति योगिस्मरणात् ॥ ५७ ॥ हस्तपादस्था नखा विंशतिः ॥ ५८ ॥ करपादयोः पृष्ठे शलाकाकाराणि अङ्गुलिमूलभूतानि विंशतिरेवास्थीनि ॥ ५९ ॥ प्रत्येकं विंशत्यङ्गुलीनां त्रीणि त्रीणि पर्वाणीत्येवं षष्टिः पर्वास्थीनि ॥ ६० ॥ पार्ष्णिः पादपश्चाद्भागः । तयोरस्थिनी द्वे ॥ ६१ ॥ गुल्फौ घुटिके जङ्घापादग्रन्थी । तौ च प्रत्येकं पादयोः द्वौ द्वावित्येवं चत्वारो गुल्फाः । तेषु चत्वार्यस्थीनि ॥ ६२ ॥

**चत्वार्यरत्न्योः[2] ॥ ६३ ॥ चत्वारि जङ्घयोः ॥ ६४ ॥ द्वे द्वे जानुकपोलयोः ॥ ६५ ॥ ऊर्वंसयोः[3] ॥ ६६ ॥ [4]अक्षतालूषकश्रोणिफलकेषु[5] ॥ ६७ ॥ [6]भगास्थ्येकम् ॥ ६८ ॥ पृष्ठास्थि पञ्चचत्वारिंशद्भागम् ॥ ६९ ॥ पञ्चदशास्थीनि ग्रीवा ॥ ७० ॥ जत्र्वेकम् ॥ ७१ ॥**

अरत्निः अरत्निमान् बाहुः । तत्र प्रत्येकं द्वे द्वे इत्येवं चत्वारि ॥ ६३ ॥ जङ्घा जङ्घावान् पादः । तयोः प्रत्येकं द्वे द्वे इत्येवं चत्वारि ॥ ६४ ॥ जङ्घोरुसंधिः जानु । कपोलः गण्डः । तयोः प्रत्येकं द्वे द्वे इत्येवं चत्वारि ॥ ६५ ॥ ऊरू सक्थिनी । अंसौ भुजशिरसी । तयोः प्रत्येकं द्वे द्वे इत्येवं चत्वारि ॥ ६६ ॥ अक्षः कर्णनेत्रयोर्मध्यभवः शङ्खाधोभागः । तालूषकं काकुदम् । श्रोणिफलकं कटिः । एतेषु त्रिष्वपि प्रत्येकं द्वे द्वे इति[7] षट् ॥ ६७ ॥ भगः उपस्थः । तत्रैकमस्थि ॥ ६८ ॥ पृष्ठास्थि पृष्ठवंशोऽपि पञ्चचत्वारिंशदस्थिकम् । ॥ ६९ ॥ ग्रीवा शिरोधरा । तस्यां पञ्चदशास्थीनि ॥ ७० ॥ वक्षोंऽसयोः संधिः जत्रु । तयोः प्रत्येकमेकैकम् । एवं द्वे जत्रुणी ॥ ७१ ॥

**[8]तथा हनुः ॥ ७२ ॥ तन्मूले च द्वे ॥ ७३ ॥ द्वे ललाटाक्षिगण्डे ॥ ७४ ॥ नासा घनास्थिका ॥ ७५ ॥ अर्बुदैः स्थालकैश्च**

[1] विंशतिः शलाकाः । द्वौ बाहू । ऊरुद्वयम् । जानुद्वयम् । षष्टिरङ्गुलीनाम् । द्वे पार्ष्णी । चतुष्टयं गुल्फेषु—ज, ठ.
[2] अरत्न्यः—ठ.
[3] ऊर्वंसयोश्च—ठ.
[4] अक्षस्तालोषकयोश्च । श्रोणिफलकेषु चैवमेव—ठ.
[5] चैवमेव added in ज.
[6] This Sūtra omitted in ज.
[7] इत्येवं—ख, ग.
[8] हनुश्च—ज.

**सार्धं द्वासप्ततिः पार्श्वकाः[1] ॥ ७६ ॥ उरः सप्तदश[2] ॥ ७७ ॥ द्वौ शङ्खकौ ॥ ७८ ॥ चत्वारि कपालानि शिरसश्चेति[3] ॥ ७९ ॥**

हनुः चिबुकम् । तत्रैकमस्थि ॥ ७२ ॥ तस्या हनोः मूलभूते द्वे अस्थिनी ॥ ७३ ॥ ललाटं भालम् । अक्षि चक्षुः । गण्डः कपोलाक्ष्णोर्मध्यभागः । तेषां समाहारः ललाटाक्षिगण्डम् । तत्र प्रत्येकं द्वे द्वे अस्थिनी इत्येवं षट् ॥ ७४ ॥ नासा नासिका; [4]सा च घनसंज्ञकैकास्थिमती ॥ ७५ ॥ पार्श्वकाः वङ्क्रयः । प्रत्येकं पार्श्वयोः त्रयोदश त्रयोदशेति षड्विंशतिस्तासाम् । वक्षसि संध्यस्थीन्यर्बुदान्युभयतो दश दशेति विंशतिः; षण्णां पार्श्वकाणां परस्परासारतयैवावस्थानेनार्बुदानपेक्षत्वात् । तासामेव पृष्ठतः संध्यस्थीनि स्थालका उभयतस्त्रयोदश त्रयोदशेति षड्विंशतिरित्येवं स्थालकार्बुदसहिताः पार्श्वकाः द्विसप्ततिः ॥ ७६ ॥ उरः वक्षः । तत् सप्तदशास्थिकम् ॥ ७७ ॥ भ्रूकर्णयोरन्तरवर्तिनी अस्थिनी शङ्खकौ द्वौ ॥ ७८ ॥ शिरसश्चत्वारि कपालानि । चकारः समुच्चितानामुक्तसंख्यापूरकत्वद्योतनार्थः । इतिः विभागसमाप्तौ ॥ ७९ ॥

**[5]शरीरेऽस्मिन् सप्त सिराशतानि ॥ ८० ॥ नव स्नायुशतानि ॥८१॥ धमनीशते द्वे ॥८२॥ पञ्च पेशीशतानि ॥८३॥ क्षुद्रधमनीनामेकोनत्रिंशल्लक्षाणि नवशतानि [6]षट्पञ्चाशद्धमन्यः ॥ ८४ ॥**

अवयवान्तराण्याह । अस्मिन् स्थूले शरीरे सिराणां वातपित्तादिवाहिनीनां नाडीनां सप्त शतानि ॥ ८० ॥ स्नायवः अङ्गप्रत्यङ्गसंबन्धिन्यो नाड्यः; तासां नव शतानि ॥ ८१ ॥ धमन्यः प्राणवायुवाहिन्यः नाड्यः । तासां द्वे शते ॥ ८२ ॥ बाह्याभ्यन्तराणां मांसपेशीनां पञ्च शतानि ॥ ८३ ॥ धमनीनामेव शाखासंख्यामाह । [7]स्थूलधमनीनां शाखाः क्षुद्रधमन्यः । तासामपि प्रशाखाधमन्यः; तासामिति । ता एकेन न्यूनानि त्रिंशल्लक्षाणि नवशतानि षट्पञ्चाशच्च भवन्ति ॥ ८४ ॥

**लक्षत्रयं श्मश्रुकेशकूपानाम् ॥ ८५ ॥ सप्तोत्तरं मर्मशतम् ॥ ८६ ॥ संधिशते द्वे ॥ ८७ ॥ चतुष्पञ्चाशद्रोमकोट्यः[8] सप्तषष्टिश्च लक्षाणि ॥ ८८ ॥**

मुखस्थानि रोमाणि श्मश्रूणि । शिरोजाः केशाः । कूपाः रोमकूपाः स्वेदस्रवणसुषिराणि । तेषां मिलितानां लक्षत्रयं संख्या ॥ ८५ ॥ मर्माणि मृत्युक्लेशहेतुस्थानानि । तेषां सप्ताधिकं शतम् ॥ ८६ ॥

1 पार्शुकाः—ठ. 2 सप्तदशास्थीनि—ठ. 3 शिरश्चेति—घ.
4 सा च omitted in घ. 5 शरीरके—ठ. 6 षट्पञ्चाशच्च—ज, ठ.
7 सरल—ख. 8 Here ends the MS.—ठ.

परिगणितानाम् अस्थ्नां संधयः शतद्वयम् ॥ ८७ ॥ उद्दिष्टकोटिसंख्याकानां रोम्णां सूक्ष्मतरा भागाः श्मश्रुकेशस्वेदच्छिद्रैः सह चतुष्पञ्चाशत्कोट्यः सप्तषष्टिलक्षाणि पञ्चाशत्सहस्राधिकानि वायुवेगैः पृथक् कृतानि योगिभिर्गण्यन्ते । यथाह **योगीश्वरः**—

" रोम्णां कोट्यस्तु पञ्चाशच्चतस्रः कोट्य एव च ।
सप्तषष्टिस्तथा लक्षाः सार्धाः स्वेदायनैः सह ।
वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः ॥ "

इति । मूले तु सार्धत्वानुक्तिः स्थूलमर्यादयेति न विरोधः ॥ ८८ ॥

**[1]नाभिरोजो गुदं शुक्रं शोणितं शङ्खौ मूर्धा कण्ठो हृदयं चेति प्राणायतनानि ॥ ८९ ॥ बाहुद्वयं जङ्घाद्वयं मध्यं शीर्षमिति षडङ्गानि ॥ ९० ॥**

ओजः प्राणादिपञ्चवायुपेशी । तत उत्पन्ना वायवः तत्तत्स्थानं व्याप्नुवन्ति । तत्स्वरूपं च **स्मृत्यन्तरे**—

" हृदि तिष्ठति यच्छुद्धमीषद्रक्तं सपीतकम् ।
ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छति ॥ "

इति । शेषं प्रसिद्धम् । एतानि नाभ्यादीनि नव प्राणसमुदायस्य आयतनानि स्थानानि । यद्यपि—

" हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥ "

इति पञ्चानां स्थाननियम एव स्मर्यते, तथाप्युक्तस्थानाभिधानेन पञ्चानामप्युत्क्रमणाभिप्रायेण स्थानत्वोक्तिः ॥ ८९ ॥ बाह्याङ्गान्याह । मध्यमुदरम् । शेषं प्रसिद्धम् ॥ ९० ॥

**वसा वपा अवहननं नाभिः क्लोमा यकृत् प्लीहा क्षुद्रान्त्रं वृक्कौ बस्तिः पुरीषाधानम् आमाशयः हृदयं स्थूलान्त्रं गुदम् उदरं गुदकोष्ठम् ॥ ९१ ॥**

आन्तराण्याह । वसा मांसस्नेहः । वपा मांसखण्डः । अवहननं फुप्फुसः । नाभिः प्रसिद्धः । क्लोमा मांसपिण्डः । यकृत् कालखण्डः । तौ च दक्षिणकुक्षिस्थौ । प्लीहा मांसपिण्डः अवहननं च सव्यकुक्षिस्थौ । क्षुद्रान्त्रं सूक्ष्मान्त्रम् । वृक्कौ हृदयसमीपस्थौ मांसपिण्डौ । बस्तिः मूत्राशयः । पुरीषाधानं मलाशयः ।

[1] नव छिद्राणि अग्निस्तेजो गुदं—ज.

आमाशयः अपक्वान्नस्थानम् । हृदयं हृत्पुण्डरीकम् । स्थूलान्त्रं दीर्घान्त्रम् । गुदं पायुः । उदरं प्रसिद्धम् । गुदकोष्ठं बाह्यात् गुदवलयात् अन्तर्गुदवलये द्वे । एकत्वं जात्यभिप्रायेण । एष आन्तरो विस्तारः ॥ ९१ ॥

**कनीनिके अक्षिकूटे शष्कुली कर्णौ कर्णपत्रकौ गण्डौ भ्रुवौ शङ्खौ दन्तवेष्टौ ओष्ठौ ककुन्दरे वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसंघातिकौ स्तनौ उपजिह्वा स्फिचौ बाहू जङ्घे ऊरू पिण्डिके तालूदरं बस्तिशीर्षौ चिबुकं गलशुण्डिके अवटुश्चेत्यस्मिन् शरीरे स्थानानि ॥ ९२ ॥**

अङ्गान्तराण्याह । कनीनिके अक्षितारे । अक्षिकूटे पक्ष्मणी । नेत्रनासासंधी इत्यन्ये । शष्कुली कर्णशष्कुल्यौ । कर्णौ कर्णसुषिरे । कर्णपत्रकौ कर्णपाशौ । गण्डौ शङ्खौ च प्रागुक्तौ । भ्रुवौ प्रसिद्धे । दन्तवेष्टौ दन्तपाल्यौ । ओष्ठौ दशनवसने । ककुन्दरे नितम्बकूपकौ । वङ्क्षणौ जघनोरुसंधी । वृषणौ अण्डकोशौ । वृक्कौ पूर्वोक्तौ ; तावेव श्लेष्मसंघातप्रवृद्धौ । स्तनाविति स्त्रीणामुच्येते । इदमित्थमेव व्याख्येयम् । अन्यथा बाह्याङ्गाभिधानप्रस्तावे अन्तरङ्गयोर्वृक्कयोः पुनरभिधानमसंगतं स्यात् । उपजिह्वा घण्टिका । स्फिचौ कटिप्रोथौ । बाहू भुजौ । जङ्घे जान्वधोभागौ । ऊरू जानूपरिभागौ । पिण्डिके जङ्घोर्वोर्मांसलौ भागौ । तालूदरम् ; तालु मुखान्तरूर्ध्वभागः, तस्योदरं मध्यप्रदेशः । बस्तिशीर्षौ ; बस्तेः मूत्राशयस्य शीर्षावुपरि स्थितौ नलौ । चिबुकं हनुः । गलशुण्डिके अवटुपार्श्वस्थौ नलौ । अवटुर्घाटा । इत्येतानि बाहुद्वयमारभ्य अवटुन्तान्यस्मिन् शरीरे प्राणस्थानानि । चकारात् अक्षिकर्णनखच्छिद्रादि च । यथाह **योगीश्वरः**—

“ अक्षिकर्णचतुष्कं च पद्धस्तहृदयानि च ।
नव छिद्राणि तान्येव प्राणस्यायतनानि च ॥ ”

इति ॥ ९२ ॥

**शब्दस्पर्शरूपरसगन्धाश्च विषयाः ॥ ९३ ॥ [1]नासिकालोचनत्वग्जिह्वाश्रोत्रमिति बुद्धीन्द्रियाणि ॥ ९४ ॥ हस्तौ पादौ पायूपस्थं जिह्वेति कर्मेन्द्रियाणि ॥ ९५ ॥ मनो बुद्धिरात्मा चाव्यक्तमितीन्द्रियातीताः ॥ ९६ ॥**

इन्द्रियविषयानाह । शब्दादयः पुरुषस्य विषयाः बन्धनहेतवः । “ षिञ् बन्धने ” इत्यस्माद्धातोः निष्पन्नस्य विसिन्वन्तीति व्युत्पत्त्या विषयशब्दस्य बन्धनार्थत्वात् ॥ ९३ ॥ इन्द्रियाण्याह । नासिका

[1] जिह्वात्वक् for त्वग्जिह्वा—ज.

नासाग्रस्थं घ्राणेन्द्रियम्। लोचने कनीनिकाग्रस्थं चक्षुरिन्द्रियम्। त्वक् त्वगग्रवर्ति त्वगिन्द्रियम्। जिह्वा जिह्वाग्रवर्ति रसनेन्द्रियम्। श्रोत्रं [1]कर्णसुषिरान्तर्वर्ति श्रोत्रेन्द्रियम्। एतानि घ्राणादीनि गन्धादि-विषयबुद्धिजनकत्वाद् बुद्धीन्द्रियाणि यथायथं ज्ञेयानि। बुद्धीन्द्रियत्वेन च तत्तत्संवित्साधनतया अनुमेयत्वं गमयति॥ ९४॥ किंच पायुः गुदम्। उपस्थं मैथुनसाधनम्। जिह्वा शब्दाभिव्यञ्जकमिन्द्रियम्। शेषं प्रसिद्धम् एतानि ग्रहणचलनहदननिधुवनवचनादिकर्मसाधनत्वात् कर्मेन्द्रियाणि। बुद्धिकर्मेन्द्रियनिर्देशेनैवोभयात्मकस्य मनसोऽपि निर्दिष्टत्वात् न पृथक् निर्देशः; "मनश्चैवोभयात्मकम्" इति **योगि**स्मरणात्। मनःप्रवृत्तिं विना उभयोरप्यप्रवृत्तेरुभयात्मकत्वम्॥ ९५॥ ननु वैराग्योत्पत्तौ शरीरानित्यतां पश्येदित्युक्तम्। तदनुपपन्नम्; शरीरातिरिक्तयोः द्रष्टृकरणयोरभावादित्यत आह। मनः अन्तःकरणम्। बुद्धिः अर्थप्रकाशः। आत्मा द्रष्टा। अव्यक्तं प्रधानम्। चकारात् इन्द्रियाणि। एते इन्द्रियागोचरत्वात् श्रुत्यनुमानादिगम्या इति नानुपपत्तिर्द्रष्टृकरणयोः॥ ९६॥

**इदं शरीरं वसुधे क्षेत्रमित्यभिधीयते।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः॥ ९७॥**

क्षेत्रज्ञज्ञानविधानाय क्षेत्रक्षेत्रज्ञौ विविनक्ति। हे वसुधे, इदं प्रपञ्चितं शरणस्वभावं शरीरं संसारफलककर्मरूपबीजयोगितया क्षेत्रमित्युक्तम्। तत् यो ग्रहीतुं त्यक्तुं च जानाति, तमात्मानम् आत्मविदो योगिनः क्षेत्रज्ञमित्याहुः। यथाह **योगीश्वरः**—

"स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते।
पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः॥"

इत्यारभ्य, "सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते" इत्यन्तेन॥ ९७॥

**क्षेत्रज्ञमपि मां विद्धि सर्वक्षेत्रेषु भाविनि।**
**क्षेत्रक्षेत्रज्ञविज्ञानं ज्ञेयं नित्यं मुमुक्षुणा॥ ९८॥**

**इति [2]श्रीविष्णुस्मृतौ षण्णवतितमोऽध्यायः**

कोऽसौ क्षेत्रज्ञः; किंच तन्निरूपणेन? इत्यत आह। भावः शास्त्रोक्तौ विश्वासः विद्यते यस्याः सा भाविनी; तत्संबोधनं, हे भाविनि। सर्वेषु जरायुजाण्डजस्वेदजोद्भिज्जातिवाहिकयातनार्थेषु षड्विधेष्वपि क्षेत्रेषु मामेव

[1] कर्णान्तर्वर्ति—घ.

[2] वैष्णवे धर्मशास्त्रे षण्णवतितमं प्रकरणम्—ज.

क्षेत्रज्ञं जानीहि। यद्यप्यविद्योपाधिभेदभिन्नानामेव क्षेत्रज्ञत्वं, न परमात्मनः; तथापि तयोः पारमार्थिकभेदाभावात् मामित्यभेदव्यपदेशः। यस्तु—

" निःसरन्ति यथा लोहपिण्डात् तप्ताः स्फुलिङ्गकाः।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ "

इति **योगीश्वरीयो** भेदनिर्देशः, सोऽप्यविद्योपाधिक एवेति न विरोधः। यदेतत् पूर्वं प्रपञ्चितं क्षेत्रक्षेत्रज्ञद्वयं, तस्य हानोपादानयोः विज्ञातृत्वात् विज्ञानं ब्रह्म जीवात्मरूपम्; तदेतन्मुमुक्षुणा पुरुषेण नित्यं नियमतो ज्ञातव्यम्; तदतिरिक्तस्य मोक्षोपायस्याभावात्। तथाच **श्रुतिः**—" तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय " इति ॥ ९८ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेयश्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[2]श्रीरामपण्डितात्मज[2]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां षण्णवतितमोऽध्यायः

1 श्रीविष्णुस्मृतिविवृतौ वैजयन्त्यां षण्णवतितमोऽध्यायः—घ, च.
2 श्री omitted in ग.

## सप्तनवतितमोऽध्यायः

**ऊरुस्थोत्तानचरणः सव्ये करे करमितरं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तानसंस्पृशन् स्वं नासिकाग्रं पश्यन् दिशश्चानवलोकयन् विभीः प्रशान्तात्मा चतुर्विंशत्या तत्त्वैर्व्यतीतं चिन्तयेत् ॥ १ ॥**

मोक्षार्थमात्मा ज्ञातव्य इत्युक्तम्। तत्रापेक्षितं ज्ञानोपायं सप्तनवतितमेनाह। ऊरुस्थौ उत्तानौ चरणौ यस्य स तथोक्तः; बद्धपद्मासन इति यावत्। यथोक्तं भगवता—

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥"

इति। तथा उत्ताने सव्ये करे दक्षिणकरमुत्तानं न्यस्य। तथा "उत्तानं किंचिदुन्नम्य मुखं विष्टभ्य चोरसा" इति पूर्वोक्तप्राणायामार्थं योगीश्वरोक्तं च कृत्वा। अचला जिह्वा यस्य स तथोक्तः। तथा दन्तैः दन्तान् असंस्पृशन्। स्वनासिकाग्रं दृग्द्वयेन पश्यन्। इदम्...धेयम्; मनसस्तत्रैव समाधानापातात्। किंतु चक्षुर्वृत्तिसंनिपातेनान्तःकरणसमाधानम्; आत्मचिन्तनविधानात्। इदमेव दिगनवलोकनेऽपि ज्ञेयम्। दृगञ्चलाभ्यां पूर्वापरादिदिशः, चकारात् पुरोऽवस्थितं विषयं चानवलोकयन्। विभीः चोरव्याघ्रादिजनितभयरहितः। प्रशान्तः रागद्वेषादिरहितः आत्मा अन्तःकरणं यस्य स तथाभूतः चतुर्विंशतितत्त्वातीतं पुरुषं चिन्तयेत्। चतुर्विंशतितत्त्वानि च—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति सांख्योक्तानि। अस्यार्थः—सत्त्वरजस्तमसां गुणानां साम्यावस्था मूलप्रकृतिः। अध्यवसायहेतुर्महत्तत्त्वम्। अभिमानहेतुरहंकारः। शब्दस्पर्शरूपरसगन्धात्मकानि पञ्च तन्मात्राणि। एकादशेन्द्रियाणि। पञ्च महाभूतानि च विकारभूतान्येवेति चतुर्विंशतितत्त्वानि। एतेभ्योऽतिरिक्तः अप्रकृतिविकृतिरूपश्चिदात्मकः पुरुषः पञ्चविंशः। तस्य चिन्तनं नाम तदाकाराविच्छिन्नचित्तवृत्तिपरंपरावस्थापनम्। तत्र यत्नवान् स्यात् ॥ १ ॥

**नित्यमतीन्द्रियमगुणं शब्दस्पर्शरूपरसगन्धातीतं [1]सर्वज्ञमतिस्थूलम् ॥ २ ॥**

तस्य तत्त्वातीतत्वे किं प्रमाणमित्यत आह । एतानि विशेषणानि पुरुषस्य व्यतिरेकहेतुतया तत्त्वभेदप्रतिपादकानि । तथा हि—नित्यत्वातीन्द्रियत्वाभ्यां महत्तत्त्वाहंकारतो भेदसिद्धिः; प्रकृतिकार्ययोस्तयोराविर्भावतिरोभावरूपानित्यत्वात्, मनोग्राह्यत्वेनैन्द्रियिकत्वाच्च । अगुणत्वेन प्रकृतिभेदः; तस्यास्त्रिगुणत्वात् । शब्दाद्यतीतत्वेन पञ्चभ्यस्तन्मात्रेभ्यः पञ्चभ्यो महाभूतेभ्यो भूतप्रकृतिकेभ्यो दशभ्य इन्द्रियेभ्यश्च भेदसिद्धिः । सर्वज्ञत्वेन सर्वग्राहकत्वेन मनोभेदसिद्धिः; तस्यात्माग्राहकत्वात्; "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" इति **श्रुतेः** । अतिस्थूलत्वेन परममहत्परिमाणवत्त्वेन बुद्धिभेदसिद्धिः, तस्याः विषयपरिमाणत्वात् ॥ २ ॥

**सर्वगमतिसूक्ष्मम् ॥ ३ ॥ सर्वतःपाणिपादं सर्वतोऽक्षिशिरोमुखं सर्वतः सर्वेन्द्रियशक्तिम् ॥ ४ ॥**

नन्वेवमस्तु तत्त्वभेदः; स्वरूपं तु तस्य किमित्यत आह । सर्वगं व्यापकम् । अतिसूक्ष्मं निराकारम् ॥ ३ ॥ नन्विदमाकाशादिसाधारणमित्यत आह । सर्वतः सर्वस्मिन्नपि प्रदेशे पाणिपादाक्षिशिरोमुखैः व्याप्तम् । तथा सर्वतः सर्वेष्वपि शब्दादिषु विषयेषु सर्वेषां चक्षुरादीन्द्रियाणां शक्तिः ग्रहणसामर्थ्यं यस्य तादृशम् । अयमर्थः—नास्मदादिवत् चक्षुरादीनां रूपादिनियतविषयग्राहकत्वमेव; किंतु चक्षुःश्रवोवत् शब्दादिग्राहकत्वमपि । एवं सर्वेषामिन्द्रियाणां [2]सर्वविषयग्राहकत्वमविरुद्धम् । नन्वेवं पाणिपादादिमत्त्वे निराकारत्वमसंगतमिति चेत्; सत्यम्; नात्र पाणिपादादिमत्त्वं स्वरूपेणास्तीत्युच्यते । किंतु तत्तच्छक्तिमत्त्वेनेति न विरोधः । तथाच **श्रुतिः**—"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति ॥ ४ ॥

**एवं ध्यायेत् ॥ ५ ॥ ध्याननिरतस्य च संवत्सरेण योगाविर्भावो भवति ॥ ६ ॥**

उक्ते चिन्तने प्रकारमाह । एवं चित्तवृत्तेः निरालम्बनतया निराकारीकरणेन [3]ध्यायेदित्युक्तानुवादः ॥ ५ ॥ ध्यानस्यानुषङ्गिकं फलमाह । प्राणायामधारणापूर्वके ध्याने यो निरतोऽभियोगवान्, स संवत्सरेण योगसिद्धिं लभते । यथाह **योगीश्वरः**—

[1] सर्वस्थम्—ज. [2] सर्वग्राहकत्वम्—घ. [3] ध्यायेदित्यनुवादः—घ.

" अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ।
निजं शरीरमुत्सृज्य परकायप्रवेशनम् ।
अर्थानां छन्दतः सृष्टिर्योगसिद्धेस्तु लक्षणम् "

इति ॥ ६ ॥

**अथ निराकारे लक्षबन्धं कर्तुं न शक्नोति, तदा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यात्माव्यक्तपुरुषाणां पूर्वं पूर्वं ध्यात्वा तत्र लब्धलक्षः [1]तत्परित्यज्यापरमपरं ध्यायेत् ॥ ७ ॥**

निर्बीजयोगाशक्तस्य सबीजयोगक्रमेण तमाह । यदा निराकारे ब्रह्मणि लक्ष्ये ग्राह्ये बन्धम् अन्तःकरणस्थैर्यं कर्तुं न शक्नोति, तदा पृथिव्यादिपुरुषान्तानां दशानां मध्ये पूर्वस्मिन् पूर्वस्मिन् ध्यानपरिपाकेनान्तःकरणस्थैर्यविषयतामानीते, तत्तत्परिहारेणापरमपरमन्तःकरणस्थैर्यविषयतामानयेत् । तत्र पृथिव्यादिपञ्चकं प्रसिद्धम् । मनः अन्तःकरणं संकल्पलक्षणम् । बुद्धिः विज्ञानात्मकं महत्तत्त्वम् । आत्मा अहंकारः । अव्यक्तं प्रधानम् । पुरुषः षड्विंशः । यथा यमः—

" मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः ।
एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ॥
श्रोत्राक्षिरसनाघ्राणत्वचः संकल्प एव च ।
शब्दरूपरसस्पर्शगन्धवाक्पाणिपायवः ॥
पादावुपस्थ इति ते विकाराः षोडश स्मृताः ।
चतुर्विंशकमित्येतज्ज्ञानमाहुर्मनीषिणः ॥
पञ्चविंशकमव्यक्तं षड्विंशः पुरुषोत्तमः ।
एतज्ज्ञात्वा विमुच्यन्ते यतयः शान्तबुद्धयः ॥ "

इति ॥ ७ ॥

**एवं पुरुषध्यानमारभेत ॥ ८ ॥ [2]तत्राप्यसमर्थः स्वहृदयपद्मस्यावाङ्मुखस्य मध्ये दीपवत् पुरुषं ध्यायेत् ॥ ९ ॥**

उक्तमर्थमुपसंहरति । एवम् उक्तेन क्रमेण पुरुषस्य निराकारस्य निरालम्बचित्तवृत्तिविषयतां नयेत्[3] ॥८॥ तत्राप्यसमर्थस्य प्रकारान्तरमाह । तत्र पृथिव्यादिध्यानक्रमेणात्मध्यानेऽप्यसमर्थोऽस्थिरचित्तवृत्तिः तस्यैवाधोमुख-

[1] तं तं परिहरेत्—ज.
[2] This Sūtra and commentary omitted in ख ; अत्रापि—Jolly's edition.
[3] आरभेत्—घ.

हृदयकमलकर्णिकायां निवातस्थदीपवत् [1]देदीप्यमानं निष्पकम्पं पुरुषमात्मानं ध्यायेत् । तदेव च तस्य ध्येयत्वं, यच्चित्तवृत्तेः बहिर्विषयावभासतिरस्कारेणात्मप्रवणता नाम । यथा शरावसंपुटनिरुद्धप्रभाप्रतानप्रसरस्य[2] ध्येयत्वं दीपैकनिष्ठत्वम् ॥ ९ ॥

**तत्राप्यसमर्थो भगवन्तं वासुदेवं किरीटिनं कुण्डलिनमङ्गदिनं [3]श्रीवत्साङ्कं वनमालाविभूषितोरस्कं सौम्यरूपं चतुर्भुजं शङ्खचक्रगदापद्मधरं चरणमध्यगतभुवं ध्यायेत् ॥ १० ॥**

[4]ध्यानयोगासमर्थस्य भक्तियोगमाह । तत्र क्षेत्रज्ञध्यानेऽप्यसमर्थो भगवन्तमचिन्त्यगुणैश्वर्यं वासुदेवं सकलभूतावासभूमिं दिव्यरत्नखचितकिरीटधरं विविधमणिमण्डितकुण्डलभूषितश्रवणयुगलं द्युमणिप्रद्योतविद्योतवितानललामगणाङ्गदशोभमानबाहुपरिघं वक्षःस्थललक्ष्यमाणश्रीवत्साङ्कं विचित्रकुसुमग्रथितापादलम्बिवनमालाविभूषितोरस्कं स्मितललितवदनताविभावितसौम्यरूपं पुरुषार्थचतुष्टयातिसर्गव्यग्रभुजचतुष्टयं तदालम्बितासह्यध्वनिविध्वंसितासुरसैन्यपाञ्चजन्यदितितनयाहितदर्शनसुदर्शनसुरनिवहमोदकरकौमोदकीसहचरितेन्दिरासद्मप्रफुल्लपद्मनालं चरणकमलयुगलाराधनतत्परवसुंधरं श्रीधरं ध्यायेत् ॥ १० ॥

**यद् ध्यायति तदाप्नोतीति ध्यानगुह्यम् ॥ ११ ॥ तस्मात् सर्वमेव क्षरं त्यक्त्वा अक्षरमेव ध्यायेत् ॥ १२ ॥**

उक्तध्यानतारतम्येन फलतारतम्यमाह । अनवरतध्यानजनितसंस्कारपाटवेनान्तकालेऽपि ध्यायमानस्यैव विषयस्य स्मरणात् तदाकारचित्तवृत्त्या त्यक्तदेहस्य तत्सायुज्यमेव भवतीति ध्यानानां निगूढं तत्त्वम् । यथोक्तं भगवता—

" यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ "

इति ॥ ११ ॥ निर्गलितमर्थमुपसंहरति । यस्मात् यद् ध्यायति तदाप्नोतीति तत्त्वं, तस्मात् सर्वमेव पृथिव्यादि क्षरम् उत्पत्तिविनाशयोगि त्यक्त्वा अनादृत्य अक्षरं निर्विकारं कूटस्थमेव ध्यायेत्, येन तदेवाप्नोति । यथाह भगवान्—

" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ "

1 देदीप्यमानं निष्पकम्पं omitted in ञ.
2 प्रतान omitted in घ.
3 श्रीवत्साङ्कं omitted in ञ.
4 ज्ञानयोगा—ग.

इति। नन्विदं पूर्वं पूर्वं त्यक्त्वा परं परं ध्यायेदित्यत्रैवोक्तत्वात् पुनरुक्तमिति चेत्; न; प्रयोजनभेदात्। तथाहि—चञ्चलचित्तस्यात्मनि चित्तस्थैर्यजनकाभ्यासविधानं तत्रोच्यते। अत्र तु निर्गुणध्यानमेव मुक्तिसाधनं, नानुकल्पीभूतसगुणध्यानमित्युच्यत इति न पौनरुक्त्यम्॥ १२॥

**न च पुरुषं विना किंचिदप्यक्षरमस्ति॥ १३॥ तं प्राप्य मुक्तो भवति॥ १४॥**

किं तदक्षरमित्यत आह। पुरुषोऽत्र षड्विंशः; पञ्चविंशस्य मुमुक्षुत्वेन ध्यानोपदेशात्। अत एव **यमः**—"षड्विंशः पुरुषोत्तमः" इति। **भगवानपि**—"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति। तं च विना किमप्यक्षरं न; सर्वस्याप्युत्पत्तिविनाशयोगात्॥ १३॥ कुतस्तस्यायमुत्कर्ष इत्यत आह। तं षड्विंशं पुरुषं प्राप्य ध्यानयोगेनाभिन्नत्वेन प्रतिपद्य पञ्चविंशो मुक्तः सायुज्यभाग्भवति। अनेन परमात्मसायुज्यं जीवस्य मुक्तिरिति मुक्तिलक्षणमप्युक्तं भवति; "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति भगवत्स्मरणात्॥ १४॥

**पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः।**
**तस्मात् पुरुष इत्येवं प्रोच्यते तत्त्वचिन्तकैः॥ १५॥**
**प्राग्रात्रापररात्रेषु योगी नित्यमतन्द्रितः।**
**ध्यायेत पुरुषं विष्णुं निर्गुणं पञ्चविंशकम्॥ १६॥**

पदप्रवृत्तिनिमित्ताभिधानेनैव पुरुषं लक्षयति। सकलं स्थावरजङ्गमात्मकं पुरं भूतग्राममन्तर्यामित्वेनाक्रम्याभिव्याप्य महाप्रभुः परमात्मा यस्मात् शेते ऽधितिष्ठति, तस्मात् आत्मतत्त्वचिन्तकैः अध्यात्मविद्भिः असौ पुरुष इत्युच्यते॥ १५॥

उक्ते ध्याने कालविधिमाह। प्राग्रात्रः रात्रेः प्रथमो यामः। अपररात्रः रात्रेः पश्चिमो यामः। तयोः प्रत्यहमालस्यमुदस्य योगशीलः, विष्णुं व्यापकं निर्गुणं त्रिगुणातीतं पञ्चविंशकं चतुर्विंशतितत्त्वव्यतिरिक्तं पुरुषम् अन्तर्यामिषड्विंशपरमात्माभेदेन ध्यायेत्॥ १६॥

**[1]तत्त्वात्मानमगम्यं च सर्वतत्त्वविवर्जितम्।**
**[2]अशक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च॥ १७॥**

[1] तत्त्वात्मानं ज्ञानगम्यं सर्वतत्त्वविवर्जितम्। सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।—ज.
[2] असक्तम्—घ.

पुरुषमेव चतुर्भिः श्लोकैर्विशिनष्टि। तत्त्वानां प्रकृत्यादीनामात्मा आश्रयः; "प्रकृतिः पुरुषं श्रिता" इति स्मरणात्; "प्रकृतिं स्वामधिष्ठाय" इति भगवत्स्मरणाच्च। अगम्यं चक्षुरादिप्रमाणागम्यम्। सर्वैः पूर्वोक्तैः प्रकृत्यादितत्त्वैर्विवर्जितं प्रकृतिविकृतिभावेन। अशक्तम्; शक्तिः प्रकृतिः, माया वा; तदवशीकृतम्। असक्तमिति पाठे प्रकृत्यादौ आसक्तिरहितम्। सर्वं भूतादिग्रामं बिभर्तीति सर्वभृत्।

"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि॥"

इति भगवत्स्मरणात्। निर्गुणम्; गुणैः सत्त्वादिभिः शून्यम्। गुणानां सत्त्वादिकार्याणां ज्ञानसुखादीनां भोक्तृ साक्षिभूतमपि तद्वत्तया व्यपदिश्यमानम्। स्त्रीपुंव्यञ्जकलिङ्गाभावात् नपुंसकनिर्देशस्तस्य॥ १७॥

**बहिरन्तश्च भूतानामचरं चरमेव च।**
**सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत्[1]॥ १८॥**
**अविभक्तं च भूतेन विभक्तमिव च स्थितम्।**
**भूतभव्यभवद्रूपं ग्रसिष्णु प्रभविष्णु च॥ १९॥**

किंच भूतानां प्राणिनां बहिः भोग्यरूपेण, अन्तः भोक्तृरूपेण च स्थितम्। अचरं वृक्षशैलादि-रूपम्। चरं जलपवनादिरूपम्। सूक्ष्मत्वात् अप्रकारत्वात् जिज्ञासाया अप्यगोचरम्। दूरस्थं बुद्ध्या-द्यविषयम्; "यो बुद्धेः परतस्तु सः" इति भगवत्स्मरणात्। अन्तिके हृत्पङ्कजमध्ये स्थितम्। तदिति विशेष्यपरामर्शः॥ १८॥

पृथिव्युपादानकस्य घटस्य पृथिवीत इव ब्रह्मोपादानकस्य भूतग्रामस्य ब्रह्मणोऽप्यभेदात् भूतग्रामेणा-विभक्तम् आत्यन्तिकभेदरहितम्। कार्याणां प्रातिभासिकभेदेन च भिन्नमिवावभासमानम्। भूतम् अतीत-कालम्; भव्यम् भविष्यत्कालम्; भवत् वर्तमानकालम्; तेषां समाहारो भूतभव्यभवत्; तद्रूपम्। जगतः ग्रसिष्णु संहारकम्। प्रभविष्णु उत्पादकं चेति विज्ञेयम्॥ १९॥

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्॥ २०॥**

ज्योतिषां चन्द्रसूर्यादीनां परप्रकाशकानामपि ज्योतिः प्रकाशकम्; "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः। अत एव तमसः अज्ञानात् परं तन्निवृत्तौ प्रकाशमानम्; "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः। ज्ञानम्; ज्ञानरूपम्, चिद्रूपत्वात्। तदेव च घटपटाद्याकारेण ज्ञेयम्। ज्ञान-

[1] यत्—घ.

गम्यम्; ज्ञायतेऽनेनेति ज्ञानं योगः, तेन गम्यत इति। तदेव विशिनष्टि। सर्वस्य प्राणिमात्रस्य हृत्पद्मे धिष्ठितं व्यवस्थितम्; "सर्वस्य चाहं हृदि संनिविष्टः" इति स्मृतेः। छान्दसोऽकारलोपः॥ २०॥

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥ २१॥**

**इति [1]श्रीविष्णुस्मृतौ सप्तनवतितमोऽध्यायः**

यदुक्तम् 'क्षेत्रक्षेत्रज्ञविज्ञानं ज्ञेयं नित्यं मुमुक्षुणा' इति, तत्फलसंयोगायोपसंहरति। इति 'शरीरं चेदम्' इत्यारभ्य 'इदं शरीरं वसुधे' इत्यन्तेन पूर्वोक्तेन प्रकारेण क्षेत्रम्। तथा; 'ऊरुस्थोत्तानचरणः' इत्यारभ्य 'तत्त्वैर्व्यतीतं चिन्तयेत्' इत्यन्तेन तेनैव प्रकारेण ज्ञानम्। ज्ञायते अनेनेति व्युत्पत्त्या ज्ञानसाधनं योगः। ज्ञेयम्; 'नित्यमतीन्द्रियम्' इत्यारभ्य 'हृदि सर्वस्य धिष्ठितम्' इत्यन्तेन निर्गुणं तदनुकल्पतया सगुणं ध्येयमिति समासतः संक्षेपेणोक्तम्। एतच्च सर्वं मदुक्तं विशेषेण ज्ञात्वा मद्भक्तो मद्भावाय उपपद्यते योग्यो भवतीति॥ २१॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिधर्माधिकारि**श्रीरामपण्डिता**त्मज-**श्रीनन्दपण्डित**कृतौ **श्रीविष्णुस्मृतिविवृतौ** श्रीमत्यां **वैजयन्त्यां**
सप्तनवतितमोऽध्यायः

[1] वैष्णवे धर्मशास्त्रे सप्तनवतितमं प्रकरणम्—ज.
[2] From श्रीमन्महा up to पण्डितकृतौ omitted in घ, च.

## अष्टनवतितमोऽध्यायः

**इत्येवमुक्ता वसुमती जानुभ्यां[1] शिरसा च नमस्कारं कृत्वोवाच ॥ १ ॥**

एवं भगवन्मुखादाकर्णितसकलधर्मया[2] धरण्या[3] गुरुपूजार्थं यत्कृतं नतिस्तुत्यादि, तदभिधायैवाष्टनवतितमेन शास्त्रमुपसंहरति। एवं द्वितीयाध्यायमारभ्य सप्तनवतितमाध्यायान्तेनोक्तप्रकारेण भगवता स्वयमखिलमपि धर्मजातमभिहितेति कारणाद् वसुमती जानुद्वयेन शिरसा च भूमिसंलग्नेन भगवन्तं प्रणम्य वक्ष्यमाणमुवाच। अनेन च स्त्रीणां नमस्कारप्रकारोऽप्यभिहितः;

"त्र्यङ्गः स्त्रीणां नमस्कारः पुंसामष्टाङ्ग ईरितः।
जानुयुग्मस्य शिरसो भूसङ्गात् त्र्यङ्ग इष्यते॥
उरसा शिरसा दृष्ट्या मनसा वचसा तथा।
पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टाङ्ग ईरितः॥"

इति स्मरणात्॥ १॥

**भगवन्, त्वत्समीपे सततमेवं[4] चत्वारि भूतानि कृतालयानि आकाशः शङ्खरूपी, वायुश्चक्ररूपी, तेजश्च गदारूपि, अम्भोऽम्भोरुहरूपि। अहमप्यनेनैव रूपेण भगवत्पादमध्ये परिवर्तिनी भवितुमिच्छामि ॥ २ ॥**

वचनमेवाह। पञ्चानामपि महाभूतानां भगवदेकाधारतायामविशेषात् आकाशादीनां चतुर्णां शङ्खादिचतुष्टयरूपेण भगवत्यवस्थानसिद्धौ ममैव किमिति वैलक्षण्यमिति तत्परिहाराय मयापि त्वय्येवावस्थेयमिति प्रार्थना॥ २॥

[1] च added in घ.
[2] धर्मकलापा—घ.
[3] धरण्यपि—घ.
[4] इह—घ, च.

**इत्येवमुक्तो भगवांस्तथेत्युवाच ॥ ३ ॥ वसुधापि लब्धकामा तथा चक्रे ॥ ४ ॥ देवदेवं च तुष्टाव ॥ ५ ॥**

प्रतिवचनमाह। एवमुक्तरीत्या पृथिव्या प्रार्थितो भगवान् इति पूर्वोक्तहेतोः तथेत्यङ्गीचकार ॥ ३ ॥ पृथिव्याः प्रार्थिताङ्गीकारमाह। भगवत्प्रतिवचनमाकर्ण्य पूर्णकामा पृथिव्यपि तथैवान्वतिष्ठत् ॥ ४ ॥ संतोषाभिव्यञ्जकमाह। देवानां हिरण्यगर्भादीनां देवः पूज्यः; "दैवतं देवतानां च" इति **स्मरणात्**। तं वक्ष्यमाणया स्तुत्या तुष्टाव ॥ ५ ॥

**ओं [1]नमस्ते ६; देवदेव ७; वासुदेव ८; आदिदेव[2] ९; कामदेव १०; कामपाल ११; महीपाल १२; अनादिमध्यनिधन १३; प्रजापते १४; सुप्रजापते १५; महाप्रजापते १६; ऊर्जस्पते १७;**

तामेवाह। अवति अन्तरात्मीभूय जगदिति ओम्। तस्मै जगद्रूपिणे ते तुभ्यं नमः; "ओमिति ब्रह्म। ओमितीद५सर्वम्" इति **श्रुतेः** ॥ ६ ॥ देवा इन्द्रादयः दीव्यन्ति भासन्ते अनेनेति; "तस्य भासा सर्वमिदं विभाति" इति **श्रुतेः** ॥ ७ ॥ वसति सर्वभूतेषु, वासयति वा सर्वाणि भूतानि आत्मनीति वासुः। दीव्यति क्रीडति विजिगीषते व्यवहरति द्योतते स्तूयते कामयते गच्छतीति वा देवः। वासुश्चासौ देवश्चेति;

"सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥"

इति **वैष्णवात्** ॥ ८ ॥ देवानामादिः उत्पत्तिस्थानमित्यादिदेवः ॥ ९ ॥ कामैः अभिलाषैः सृष्टिस्थितिसंहारविषयैः दीव्यतीति कामदेवः। [3]धर्मादिपुरुषार्थचतुष्टयं वाञ्छद्भिः काम्यत इति कामः। स चासौ देवश्चेति वा ॥ १० ॥ काममभिलाषं भक्तानां पालयति पूरयतीति कामपालः ॥ ११ ॥ महीं कूर्मीभूय पृष्ठे, शेषीभूय मस्तके च पालयतीति। राजा वा; "नराणां च नराधिपः" इति **स्मरणात्** ॥ १२ ॥ देशतः कालतश्च आदिमध्यान्तरहितः ॥ १३ ॥ प्रजानां देवासुरमनुष्यादीनां पतिः अन्तर्यामी ॥ १४ ॥ शोभना प्रजा संततिः येषां कश्यपादीनां, तेषां पतिः पाता ॥ १५ ॥ महती प्रजा संततिः यस्य स चतुर्मुखः, तस्य पतिः स्वामी ॥ १६ ॥ ऊर्जसः तेजसः प्राणबलस्य वा पतिः अधिष्ठाता ॥ १७ ॥

**वाचस्पते १८; जगत्पते १९; दिवस्पते २०; वनस्पते २१; पयस्पते २२; पृथिवीपते २३; सलिलपते २४; दिक्पते २५; महत्पते २६; मरुत्पते २७; लक्ष्मीपते २८; ब्रह्मरूप २९;**

[1] नमोऽस्तु ते—ज.   [2] महादेव added in ज.   [3] धर्मादि omitted in ग.

वागिन्द्रियप्रवर्तकः; वेदवाचां वा पतिः। अलुक्समासः ॥ १८ ॥ जगतां जङ्गमानां पतिः चलनादिक्रियाहेतुः ॥ १९ ॥ दिवः स्वर्गस्य पतिः दाता ॥ २० ॥ वनस्य वृक्षादिसमूहस्य पतिः प्ररोहकः ॥ २१ ॥ पयसः बालादिजीवनहेतोः स्तन्यस्य पतिः प्रवर्तकः ॥ २२ ॥ पृथिव्याः पतिः बीजप्ररोहणशक्तिः ॥ २३ ॥ सलिलपतिः वर्षुकः ॥ २४ ॥ दिशां दशानां पतिः प्रागादिव्यवहारहेतुः ॥ २५ ॥ महतः महत्तत्त्वस्य पतिः द्रष्टा ॥ २६ ॥ मरुतः वायोः पतिः प्रवहणशक्तिः ॥ २७ ॥ लक्ष्म्याः पतिः प्रदाता ॥ २८ ॥ ब्रह्म अनिर्वचनीयं रूपं यस्य ॥ २९ ॥

**ब्राह्मणप्रिय ३०; सर्वग ३१; अचिन्त्य ३२; ज्ञानगम्य ३३; पुरुहूत ३४; पुरुष्टुत ३५; ब्रह्मण्य ३६; ब्रह्मप्रिय ३७; ब्रह्मकायिक ३८; महाकायिक ३९; महाराजिक ४०;**

ब्राह्मणाः वेदविदः प्रिया दयिता यस्य "[1]न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्" इति भगवत्स्मरणात्। ब्राह्मणानां वा प्रियः ॥ ३० ॥ सर्वं स्थावरजङ्गमं गच्छति व्याप्नोतीति ॥ ३१ ॥ ध्येयाकारशून्यः ॥ ३२ ॥ ज्ञानेन निराकारेण गम्यतेऽसौ ॥ ३३ ॥ पुरुभिः बहुभिः यज्ञैः हूतः आहूतः ॥ ३४ ॥ पुरुभिः बहुभिः वेदैः स्तुतः ॥ ३५ ॥ ब्रह्म वेदादिः; तस्मै साधुः हितो वा; "तपो वेदाश्च जातिश्च ज्ञानं च ब्रह्मसंज्ञितम्। तेभ्यो हितत्वाद् ब्रह्मण्यः" इति **स्मरणात्** ॥ ३६ ॥ वेदानां प्रियः; वेदाः प्रिया यस्येति वा ॥ ३७ ॥ वेदैकशरीरः ॥ ३८ ॥ अपरिच्छिन्नमूर्तिः ॥ ३९ ॥ महती राजिः परंपरा संसारप्रवाहो यस्य सः ॥ ४० ॥

**चतुर्महाराजिक ४१; भास्वर ४२; महाभास्वर ४३; सप्त ४४; [2]महाभाग ४५; स्वर ४६; [3]तुषित ४७; [4]महातुषित ४८; [5]प्रतर्दन ४९; परिनिर्मित ५०; अपरिनिर्मित ५१;**

चतुर्गुणं महाराजिकं यस्य; "त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवात् पुनः" इति श्रुतेः ॥ ४१ ॥ तेजोमयमूर्तिः ॥ ४२ ॥ तेजसामपि प्रकाशकः ॥ ४३ ॥ अग्रेतनभागपदानुषङ्गात् सप्तभाग इति पदम्। सप्त भागाः भक्तयो यस्येति सप्तभक्तिकं साम। यद्वा सप्त लोका ऊर्ध्वमधश्च यस्येति अर्श आदित्वादच् ॥ ४४ ॥ महान् भागो भाग्यं यस्य ॥ ४५ ॥ सुष्ठु ऋच्छतीति स्वरः। "ऋ गतौ"; गतिः ज्ञानं प्राप्तिर्वा

[1] From न ब्राह्मणात् up to भगवत्स्मरणात् omitted in ख.

[2] महाभास्वर—ज.

[3] भूषित—ज.

[4] महाभूषित—ज.

[5] This Sūtra omitted in ज.

॥ ४६ ॥ तोषणं तुट्। तुषमितः तुषितः; भक्तसमर्पितैः कर्मभिः ॥ ४७ ॥ कर्मव्यतिरेकेणापि नित्यतुष्टः ॥ ४८ ॥ प्रलये सर्वान् लोकान् प्रकर्षेण तर्दति तृणत्तीति वा। "तर्द हिंसायाम्" ॥ ४९ ॥ परितः प्रपञ्चाकारेण निर्मितः ॥ ५० ॥ अकृत्रिमः ॥ ५१ ॥

**वशवर्तिन् ५२; [1]यज्ञ ५३; महायज्ञ ५४; यज्ञयोग ५५; यज्ञगम्य ५६; यज्ञनिधन ५७; अजित ५८; वैकुण्ठ ५९; अपार ६०; पर ६१; [2]पुराण ६२; लेख्य ६३; प्रजाधर ६४; चित्रशिखण्डधर ६५;**

भक्तानां वशे वर्तितुं शीलमस्य ॥ ५२ ॥ "यज्ञो वै विष्णुः" इति श्रुतेः। इज्यतेऽसौ यज्ञ इति वा ॥ ५३ ॥ महान् यज्ञो यस्य; "देवा यज्ञमतन्वत" इत्यादिश्रुतिप्रसिद्धः ॥ ५४ ॥ यज्ञेषु योगः कर्मकौशलं यस्य; "योगः कर्मसु कौशलम्" इति भगवत्स्मरणात् ॥ ५५ ॥ यज्ञानां गम्यो निवासस्थानम् ॥ ५६ ॥ यज्ञानां निधनं समाप्तिः यस्मिन् समर्पणेन; "तत् कुरुष्व मदर्पणम्" इति स्मरणात् ॥ ५७ ॥ सुरासुरैः न जितः ॥ ५८ ॥ विकुण्ठा माया। तस्या अयं प्रवर्तक इति वैकुण्ठः। विकुण्ठा माता वा कस्मिंश्चदवतारे; "विकुण्ठायां यतो जज्ञे वैकुण्ठस्तेन कीर्त्यते" इति भारतात् ॥ ५९ ॥ देशतः कालतो वा न विद्यते पारम् उत्तरावधिर्यस्य ॥ ६० ॥ मनोबुद्धीन्द्रियातीत;

"इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः॥"

इति स्मरणात् ॥ ६१ ॥ पुराणि शरीराणि अणति प्राप्नोति ॥ ६२ ॥ लेखेभ्यो देवेभ्यो हितः; "तस्मै हितम्" इति यत् ॥ ६३ ॥ प्रजां संततिं लोकान् वा धरतीति ॥ ६४ ॥ चित्रान् [3]त्रिपञ्चादिसंख्याकान् शिखण्डान् काकपक्षान् धरतीति ॥ ६५ ॥

**यज्ञभागहर ६६; [4]पुरोडाशहर ६७; विश्वेश्वर[5] ६८; विश्वधर ६९; शुचिश्रवः ७०; अच्युतार्चन ७१; घृतार्चिः ७२; खण्डपरशो ७३; पद्मनाभ ७४; पद्मधर ७५; पद्मधाराधर ७६; हृषीकेश ७७; एकशृङ्ग ७८; महावराह ७९; द्रुहिण ८०;**

[1] Sūtra-s 53 to 58 omitted in ज.

[2] This Sūtra omitted in ज.

[3] त्रिपञ्चसंख्याकान्—ख.

[4] पुरोडाशभागहर—ज.

[5] विश्वहर—ज.

यज्ञभागान् उपांशुयाजादिभागान् हरति ॥ ६६ ॥ पुरोडाशं वैष्णवं हरतीति ॥ ६७ ॥ विश्वस्य ईश्वरोऽन्तर्यामी ॥ ६८ ॥ विश्वं धरति आधारीभूयेति ॥ ६९ ॥ शुची श्रुत्याकर्णनशीले श्रवसी यस्य । शुचीनि श्रवांसि नामानि यस्येति वा ॥ ७० ॥ न च्युतम् अर्चनं देवासुरमनुष्येभ्यो[1] यस्य । न च्युतो भवति अर्चनादस्येति वा ॥ ७१ ॥ घृतेन अर्चिस्तेजो यस्येति ॥ ७२ ॥ खण्डः खण्डितः परशुः कुठारः यस्य शिवरूपस्य । खण्डनात् दैत्यानां क्षत्रियाणां वा खण्डः परशुः यस्य जामदग्न्यरूपस्य वा ॥ ७३ ॥ पद्मं ब्रह्मयोनिः नाभौ यस्य । पद्मस्य हृत्पुण्डरीकस्य नाभिः मध्यगत इति वा । पद्ममिव नाभिर्यस्येति वा ॥ ७४ ॥ पद्मं करे धरतीति ॥ ७५ ॥ पद्मानां धारा स्रक्; तां धरतीति ॥ ७६ ॥ हृषीकाणाम् विषयेन्द्रियाणाम् ईशः क्षेत्रज्ञः । हृषः हर्षकाः केशाः [2]रश्मयः यस्येति वा । पृषोदरादिः ॥ ७७ ॥ एकं च तत् शृङ्गं चेति ; "शृङ्गं प्राधान्यसान्वोश्च" इति कोशात् । एकं शृङ्गं मत्स्यावतारे यस्येति ॥७८॥ महान् धरोद्धरणक्षमदेहः वराहावतारः ॥ ७९ ॥ द्रुह्यति असुरेभ्यो अधार्मिकेभ्यो वेति द्रुहिणः ॥ ८० ॥

**अच्युत ८१ ; अनन्त ८२ ; पुरुष ८३ ; महापुरुष ८४ ; कपिल ८५ ; सांख्याचार्य[3] ८६ ; विष्वक्सेन ८७ ; धर्म ८८ ; धर्मद ८९ ; धर्माङ्ग ९० ; धर्मवसुप्रद ९१ ; वरप्रद ९२ ; विष्णो ९३ ; जिष्णो ९४ ; सहिष्णो ९५.**

न च्युतः स्वपदात् षड्भावविकारराहित्याद्वा ॥ ८१ ॥ देशतः कालतश्चान्तशून्यः ॥ ८२ ॥ पुरि सुषुम्नायां देहे वा शेत इति । "पुर अग्रगमने" इत्यस्मादुषनि कृते अग्रगामीति च ॥ ८३ ॥ महान् अपरिच्छिन्नः पुरुषः ॥ ८४ ॥ कपिलः वर्णतो नामतश्च महामुनिः । कपिं वराहं लातीति ; "कपिर्वराहः श्रेष्ठश्च" इति भगवद्वचनात् ॥ ८५ ॥ सांख्यं शुद्धात्मतत्त्वविज्ञानम् ; "शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते" इति व्यासस्मरणात् । तस्याचार्यः प्रवर्तकः ॥ ८६ ॥ विष्वक् समंततः सेना यस्य ॥ ८७ ॥ अभ्युदयनिःश्रेयसे साधनीभूय धारयतीति ॥ ८८ ॥ धर्ममपूर्वविशेषं विघ्नवारणेन ददाति साधयतीति ॥ ८९ ॥ धर्मस्य ज्योतिष्टोमादेः अङ्गम् ; आद्यन्तयोः स्मरणीयत्वात् ;

"ईश्वरो नित्यकालात्मा चिन्तनीयः स कर्मसु ।
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति"

[1] नरेभ्यः--ख, ग.
[2] रमश्रूणि—ख.
[3] योगाचार्य added in ज; This Sūtra omitted in ख.

इति **स्मरणात्** ॥ ९० ॥ धर्मं च वसु द्रव्यं च प्रकर्षेणाल्पादपि कर्मणः अतिशयेन ददातीति ॥ ९१ ॥ वरमभिलषितं भक्तेभ्यो ददातीति ॥ ९२ ॥ वेवीष्टीति विष्णुः । व्याप्तिवचनात् विषेः नुप्रत्यये रूपम् । विशति भूतान्यसौ, विशन्ति भूतान्यस्मिन्निति विशतेः नुप्रत्यये वा रूपम् ॥ ९३ ॥ सर्वत्र जयशीलः ॥ ९४ ॥ सहनशीलो जगत्कष्टस्येति ॥ ९५ ॥

**[1]कृष्ण ९६; पुण्डरीकाक्ष ९७; नारायण ९८; परायण ९९; जगत्परायण १००; नमोनम इति ॥ १०१ ॥**

**[2]स्तुत्वा त्वेवं प्रसन्नेन मनसा पृथिवी तदा ।**
**उवाच संमुखं देवीं लब्धकामा वसुंधरा ॥ १०२ ॥**

इति [3]श्रीविष्णुस्मृतौ अष्टनवतितमोऽध्यायः

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥"

इति **व्यासः** । कर्षतीति कृष्ण इति वा ;

"कृषामि पृथिवीं पार्थ भूत्वा कार्ष्णायसो हलः ।
कृष्णो वर्णश्च मे यस्मात् तस्मात् कृष्णं विदुर्जनाः ॥"

इति **स्मरणात्** ॥ ९६ ॥ हृदयपुण्डरीकमश्नुते व्याप्नोतीति, तत्र उपलक्ष्यत इति वा ; पुण्डरीकवत् अक्षिणी यस्येति वा ; पुण्डरीकस्थाने समर्पितं शिवायाक्षि येनासाविति वा ॥ ९७ ॥ नरः आत्मा ; "नयतीति नरः प्रोक्तः परमात्मा सनातनः" इति **व्यासस्मरणात्** । तस्माज्जातान्याकाशादीनि कार्याणि नाराणि । तानि अयनं स्थानं यस्य ;

"यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥"

इति **श्रुतेः** ;

"नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥"

[1] वासुदेवकृष्ण—ज.

[2] ततस्त्वेवं प्रसन्नात्मा पृथिवीमभ्यनन्दत ।
उवाच च मुखं देवी तृप्तकामा वसुंधरा ॥—ज.

[3] वैष्णवे धर्मशास्त्रे अष्टनवतितमं प्रकरणम्—ज.

इति स्मृतेश्च ;

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥"

इति मानवाच्च ॥ ९८ ॥ परमुत्कृष्टमयनं पुनरावृत्तिरहितं स्थानम् ॥ ९९ ॥ जगतां चराचराणां परमयनं स्थानम् ॥ १०० ॥ नम्यन्त इति नमसः ब्रह्मादयः । तैः नम्यत इति नमोनमः । कर्मण्यसुनि कृते साधुः । इतिः स्तुतिसमाप्तौ ॥ १०१ ॥

भगवत्स्तुत्यनन्तरं तच्छक्तेः लक्ष्म्याः स्तुतिं प्रस्तौति । भगवन्मुखात् स्वजिज्ञासितधर्माकर्णनेन पूर्णकामा, अत एव वसुंधरा धर्महेतुधनपूर्णा, अत एव पृथिवी सर्वापेक्षया महती, प्रसन्नेन चेतसा एवं षण्णवत्यध्यायोपदेष्टारं महागुरुं भगवन्तं षण्णवत्यैव नामभिः स्तुत्वा भगवतीं लक्ष्मीं संमुखं यथा भवति तथा वक्ष्यमाणमुवाच ॥ १०२ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम्
अष्टनवतितमोऽध्यायः

[1] श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यामष्टनवतितमोऽध्यायः—घ, च ; धर्माधिकारिनन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यामष्टनवतितमोऽध्यायः—ग.

## एकोनशततमोऽध्यायः

**दृष्ट्वा श्रियं देवदेवस्य विष्णो-**
**र्गृहीतपादां तपसा ज्वलन्तीम् ।**
**[1]सुतप्तजाम्बूनदचारुवर्णां**
**पप्रच्छ देवीं वसुधा प्रहृष्टा ॥ १ ॥**

पूर्वाध्यायान्ते प्रकृतां लक्ष्मीस्तुतिमेकोनशततमेनावतारयति । श्रयन्त्येनां सर्वे जना इति श्रीः ; ताम् । देवदेवस्य विष्णोः गृहीतपादां संवाहितचरणकमलाम् । भगवतो यावद्योगनिद्रमनशनरूपेण तपसा देदीप्यमानाम् । स्वभावत एव द्रवीकृतसुवर्णवर्णाम् । अत एव देवीं दीव्यन्तीं दृष्ट्वा प्रसन्नान्तःकरणा वसुधा वक्ष्यमाणं पप्रच्छ ॥ १ ॥

**उन्निद्रकोकनदचारुकरे वरेण्ये**
**उन्निद्रकोकनदनाभिगृहीतपादे[2] ।**
**उन्निद्रकोकनदसद्मसदास्थितामे**
**उन्निद्रकोकनदमध्यसमानवर्णे ॥ २ ॥**

प्रश्नार्थं तां संबोधयति । उन्निद्रं विकसितं यत् कोकनदं रक्तोत्पलं, तेन तद्वद्वा चारु करतलं यस्याः । वरेण्ये वरवर्णिनि । तादृशस्यैव तस्य नाभिना कर्णिकया स्वोपरिशायितचरणकमले । तादृश एव तस्मिन्नेव सद्मनि सदा नित्यं स्थितिमिते प्राप्ते । तादृशस्यैव तस्य मध्येन वराटकेन समानो वर्णः कान्तिर्यस्याः । तदेवमनेकैः संबोधनैरादरातिशयो द्योत्यते ॥ २ ॥

**नीलाब्जनेत्रे तपनीयवर्णे**
**शुक्लाम्बरे रत्नविभूषिताङ्गि ।**
**चन्द्रानने सूर्यसमानभासे**
**महाप्रभावे जगतः प्रधाने[3] ॥ ३ ॥**

[1] प्रतप्त—ज.  [2] चारुगृहीतपादे—ज.  [3] प्रभावे—ख.

किंच [1]नीलोत्पलवन्नेत्रे। तपनीयं सुवर्णं तद्वद्वर्णः। श्वेतम् अम्बरम्[2]। रत्नैः विभूषितम् अङ्गम्। चन्द्रवत् आननम्। सूर्येण समाना भासा। "आपं चैव हलन्तानाम्" इत्याप्। महान् प्रभावः सामर्थ्यं यस्या इति सर्वत्र बहुव्रीहिः। जगतो विश्वस्य प्रधाना प्रथमोद्देश्या प्रसवित्री प्रकृतिर्वेति ॥ ३ ॥

**त्वमेव निद्रा जगतः प्रधाना**
**लक्ष्मीर्धृतिः श्रीर्विरतिर्जया च।**
**कान्तिः प्रभा कीर्तिरथो विभूतिः**
**सरस्वती वागथ पावनी च ॥ ४ ॥**

एवं संबोध्य तां स्तौति। [3]निद्रा; निर्गता द्रा कुत्सिता [4]मतिः यस्याः सा, मुक्तिः सुषुप्तिर्वा। जगतः चतुर्ष्वपि पुरुषार्थेषु प्रधाना मुख्योद्देश्या। लक्ष्यते प्रयोजनतया सर्वकर्मसु संसारिभिः लक्ष्मीः। धृतिः भयादिहेतुषु धीरता। श्रयति पुरुषोत्तमं, श्रयन्त्येनां सर्वे जना इति वा श्रीः। विरतिः मुमुक्षया विषयसुखेषु वैराग्यम्। जया रणेषु जयश्रीः। कान्तिः स्त्रीपुरुषादिशरीरेषु सुन्दरता। प्रभा सूर्याचन्द्रमसोर्दीप्तिः। कीर्तिः सत्कर्मप्रभवा समाख्या। विभूतिः धनधान्यादिसमृद्धिः। सरस्वती विदुषामर्थकल्पनाशक्तिः। वाक् अर्थप्रतिपादनशक्तिः[5]। पावनी प्रायश्चित्तादेः पापनाशनशक्तिश्च त्वमेव ॥ ४ ॥

**स्वधा तितिक्षा वसुधा प्रतिष्ठा**
**स्थितिः सुदीक्षा च [6]तथा सुनीतिः।**
**ख्यातिर्विशाला च तथानसूया**
**स्वाहा च मेधा च तथैव बुद्धिः ॥ ५ ॥**

किंच स्वधा पितृतृप्तिः। तितिक्षा विरक्तानां द्वन्द्वसहनशक्तिः। वसुधा धनधारणशक्तिः। प्रतिष्ठा स्थापनशक्तिः। स्थितिः स्थानशक्तिः। सुदीक्षा यज्ञाधिकारसिद्धिः। सुनीतिः सामाद्युपायसिद्धिः। ख्यातिः विशाला सार्वजनीनप्रसिद्धिः। अनसूया परोत्कर्षे संतोषिता। स्वाहा देवतृप्तिः। मेधा शब्दार्थधारणशक्तिः। बुद्धिः अवबोधशक्तिश्च त्वमेव ॥ ५ ॥

[1] नीलोत्पलनेत्रे—घ.
[2] अम्बरे—घ.
[3] निद्रा omitted in घ.
[4] गतिः—ख.
[5] प्रतिपादनी शक्तिः—घ.
[6] तथा च नीतिः—घ.

**आक्रम्य सर्वं तु यथा त्रिलोकीं**
**तिष्ठत्ययं देववरोऽसिताक्षि ।**
**तथा स्थिता त्वं वरदे तथापि**
**पृच्छाम्यहं ते वसतिं [1]विभूतेः ॥ ६ ॥**

एवं संबोध्य स्तुत्वा च विवक्षितं पृच्छति । यथा त्रैलोक्यव्यापको भगवान्, तथा तच्छक्तेस्तवापि त्रैलोक्यव्यापकत्वं सिद्धमेव, शक्तिशक्तिमतोरविनाभावात् अभेदाद्वेति यद्यपि, तथापि तव [2]विभूतेः वसतिं निवासस्थानम् अहं पृच्छामि ॥ ६ ॥

**इत्येवमुक्ता वसुधां बभाषे**
**लक्ष्मीस्तदा देववराग्रतःस्था ।**
**[3]सदा स्थिताहं मधुसूदनस्य**
**देवस्य पार्श्वे तपनीयवर्णे ॥ ७ ॥**

प्रश्नोत्तरमाह । एवं पूर्वोक्तप्रकारेण, [4]उक्ता संबोध्य स्तुत्वा पृष्टेति हेतोः भगवदग्रे स्थित्वा लक्ष्मीः वसुधां बभाषे । यदहं तपनीयवर्णे सुवर्णवत् द्योतमाने भगवतो मधुसूदनस्य पार्श्वे नित्यं तिष्ठामि । अत्र नित्यमित्यभिधानादन्यत्रानित्या वसतिरुक्ता भवति । तपनीयवर्णे इति न संबोधनम्; "धरण्या च [5]दूर्वाङ्कुरश्यामलाङ्ग्या" इति धरण्याः श्यामत्वस्मरणात् ॥ ७ ॥

**[6]अस्याज्ञया यं मनसा स्मरामि**
**श्रिया युतं तं प्रवदन्ति सन्तः ।**
**संस्मारणे चाप्यथ यत्र चाहं**
**स्थिता सदा तच्छृणु लोकधात्रि ॥ ८ ॥**

यदि भगवत्येव वसतिः, तर्हि कथमन्येषां श्रीमत्त्वव्यवहार इत्यत आह । '[7]एतं संभावय' इत्यस्य भगवतो निदेशेन यमेवाहं मनसा स्मरामि, तमेव सन्तः श्रीमन्तं प्रवदन्ति । स्मरणस्य मानसत्वेऽपि मनसेति वचनं कायिकवाचिकव्यापारनैरपेक्ष्याभिधानाय । संस्मारणे संस्मरणहेतौ भगवन्निदेशे च सति, यत्राहं तिष्ठामि तदपि हे लोकधात्रि शृणु ॥ ८ ॥

1 प्रकृत्याः—ज. 2 विभूत्याः—ग. 3 इयं—ज.
4 उक्ता omitted in ग; उक्त्वा—घ. 5 दूर्वादल—घ.
6 यस्या—ग. 7 एवं—घ.

वसाम्यथार्के च निशाकरे च
तारागणाढ्ये गगने विमेघे ।
मेघे तथा लम्बपयोधरे च
शक्रायुधाढ्ये च तडित्प्रकाशे ॥ ९ ॥

वासस्थानान्येवाह । चन्द्रसूर्ययोः, विमलतारके निर्मेघे गगने, लम्बं पतनोन्मुखं पयः पानीयं धरतीति तादृशे शक्रधनुर्भूषिते स्फुरद्विद्युति मेघे चाहं वसामि । चकारः तथाशब्दश्च प्रत्येकं वासस्थानताभिधानाय ॥ ९ ॥

तथा सुवर्णे विमले च रूप्ये
रत्नेषु वस्त्रेष्वमलेषु भूमे ।
[1]प्रासादमालासु च पाण्डुरासु
देवालयेषु ध्वजभूषितेषु ॥ १० ॥

किंच हे भूमे, निर्मलयोः सुवर्णरजतयोः, अमलयोः वस्त्ररत्नयोश्च, सुधाधवलितासु प्रासादपरंपरासु, ध्वजभूषितेषु देवालयेषु चाहं तिष्ठामि ॥ १० ॥

[2]सद्यः कृते चाप्यथ गोमये च
मत्ते गजेन्द्रे तुरगे प्रहृष्टे ।
वृषे तथा दर्पसमन्विते च
विप्रे तथैवाध्ययनप्रपन्ने ॥ ११ ॥

किंच गोभिः सद्यो विसृष्टे गोमये, प्रश्च्योतन्मदे गजेन्द्रे, प्रहृष्टे हेषारवपुष्टे तुरगे, दृप्ते वृषे, वेदाध्यायिनि विप्रे चाहं निवसामि ॥ ११ ॥

सिंहासने चामलके च बिल्वे
छत्रे च शङ्खे च तथैव पद्मे ।
दीप्ते हुताशे विमले च खड्गे
आदर्शबिम्बे च तथा स्थिताहम् ॥ १२ ॥

[1] पयोदमालासु—घ.

[2] Verse 11 and commentary thereon omitted in घ.

किंच सिंहैर्युक्तमासनं सिंहासनं भद्रासनम्, तत्र; आमलके धात्रीवृक्षे; बिल्वे श्रीफलवृक्षे; छत्रे आतपवारणे; शङ्खे वाद्ये; पद्मे विकसिते; दीप्ते ज्वालाकुले वह्नौ; निर्धौतमले खड्गे; तादृशे आदर्शे चाहं तिष्ठामि ॥ १२ ॥

[1]पूर्णोदकुम्भेषु सचामरेषु
सतालवृन्तेषु विभूषितेषु ।
भृङ्गारपात्रेषु मनोहरेषु
मृदि स्थिताहं च नवोद्धृतायाम् ॥ १३ ॥

किंच पूर्णमुदकं येषु ते पूर्णोदाः; ते च ते कुम्भाश्च; तेषु । चामरं वालव्यजनं, तालवृन्तं व्यजनं, ताभ्यां सहितेषु । साहित्यं चात्र वासाभिप्रायेण, न वैशिष्ट्याभिप्रायेण; शकुनाध्याये केवलयोरेव प्राशस्त्यश्रवणात् । विभूषितेषु [2]विचित्रितेषु प्रदेशेषु । भृङ्गारः कनकालुकः; पात्राणि स्थालादीनि; तेषु । मनोहरेषु अन्येष्वपि शयनासनादिषु । अभिनवोद्धृतायां मृदि चाहं वसामि ॥ १३ ॥

क्षीरे तथा सर्पिषि शाद्वले च
क्षौद्रे तथा दध्नि पुरंध्रिगात्रे ।
देहे कुमार्याश्च तथा सुराणां
तपस्विनां यज्ञहुतां च देहे ॥ १४ ॥

किंच दधिक्षीरसर्पिःक्षौद्रेषु; तथाशब्दात् शर्करायां च; पञ्चामृतत्वोपदेशात् । शाद्वले हरिततृणप्रदेशे । पुरंध्रिः सभर्तृका स्त्री; तद्देहे । कुमारी अविवाहिता कन्या; तद्देहे । सुराः देवप्रतिमाः । तपस्विनः कृच्छ्रादिकारिणः । यज्ञे जुह्वतीति यज्ञहुतः ऋत्विजः; यजमानानां दीक्षयैव ग्रहणात् । [3]एषां देहे तिष्ठामि ॥ १४ ॥

शूरे च संग्रामविनिर्गते [4]च
[5]स्थिता मृते स्वर्गसदःप्रयाते ।
वेदध्वनौ चाप्यथ शङ्खशब्दे
स्वाहास्वधायामथ वाद्यशब्दे ॥ १५ ॥

[1] Verses 13 to 18 and commentary thereon omitted in ज.

[2] चित्रितेषु—ग.

[3] एतेषां—घ.

[4] स्थिता—घ.

[5] मृते नरे स्वर्ग—घ.

किंच शरे; चकारात् धनुषि। संग्रामं जित्वा विनिर्गते पुरुषे, संग्राममूमावेव मृते पतिते शवभूतेऽपि स्वर्गसभां प्रयाते जीवे च, वेदशङ्खवीणादिवाद्यध्वनिषु च, स्वाहास्वधयोः दैविकपैतृककर्मणोश्चाहं स्थिता ॥ १५ ॥

[1]राज्याभिषेके च तथा विवाहे
यज्ञे वरे स्नातशिरस्यथापि।
पुष्पेषु शुक्लेषु च पर्वतेषु
फलेषु रम्येषु सरिद्वरासु ॥ १६ ॥

किंच राज्याय अभिषेके; विवाहे मण्डपदेवतास्थापनादिविसर्जनान्ते काले; यज्ञे दीक्षणीयाद्युदवसानीयान्ते; वरे विवाहोद्यते; अपिशब्दात् तादृश्यां कन्यकायामपि; शिरसा स्नातः स्नातशिराः, तस्मिन्; श्वेतपुष्पेषु; पर्वतमस्तके; फलेषु भक्ष्येषु; रम्येषु प्रदेशेषु पुलिनादिषु; सरिद्वरासु महानदीषु चाहं स्थिता ॥ १६ ॥

सरःसु पूर्णेषु तथा जलेषु
सशाद्वलायां भुवि पद्मखण्डे।
वने च वत्से च शिशौ प्रहृष्टे
साधौ नरे धर्मपरायणे च ॥ १७ ॥

किंच जलपूर्णेषु सरःसु; निर्मलेषु जलेषु; हरिततृणाच्छन्नप्रदेशायां भुवि; पद्मखण्डे पद्माकरे; फलपुष्पवति वने; वत्से अभिनवजाते; शिशौ स्तनंधये; प्रहृष्टे हर्षयुते; साधौ अपकारानभिज्ञे; धर्मपरायणे धर्मेणैव परमयनं मोक्षो यस्य, तस्मिन् ॥ १७ ॥

आचारसेविन्यथ शास्त्रनित्ये[2]
विनीतवेषे च तथा सुवेषे।
सुशुद्धदान्ते मलवर्जिते च
मृष्टाशने चातिथिपूजके च ॥ १८ ॥

साधुमारभ्य पुरुषविशेषानाह। आचारः स्नानसंध्यादिः, तत्सेवनशीले; नित्यमसंदिग्धं शास्त्रं यस्यासौ शास्त्रनित्यः; विनीतः अनुद्धतः वेषो वस्त्राभरणादिधारणं यस्यासौ; तथा शोभनः अकुत्सितः वेषो

[1] राजाभिषेके—घ, Jolly's edition. [2] निष्ठे—घ.

यस्य; सुशुद्धः जितबाह्येन्द्रियः; दान्तः जितमनस्कः; मलवर्जितः निष्पापः; मृष्टाशनः शुद्धान्नभोक्ता; अतिथिप्रियः; तस्मिन् निवसामि ॥ १८ ॥

**स्वदारतुष्टे निरते च धर्मे**
**[1]धर्मोत्कटे [2]चात्यशनाद्विमुक्ते ।**
**सदा सपुष्पेससुगन्धिगात्रे[3]**
**सुगन्धलिप्ते[4] च विभूषिते च ॥ १९ ॥**

स्वदारेष्वेव तुष्टः परदारविमुखः; धर्मे निरतः धर्मैकनिष्ठः; [5]धर्मोत्कटः अर्थकामाद्यपेक्षया अतिशायिधर्मः; अत्यशनात् त्रिचतुर्वारभोजनात् रहितः; सर्वदा पुष्पैर्युक्तः; सुगन्धि गात्रं येषां, तैः सहितः; स्वयं च सुगन्धलिप्तः; विभूषितः कटककुण्डलादिभिः; तस्मिंश्च ॥ १९ ॥

**सत्ये स्थिते भूतहिते निविष्टे**
**क्षमान्विते क्रोधविवर्जिते च ।**
**[6]स्वकार्यदक्षे परकार्यदक्षे**
**कल्याणचित्ते च सदा विनीते ॥ २० ॥**

किंच सत्यवक्तरि; भूतानामविशेषेण हितः आयत्यां श्रेयस्करः; निविष्टः गृहस्थः; क्षमा सहिष्णुत्वं, तद्युक्ते; क्रोधः असहिष्णुत्वं, तद्रहिते; स्वपरकार्योद्युक्ते; कल्याणं मङ्गलाशंसि चित्तं यस्य; सदा परस्याविनयेऽपि स्वयं विनीतः; तस्मिंश्च ॥ २० ॥

**नारीषु नित्यं सुविभूषितासु**
**पतिव्रतासु प्रियवादिनीषु ।**
**अमुक्तहस्तासु सुतान्वितासु**
**सुगुप्तभाण्डासु बलिप्रियासु ॥ २१ ॥**

[7]नारीविशेषानाह । नानाविधभूषणभूषितासु नारीषु, पतिव्रतपरासु, प्रियवचनशीलासु, वलयाद्यशून्यहस्तासु व्ययपराङ्मुखीषु वा, पुत्रवतीषु, गृहभाण्डगोपनपरासु, गृहाङ्गणादौ रङ्गबलिकुशलासु च ॥ २१ ॥

1 कर्मोत्कटे—घ. 2 वात्यशनात्—घ.
3 पात्रे—ज. 4 नित्यानुलिप्ते—ज.
5 कर्मोत्कटः—घ 6 सुसंयतात्मे—ज. 7 अवशिष्टानाह—घ.

**संमृष्टवेश्मासु जितेन्द्रियासु**
**कलिव्यपेतास्वविलोलुपासु ।**
**धर्मव्यपेक्षासु दयान्वितासु**
**स्थिता सदाहं मधुसूदने च ॥ २२ ॥**
**निमेषमात्रं च विना कृताहं**
**न जातु तिष्ठे पुरुषोत्तमेन ॥ २३ ॥**

**इति [1]श्रीविष्णुस्मृतौ एकोनशततमोऽध्यायः**

किंच संमृष्टानि मार्जनलेपनादिभिः संस्कृतानि वेश्मानि याभिस्ताः; जितेन्द्रियाः बाह्याभ्यन्तरेन्द्रियसंयमिन्यः; कलहपराङ्मुख्यः; नित्यतृप्तस्वभावाः; धर्मे विशिष्टा अपेक्षा यासां ताः; दयया भूतकृपया युक्ताः; तादृशीषु यावदुक्तनिमित्तसद्भावमेव अहं स्थिता। मधुसूदने तु सदा नित्यमेव ॥ २२ ॥

तत्र हेतुमाह । एवं च पुरुषोत्तमरहिता कदाप्यहं निमेषमात्रमपि न तिष्ठामि ॥ २३ ॥

इति [2]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारि[3]श्रीरामपण्डितात्मज-[3]श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्याम् एकोनशततमोऽध्यायः

[1] वैष्णवे धर्मशास्त्रे एकोनशततमं प्रकरणम्—ज.

[2] श्रीविष्णुस्मृतिविवृती श्रीमत्यां वैजयन्त्याम् एकोनशततमोऽध्यायः—घ, च.

[3] श्री omitted in ग.

# शततमोऽध्यायः

**धर्मशास्त्रमिदं श्रेष्ठं स्वयं देवेन भाषितम् ।**
**ये द्विजा धारयिष्यन्ति तेषां [1]स्वर्गे गतिः परा ॥ १ ॥**

भगवदुपदिष्टस्य शास्त्रस्याध्ययनादौ फलविशेषं शततमेनाह । मन्वादिप्रणीतेषु अष्टादशसु [2]धर्मशास्त्रेषु, जाबाल्यादिप्रणीतेषु अष्टादशसु, वसिष्ठादिप्रणीतेषु एकविंशतिधर्मशास्त्रेषु इदं धर्मशास्त्रं श्रेष्ठं सर्वोत्कृष्टम्; यतः देवेन भगवता विष्णुना स्वयमेव[3] साक्षात् भाषितम् उपदिष्टम्; नान्यद्वारा मनुनेव भृगुमुखेन । अयमाशयः—मन्वादीनां मनुष्यत्वेन भगवदायत्ततया पराधीनस्फूर्तिकत्वात् न स्वातन्त्र्येण सर्वज्ञत्वम् । भगवतस्तु नित्यनिर्दोषाववोधरूपस्यापरोक्षसर्वश्रुतिकस्यासंदिग्धाविपर्यस्ततत्तात्पर्यविवेकस्य स्वत एव सार्वज्ञ्यमिति तत्प्रणीतस्यास्य शास्त्रस्यान्येभ्योऽतिशयितत्वं युक्तमेव । अतश्च तच्छास्त्रं ये द्विजाः त्रैवर्णिकाः, [4]न शूद्राः, स्वयमन्यैर्वा धारयिष्यन्ति, तेषां स्वर्लोके यागादिजन्यस्वर्गात् परा अतिशयिना गतिः स्थितिः[5] भवति ॥ १ ॥

**इदं पवित्रं मङ्गल्यं स्वर्ग्यमायुष्यमेव च ।**
**ज्ञानं चैव यशस्यं च [6]धनसौभाग्यवर्धनम् ॥ २ ॥**

फलान्तराण्याह । पवेः वज्रात् [7]नरकरूपात् त्राणम् इति पवित्रं पावनम्; पापक्षयकरमिति यावत् । मङ्गलं कल्याणम्; तद्धेतुः । स्वर्ग्यं स्वर्गजनकम् । आयुष्यम् आयुर्वर्धनम् । ज्ञानम्; ज्ञायते पुरुषार्थ-[8]चतुष्टयमनेनेति । यशस्यं यशोजनकम् । धनसौभाग्ययोर्वर्धनम् अतिशयहेतुः । एषां फलानां साधनमिदमिति फलद्वारा स्तुतिरपि ॥ २ ॥

**अध्येतव्यं धारणीयं [9]श्राव्यं श्रोतव्यमेव च ।**
**श्राद्धेषु श्रावणीयं च भूतिकामैर्नरैः सदा ॥ ३ ॥**

[1] धर्मे गतिर्ध्रुवा—ज.
[2] धर्म omitted in घ.
[3] एव omitted in घ.
[4] न शूद्राः omitted in घ.
[5] मर्यादास्थितिः added in घ.
[6] बल for धन—ज.
[7] नरकादि—ख, ग, च.
[8] चतुष्कम्—घ.
[9] श्राद्धं—ज.

किंचास्य अध्ययनधारणश्रावणश्रवणानि सर्वाधिकभूतिसाधनानीति पुरुषार्थत्वम्; श्राद्धे श्रावणीयत्वेन क्रत्वर्थत्वं चेति। यद्वा अध्ययनादीनि फलाश्रवणात् नित्यानि। श्राद्धे श्रावणेन भूतिस्तु काम्यफलम्[1] ॥ ३ ॥

**[2]य इदं पठते नित्यं भूतिकामो नरः सदा।**
**इदं रहस्यं परमं कथितं [3]च धरे तव ॥ ४ ॥**
**मया प्रसन्नेन जगद्धितार्थं**
**सौभाग्यमेतत् परमं यशस्यम्[4]।**
**दुःस्वप्ननाशं बहुपुण्ययुक्तं**
**शिवालयं शाश्वतधर्मशास्त्रम् ॥ ५ ॥**

**इति [5]श्रीविष्णुस्मृतौ शततमोऽध्यायः**

इदानीं तस्यैव नित्यकाम्यत्वमाह। यो नरः त्रैवर्णिकः पुमान्; न स्त्री, इदं शास्त्रं नित्यं पठति, स सदा भूतिभिः काम्यते। फलवाक्यानामपि शास्त्रान्तर्भावात् पुनः इदंशब्देन परामर्शः। इदं शाश्वतं कूटस्थतया प्रवाहेण वा नित्यं धर्मप्रतिपादकं शास्त्रं [6]परमम् अत्यन्तं रहस्यं गोपनीयं जगतां हिताय प्रसन्नेन मया, हे धरे, तव तुभ्यं कथितम् ॥ ४ ॥

शास्त्रान्तरेभ्योऽतिशयाय विशिनष्टि। परमं सौभाग्यं सौभाग्यहेतुः यशस्यं यशोजनकं दुःस्वप्ननाशनं बहुना पुण्येन धर्मेण प्रतिपाद्येन युक्तं, बहुपुण्यजनकं वा, शिवस्य कल्याणस्यालयं स्थानमिति ॥ ५ ॥

श्रीमत्केशवनायकक्षितिपतिप्रोत्साहितेनारचि
श्रीमद्रामसुतेन नन्दविदुषा धर्माधिकाराश्रयात्।
श्रीविष्णुस्मृतिगूढभावविवृतिः श्रीवैजयन्ती मुदे
श्रीविष्णोर्हृदयंगमास्तु सततं विद्वद्भिरत्यादृता ॥ १ ॥
धर्माधिकारिकुलकैरवकाननेन्दुः
श्रीरामपण्डितसुतः स्मृतिवैजयन्तीम्।
श्रीनन्दपण्डितकृती विवृतिं मनोज्ञां
विष्णुस्मृतेरकृत केशवकीर्तिकामः ॥ २ ॥

[1] गुणफलम्—ख, ग.
[2] Verses 4 and 5 omitted in ज.
[3] वसुधे—घ.
[4] पवित्रम्—घ.
[5] श्रीवैष्णवधर्मशास्त्रे परमरहस्ये शततमोऽध्यायः—घ, च; वैष्णवे धर्मशास्त्रे शततमं प्रकरणम्—ज,
[6] परं—घ.

स्मृतिगुणमनु विष्णोर्वैजयन्ती विचित्रै-
विविधवचनपुष्पैर्गुम्भिता साधु भक्त्या ।
बुधमधुकरसंघैः कृष्णभूषायितैषा
जनयतु मुदमन्तः श्रीहरेः श्रीरिवान्या ॥ ३ ॥
उच्चावचेषु विषयेषु परिभ्रमन्ती
गौश्चेदियं स्खलति कुत्रचिदप्यगाधे ।
सन्तः स्वधर्ममनुरुध्य निरुध्य चेर्ष्या-
मुद्धर्तुमेव तदिमां तरसा यतध्वम् ॥ ४ ॥
भो सन्तः सहसा मयाञ्जलिरयं बद्धोऽस्ति वः प्रार्थने
शीलं स्वं न जहाति दूषणकृते यस्मात् खलानां मनः ।
तत् तद्दूषणदूषणाय बहुधा मद्भूषणाय स्वकं
चेतो धावदलं भवद्भिरमलं नावर्तनीयं मनाक् ॥ ५ ॥

इति [1]श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहितश्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां
शततमोऽध्यायः

[1] धर्माधिकारिरामपण्डितात्मजनन्दपण्डितकृतौ विष्णुस्मृतिविवृतौ श्रीमत्यां वैजयन्त्यां शततमोऽध्यायः समाप्तः
पराशरस्मृतिटीका विद्वन्मनोहरा स्मृतिसिन्धुः ।
श्राद्धकल्पलता चैता नन्दपण्डितकृतटीकाः ॥
श्रीविष्णुस्मृत्युत्तरार्धः समाप्तोऽयम्—ख, ग.

## [1]उत्तरचरितम्

इयदवधि भवद्भिः पण्डिता जीवनोत्थं

कुतुकममृतधारासारभागन्वभावि ।

शिवशिवशिवभावे जायमाने यदासीत्

कलयत तदिदानीं कौतुकं केशवस्य ॥ १ ॥

श्रीमत्केशवनायकस्य कविभिर्भाग्यं कियद्वर्ण्यतां

यन्मोक्षावसरे सुरैः सुरतरूद्भूतैः प्रसूनैः शुभैः ।

आकीर्णा मणिकर्णिका सकलका तीरे सनीरे जनैः

प्रत्यक्षेण विभाविता वदति तत्कर्णे शिवे तारकम् ॥ २ ॥

नैवैतद्वामदेवे प्रविशति परमं ब्रह्म चित्रं शुके वा

जैगीषव्ये मुनौ वा जनकसनकयोर्वापि दृष्टं श्रुतं वा ।

वाराणस्यां यदासीत् सुरसरिति मणीकर्णिकायां गिरीशे

कर्णे ब्रह्मोपदेशं विदधति सहजानन्दिनः केशवस्य ॥ ३ ॥

विद्वांसः परिभावयन्तु मनसस्तोषाय पोषाय च

स्वेष्टानां जनुषार्जितस्य सकलस्याघस्य शोषाय च ।

कोशायाद्भुतहेमरत्ननिवहस्यामूल्दारिद्र्यरु-

ग्मोषाय क्षितिरत्नकेशवतनुत्यागोद्भवं कौतुकम् ॥ ४ ॥

द्राक्षातोऽपि सितारसादपि सुधासारादपि प्रायशो

वैलक्षण्यमतीव केशवकथामाधुर्य उन्नीयते ।

यज्जामित्वमिदं तनोति सततं संसेव्यमानं त्रयं

स्वादं स्वादमनारतं पुनरमुत्रौत्कण्ठ्यमुज्जृम्भते ॥ ५ ॥

औदार्यं पश्यतेमाममरपरिबृढस्यौचितीं वापि लोके

त्रैलोक्यस्याधिपत्यं वहति मखमुखेष्वग्र्यतां पूज्यतां यः ।

[1] The MSS. ख and ग add the following portion (pp. 898 to 901) after the colophon of the 100th chapter of the *Vaijayantī*.

येनाशेषापि पृथ्वी जलनिधिपरिखा पूरिता स्वर्णवृष्ट्या
तम्मण्णस्यास्य मुक्तावुपदिशति हरे पुष्पवर्षं चकार ॥ ६ ॥
विद्वांसः सुभगत्वमस्य जनुषो दृष्टं यदद्यावधि
प्राप्तं यन्मणिकर्णिकापरिसरः श्रेयश्च विश्वेश्वरात् ।
स्पर्धेते तदुभे परस्परमदोधन्यत्वनिर्णायकं
न्याय्यं वापि वचोऽपि वा स्मृतिगतं सम्यक् समालोच्यताम् ॥ ७ ॥
आत्मानं बहुमन्यतेऽस्य मरणाद्धर्मार्थकामार्जनै-
राकल्पं क्षितिमण्डले च यशसो विस्तारणाज्जीवनम् ।
कैवल्यप्रतिपादनेन मरणं संश्लाघते जीवनात्
तम्मण्णस्य बुधा वधार्य गुरुता निश्चीयतामेतयोः ॥ ८ ॥
धर्मो येन जगत्सु षोडशमहादानादिकैः संचितो
येनार्थस्य समर्थतापि गदिता तैरेव दानैः परा ।
कामो वावरसाकणप्रभृतिभिः पुत्रैः शुभैः स्थापितो
मोक्षः श्रीमणिकर्णिकाभुवि तनुत्यागेन संपादितः ॥ ९ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंसश्रीकोण्डपनायकात्मजश्रीतम्मणनायकापरनामधेय-
श्रीकेशवनायकप्रोत्साहित[1]श्रीवाराणसीवासिधर्माधिकारिश्रीरामपण्डितात्मज-
श्रीनन्दपण्डितकृतौ श्रीविष्णुस्मृतिविवृतौ श्रीमत्यां [2]केशववैजयन्त्याम्
[3]एकशततमोऽध्यायः

[1] श्री omitted in ग.  [2] वैजयन्त्याम्—ग.  [3] शततमोऽध्यायः—ग.

## प्रकीर्णकम्

विद्वांसः स्मृतिशास्त्रतत्त्वमखिलं ज्ञात्वा वचोभिः स्मृते-
व्याख्यां मे यदि दूषयेयुरमलां तद्भूषणं मत्कृतेः ।
युद्धे चेत् परवीरशस्त्रविहितान् गाढप्रहारांस्तनौ
प्राप्नोति क्षतशत्रुरुद्भटभटः शोभैव सा तत्तनोः ॥ १ ॥
द्वित्राश्चेदीर्ष्यया मत्कृतिममलपदामर्थसंदोहगुर्वी
नेक्षिष्यन्ते तदानीं मम वदत बुधाः का क्षतिस्तत्क्षतिः सा ।
नेक्षन्ते चेदुलूकाः सकलजनतमःस्तोमविध्वंसदीपं
मार्तण्डं दीप्तिभाण्डं ननु भवति तदा का क्षतिः सप्तसप्तेः ॥ २ ॥
तीर्थं **काशी**समानं त्रिभुवनविषये नापरं भूपतिर्वा
भूलोके **केशवस्य** श्रयति न तुलनां नापि **विष्णुस्मृतेर्वा** ।
शास्त्रं धर्माभिधायि त्रयमपि जयतादार्कमाचन्द्रतारं
श्रीमान् धर्माधिकारी तदनु विजयतां पण्डितो **नन्दशर्मा** ॥ ३ ॥

**अथ ताराचन्द्रचक्रवर्तिनः—**

पूर्वं **तम्मण**भावतो न विधिवद् दत्ता द्विजेभ्यो मया
भूतिर्भूतपतिर्विचिन्त्य किमिति प्रादुर्बभौ भूतले ।
लक्ष्मीं वेदविधानतः प्रतिदिनं विप्रेषु संपादयन्
श्रीमान् **वावरसा**भिधो विजयते साक्षादयं शंकरः ॥ १ ॥
कलौ **वावरसा**दन्यो वदान्यो न महीतले ।
**श्रीनन्दपण्डिता**दन्यो विद्वान् गण्यो न जातुचित् ॥ २ ॥
यथा विष्णोर्न तुलनामेति कोऽपि सुरोत्तमः ।
तथैतयोर्न तुलनामेति कोऽपि नरोत्तमः ॥ ३ ॥
दातृत्वं यद**नन्तस्य** पाण्डित्यं **नन्दशर्मणः** ।
एतयोर्नान्यगामित्वे दुर्निवारा जनश्रुतिः ॥ ४ ॥

तत् कृतं यन्न केनापि तद् दत्तं यन्न केनचित् ।
काश्यां **वावरसाख्येन** दात्रा दीनार्तिहारिणा ॥ ५ ॥
भारतस्य यथा कर्ता व्यासो ढुण्ढिश्च लेखकः ।
तथैतस्याः स्मृतेः कर्ता लेखकश्च विभाव्यताम् ॥ ६ ॥

वर्षे विक्रमभास्करस्य गणिते नन्दाद्रिषड्भूमिभिः (१६७९.)
पूर्णे कार्त्तिकमासि वृश्चिकगते भानौ वृषस्थे विधौ ।
काश्यां **केशवनायकस्य** नृपतेराज्ञामवाप्य **स्मृते-**
**र्विष्णोर्व्या**कृतिमाचकार विमलां **श्रीनन्दशर्मा** सुधीः ॥ ७ ॥

इति श्रीमन्महाराजाधिराजश्रीवसिष्ठवंशावतंस**श्रीकोण्डपनायका**त्मज**श्रीतम्मणनायका**परनामधेय-**श्रीकेशवनायक**प्रोत्साहित**श्रीवाराणसी**वासिश्रीधर्माधिकारि**श्रीरामपण्डिता**त्मज-**श्रीनन्दपण्डित**कृतौ **श्रीविष्णुस्मृति**विवृतिः **श्रीमती केशववैजयन्ती** समाप्ता

इति श्रीविष्णुस्मृतिव्याख्या वैजयन्ती

## INDEX I

# सूत्राणामनुक्रमणी

**INDEX II**

# [1]सौत्रपदानामनुक्रमणी



[1] This Index contains only some selected words of the Sūtra-s.

## INDEX III

# सूत्रोदाहृतमन्त्राणामनुक्रमणी

## INDEX IV

# व्याख्योदाहृतप्रमाणानां नामानुक्रमणी

**INDEX V**

# व्याख्योदाहृतप्रमाणवाक्यानामनुक्रमणी

# ADDENDA AND CORRIGENDA

## Additions to Index IV

## Errata

| page | line | | page | line | |
|---|---|---|---|---|---|
| १६ | २६ | तैरेव | ३४७ | १६ | स्वधा |
| १६ | ४ | वेदः | ४०६ | २१ | तावन्मात्रेण |
| ३४ | ४ | भूमि | ४८१ | १४ | भागिनेयी |
| ३४ | n. 4 | धर्मविशेषा—ग. | ५१३ | १४ | प्रायः पापं |
| ४६ | n. 2 | अन्यान्येष्वपि—ख to घ. | ५२३ | ९ | व्यतिरिक्ताः |
| ४८ | n. 2 | omit ज. | ५५५ | १६ | वेश्यावधे |
| ६९ | १० | भ्रुकुटी | ५५५ | १७ | वेश्यां |
| ६९ | n. 1 | omit ज. | ५५८ | ४ | श्वेतः |
| ८२ | २ | उशना | ५७० | २१ | औष्ट्रं |
| १३४ | ५ | श्रेयंश्चेत् | ५९४ | २० | भोज्यपान |
| १४२ | २१ | प्रत्येकं | ६३२ | २० | उष्ट्रयानं |
| १५४ | ८ | दशगुणं | ७५४ | १६ | विप्राहिक्षत्रिया |
| १९२ | ५ | अलुप्तक्रमाक्षरं | ७८३ | १४ | आर्यमणे |
| २१७ | १२ | तेषां च | ८३३ | १७ | यदीच्छेत् |
| २३४ | २४ | शङ्खलिखितौ | ८८९ | १ | सर्वां |
| २६९ | २२ | पुत्रिणी | ९५१ | ४ | हारीतः |
| २७० | २२ | एवमेव करिष्यावो | ९५८ | २६ | नार., 122, 312 |
| ३०८ | ३ | बृहस्पतिः | ९८६ | ३४ | बृहद्यम |
| ३३४ | २ | मासः | | | |